॥ श्रीः ॥

# लघुसिद्धान्तकौमुदीविषयाऽनुक्रमणिका ।



# लघुकौमुदीविषयानुक्रमणिका।



इति विषयानुक्रमणिका।

॥ श्रीगणेशाय नमः ॥

लघुसिद्धान्तकौमुदीस्थो धातुपाठः प्रायः ।

# गणेष्वनिर्दिष्टानामुत्तरत्रोदाहृतानां च धातूनामर्थगणादिप्रकाशकपत्रम् ।



**अद्** गतौ याचने च ( भ्वादिः—परस्मैपदी—सेट् )
**अव** रक्षणे ( भ्वा० प० से० )
**अशूङ्** व्याप्तौ ( स्वा० आत्मेनपदी—से० )
**ऋ** गतौ ( भ्वा० प० अनिट् )
**ऋ** गतौ ( जु० प० अ० )
**एजृ** दीप्तौ ( भ्वा० आ० से० )
**एजृ** कम्पने ( भ्वा० प० से० )
**ओणृ** अपनयने ( भ्वा० प० से० )
**कुट्ट** छेदनभर्त्सनयोः ( चु० प० से० )
**क्षिप** प्रेरणे ( तु० उभयपदी—अ० )
**कृत** संशब्दने ( चु० प० से० )
**क्षै** क्षये ( भ्वा० प० अ० )
**[illegible]नु** अवदारणे ( भ्वा० उ० से० )
**[illegible]ट** चेष्टायाम् ( भ्वा० आ० से० )
**चर** गतिभक्षणयोः ( भ्वा० प० से० )
**चकासृ** दीप्तौ ( अ० प० से० )
**छद** अपवारणे ( चु० उ० से० )
**जि** जये ( भ्वा० प० अ० )
**जप** व्यक्तायां वाचि ( भ्वा० प० से०

**जल्प** व्यक्तायां वाचि ( भ्वा० प० से० )
**ज्वर** रोगे ( भ्वा० प० से० )
**जक्ष** भक्षहसनयोः ( अ० प० से० )
**जागृ** निद्राक्षये ( अ० प० से० )
**ज्या** वयोहानौ ( क्र्या० प० अ० )
**ज्ञप** ज्ञाने ज्ञापने च ( चु० उ० से० )
**ञित्वरा** संभ्रमे ( भ्वा० आ० से० )
**दाण्** दाने ( भ्वा० प० अ० )
**दंश** दशने ( भ्वा० प० अ० )
**दरिद्रा** दुर्गतौ ( अ० प० से० )
**दृशिर्** प्रेक्षणे ( भ्वा० प० अ० )
**दण्ड** दण्डनिपातने ( चु० उ० से० )
**दृह** हिंसायाम् ( भ्वा० प० से० )
**धुर्वी** हिंसायाम् ( भ्वा० प० से० )
**पठ** व्यक्तायां वाचि ( भ्वा० प० से० )
**पत्लृ** पतने ( भ्वा० प० से० )
**भुड्** गतौ ( भ्वा० आ० से० )
**भ्रंशु** अधःपतने ( भ्वा० आ० से० )
**भास** दीप्तौ ( भ्वा० आ० से० )
**भिक्ष याचने** ( भ्वा० आ० से० )

---

१ अयम् 'अपश्यती' इति जाम्बवतीविजये नुमोऽकरणात्तुदादिष्वप्यस्तीत्यनुमीयते ॥ वयं तु ब्रूमः--नित्यप्रहसितो नित्यप्रजल्पित इतिवन्नित्यशब्दस्य प्रायः समानार्थत्वेन नित्यपदघटितविधीनां प्रायिकत्वमेवेति न कोपि दोषः ॥

**भ्राजृ** दीप्तौ ( भ्वा० आ० से० )
**मत्रि** गुप्तभाषणे ( चु० प० से० )
**मव** बन्धने ( भ्वा० आ० से० )
**मन्थ** विलोडने ( क्र्या० प० से० )
**मन** ज्ञाने ( दि० आ० अ० )
**मा** माने ( अ० प० अ० )
**मृजूष्** शुद्धौ ( अ० प० से० )
**यती** प्रयत्ने ( भ्वा० आ० से० )
**टुयाचृ** याचने ( भ्वा० उ० से० )
**युध** संप्रहारे ( दि० आ० अ० )
**रमु** क्रीडायाम् ( भ्वा० आ० अ० )
**रञ्ज** रागे ( भ्वा० उ० अ० )
**रिष्** हिंसायाम् ( दि० प० से० )
**रुष्** हिंसायाम् ( दि० प० से० )
**डुलभष्** प्राप्तौ ( भ्वा० आ० अ० )
**लुठि** स्तेये ( भ्वा० प० से० )
**वच्** परिभाषणे ( अ० प० अ० )
**वस** निवासे ( भ्वा० प० अ० )
**वद्** व्यक्तायां वाचि ( भ्वा० प० से० )
**टुवप्** छदनबीजसंतानयोः ( भ्वा० उ० अ०
**टुवेपृ** कम्पने ( भ्वा० आ० से० )
**विच्छ** गतौ ( तु० प० से० )
**टुओश्वि** गतिवृद्ध्योः ( भ्वा० प० से० )

**शप** आक्रोशे ( भ्वा० उ० अ० )
**शसु** हिंसायाम् ( भ्वा० प० से० )
**शासु** अनुशिष्टौ ( अ० प० से० )
**शॄ** हिंसायाम् ( क्र्या० प० से० )
**शंसु** स्तुतौ ( भ्वा० प० से० )
**षिञ्** बन्धने ( स्वा० उ० अ० )
**साध** संसिद्धौ ( स्वा० उ० अ० )
**स्रिवु** गतिशोषणयोः ( दि० प० अ० )
ष्टुञ् स्तुतौ ( अ० उ० अ० )
**ष्ठा** गतिनिवृत्तौ ( भ्वा० प० अ० )
**स्मृ** स्मरणे ( भ्वा० प० अ० )
**स्वद्** आस्वादने ( भ्वा० प० से० )
**ञिष्वप्** शये ( अ० प० अ० )
**षह्** मर्षणे ( भ्वा० प० अ० )
**हसे** हसने ( भ्वा० प० से० )
**हि** गतौ ( स्वा० प० अ० )

इति धातुपाठः ।

## अथ प्रत्याहाराः ।

१ **अण्**—अ इ उ ।
२ **अक्**—अ इ उ ऋ ऌ ।
३ **अच्**—अ इ उ ऋ ऌ ए ओ ऐ औ ।
४ **अट्**—अ इ उ ऋ ऌ ए ओ ऐ औ ह य व र ।
५ **अण्**—अ इ उ ऋ ऌ ए ओ ऐ औ ह य व र ल ।
६ **अम्**—अ इ उ ऋ ऌ ए ओ ऐ औ ह य व र ल ञ म ङ ण न ।

७ अश्—अ इ उ ऋ ऌ ए ओ ऐ औ ह य व र ल ञ म ण न झ भ घ ढ ध ज ब ग ड द ।

८ अल्—अ इ उ ऋ ऌ ए ओ ऐ औ ह य व र ल ञ म ङ ण भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स

९ इक्—इ उ ऋ ऌ ।

१० इच्—इ उ ऋ ऌ ए ओ ऐ औ ।

११ इण्—इ उ ऋ ऌ ए ओ ऐ औ ह य व र ल ।

१२ उक्—उ ऋ ऌ

१३ एङ्—ए ओ ।

१४ एच्—ए ओ ऐ औ ।

१५ ऐच्—ऐ औ ।

१६ हश्—ह य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड

१७ हल्—ह य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ड द ख फ छ ठ थ च ट त क प श ष स ह ।

१८ यण्—य व र ल ।

१९ यम्—य व र ल ञ म ङ ण न ।

२० यञ्—य व र ल ञ म ङ ण न झ भ ।

२१ यय्—य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब द ख फ छ ठ थ च ट त क प ।

२२ यर्—य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ख फ छ ठ थ च ट त क प श ष स ।

२३ वश्—व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड

२४ वल्—व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग

ख फ छ ठ थ च ट त क प श ष स ह।

२५ **रल्**—र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स ह।

२६ **मय्**—म ङ ण न झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प।

२७ **ङम्**—ङ ण न।

२८ **झष्**—झ भ घ ढ ध।

२९ **झश्**—झ भ घ ढ ध ज ब ग ड द।

३० **झय्**—झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प।

३१ **झर्**—झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स।

३२ **झल्**—झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स ह।

३३ **भष्**—भ घ ढ ध।

३४ **जश्**—ज ब ग ड द।

३५ **बश्**—ब ग ड द।

३६ **खय्**—ख फ छ ठ थ च ट त क प।

३७ **खर्**—ख फ छ ठ थ च ट त क प श ष स।

३८ **छव्**—छ ठ थ च ट त।

३९ **चय्**—च ट त क प।

४० **चर्**—च ट त क प श ष स।

४१ **शर्**—श ष स।

४२ **शल्**—श ष स ह। इति प्रत्याहाराः।

१२ पृष्ठ २ पंक्ति १२ पृष्ठ पंक्ति ९ टिप्पणीभूतमिदम् ।।

| १ वर्णभेदज्ञापकचक्रमिदम् । | | | |
|---|---|---|---|
| अक्षराणि | अ इ उ ऋ ऌ | अ इ उ ऋ ए ओ ऐ औ | अ इ उ ऋ ऌ ए ओ ऐ औ |
| भेदाः | ह्रस्वोदात्तानुनासिकः | दीर्घोदात्तानुनासिकः | प्लुतोदात्तानुनासिकः |
| | ह्रस्वोदात्ताननुनासिकः | दीर्घोदात्ताननुनासिकः | प्लुतोदात्ताननुनासिकः |
| | ह्रस्वानुदात्तानुनासिकः | दीर्घानुदात्तानुनासिकः | प्लुतानुदात्तानुनासिकः |
| | ह्रस्वानुदात्ताननुनासिकः | दीर्घानुदात्ताननुनासिकः | प्लुतानुदात्ताननुनासिकः |
| | ह्रस्वस्वरितानुनासिकः | दीर्घस्वरितानुनासिकः | प्लुतस्वरितानुनासिकः |
| | ह्रस्वस्वरिताननुनासिकः | दीर्घस्वरिताननुनासिकः | प्लुतस्वरिताननुनासिकः |

## २ प्रयत्नज्ञापकचक्रमिदम् ।

| बाह्याः | विवार श्वास अघोष अल्पप्राण | विवार श्वास अघोष महाप्राण | | संवार नाद घोष अल्पप्राण | | | | संवार नाद घोष महाप्राण | |
|---|---|---|---|---|---|---|---|---|---|
| | | | | | उदात्त अनुदात्त स्वरित | | | | |
| अक्षराणि | क च ट त प | ख छ ठ थ फ | श ष स | ग ङ ज ञ ड ण द न ब म | अ | इ ए उ ओ ऋ ऐ ऌ औ | य व र ल | घ झ ढ ध भ | ह |
| आभ्यन्तर-प्रयत्नाः | स्पृष्ट | | ईषद्विवृत | स्पृष्ट | ह्रस्वस्तु संवृतः प्रयोगे | विवृत | ईषत्स्पृष्ट | स्पृष्ट | ईषद्विवृत |

श्रीः ।

श्रीदाधिमथी जयति ।

# अथ लघुसिद्धान्तकौमुदी ।

श्रीदाधिमथी जयति ।

दिधिर्भक्तजनान्धात्री मथी तदरिमाथिनी।
देवी दधिमथी नाम धन्वदेशे विराजते ॥

नागौर २२
मूंडवा २०
खजवाना २७
डेगाना
फुलेरालाईन
जोधपुरलाईन
श्रीदधिमथीमन्दिरम्
रूण
बडावर
खाटू

यत्क्षेपजाता जगतीतले जना गच्छन्त्यमी दाधिमथाख्यया प्रथाम् ।
देवैः स्तुता श्रीदाधिमथ्यनारतं सोपासकानां विजयं सदा क्रियात् ॥

नत्वा सरस्वतीं देवीं शुद्धां[1] गुण्यां[2] करोम्यहम् ॥
पाणिनीयप्रवेशाय[3] लघुसिद्धान्तकौमुदीम् ॥ १ ॥

**अइउण्[4] १ । ऋऌक् २ । एओङ् ३ । ऐऔच् ४ । हयवरट्[5] ५ । लण्[6] ६ । ञमङणनम् ७ । झभञ् ८ । घढधष् ९ । जबगडदश् १० । खफछठथचटतव् ११ । कपय् १२ शषसर् १३ । हल्[7] १४ ॥** इति माहेश्व-

---

नत्वा दधिमथीं देवीं **शिवदत्तः** समासतः ।
प्रार्थितः **क्षेमराजेन** टिप्पणीं कर्तुमुद्यतः ॥
आरब्धां गुरुभी रम्यां शिवनारायणः सुधीः ।
टिप्पणीं बालबोधार्थं वर्द्धयत्यनुरोधतः ॥

**१ विकाररहिताम्** ॥ २ प्रशस्तगुणयुताम् ॥ ३ पाणिनीयस्य **पाणिनिगोत्र-जाह्निकमुनि**प्रणीतव्याकरणस्य बालबुद्धौ प्रवेशाय '**महो देवो मर्त्या आविवेश**' इति महाभाष्यधृतश्रुतेः ॥ ४ अत्र संहिताया अविवक्षया न संहिताकार्यम् ॥ ५ अत्र हकारोपदेशस्तु अट्-अश्-हश्-इण्-ग्रहणेषु हकारस्य ग्रहणार्थः । तेन हकारव्यवधानेऽपि "**अड्व्यवाये**" इत्यनेन 'अर्हाणाम्' इत्यादौ णत्वस्य हकारे परेऽपि "**भोभगो-**" इत्यनेन अश्परकत्वनिमित्तकस्य 'हंसा हसन्ति' इत्यत्र रोर्यत्वस्य, "**हशि च**" इत्यनेन हश्निमित्तस्य रोः स्थान उत्वस्य, "**विभाषेटः**" इति इण्निमित्तकस्य 'लिलिहिढ्वे' इत्यत्र ढत्वविकल्पस्य सिद्धिः ॥ ६ अत्रापि णकारानुबन्धयोजनं '**व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहादलक्षणम्**' इति परिभाषाव्यञ्जनाय ॥ ७ अत्रापि पुनर्हकारः 'रुदिहि' इत्यत्र "**रुदादिभ्यः सार्वधातुके**" इत्यनेन हकारस्य वल्त्वमाश्रित्य इडागमाय, "**रलो व्युपधात्**" इत्यनेन 'स्नेहित्वा' इत्यत्र हकारस्य रल्त्वमाश्रित्य क्त्वः कित्त्वविकल्पाय, "**झलो झलि**" इत्यनेन-

राणि सूत्राण्यणादिसंज्ञार्थानि । एषामन्त्या इतः । हकारादिष्वकार उच्चारणार्थः । लण्मध्ये त्वित्संज्ञकः ॥ **हलन्त्यम् १।३।८॥** उपदेशेऽन्त्यं हलित्स्यात् । उपदेश आद्योच्चारणम् । सूत्रेष्वदृष्टं पदं सूत्रान्तरादनु-

---

–'अदाग्धाम्' इत्यत्र हस्य झल्त्वमाश्रित्य सलोपाय, "**शल इगुपधात्**-" इत्यनेन 'अधुक्षत' इत्यत्र हस्य शल्त्वमाश्रित्य च्लेः क्सादेशायोपदिष्टः ॥

१ महेश्वरादागतानि । तथा चोक्तं शिक्षायाम्–'**येनाक्षरसमाम्नायमधिगम्य महेश्वरात् । कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥**' इति । अस्यां शिक्षायां प्रत्याहाराह्निकान्त्योपनिर्दिष्टायां '**सोयमक्षरसमाम्नायः**'-इति श्रुतौ स्मृतौ वा समाम्नायपदेनात्र वेदत्वं सूचितम् ॥ यद्वा महेश्वरेण कृताः माहेश्वरा अनुबन्धाः, ते सन्ति यत्रेति "**अर्श आदिभ्योऽच्**" माहेश्वराणि महेश्वरोपयोजितानुबन्धभूतणकारादिचतुर्दशवर्णयुक्तानि–इति ॥ तथा चोक्तं नन्दिकेश्वरकाशिकायाम्–'**अत्र सर्वत्र सूत्रेषु अनुबन्धचतुर्दशम् । धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये**' ॥ इति ॥ २ अणादिसञ्ज्ञास्तु पृष्ठे ४–६ षु दर्शिताः ॥ ३ चतुर्दशसूत्राणामित्यर्थः ॥ ४ ण–क–ङ–चादयश्चतुर्दश 'हलन्त्यम्' इति वक्ष्यमाणसूत्रेणेत्संज्ञका भवन्तीत्यर्थः ॥ ५ '**हयवरट्**' इत्यादिसूत्रस्थेषु ॥ ६ लण्सूत्रमध्ये योऽकारः स तु "उपदेशेऽच्"–इति वक्ष्यमाणसूत्रेणेत्संज्ञ इत्यर्थः । अत एव कैयटसंमतरप्रत्याहारसिद्धिः ॥ ७ "**उपदेशेऽजनुनासिक इत्**" इति सूत्राद् 'उपदेशे' 'इत्' इत्यनुवर्तते ॥ ८ आद्यमज्ञातस्वस्वरूपज्ञापकमुच्चारणं यत्र तद् अक्षरसमाम्नाय–धातुप्रातिपदिकप्रत्ययनिपातागमादेशरूपं व्यवसितपदार्थत्वेन भाष्योक्तमेव ग्राह्यम् ॥ ९ "**हलन्त्यम्**" इति सूत्रे उपदेशपदेत्पदयोरभावेन कथमुक्तार्थसिद्धिरत आह-**सूत्रेष्विति** ॥ १० अदृष्टम्–अविद्यमानम् सूत्रान्तरात्–अष्टाध्याय्यां पूर्वपठितादन्यसूत्रात् अनुवर्तनीयम्–अनुवृत्तिं कृत्वा ग्रहीतव्यम् । इयं रीतिर्यत्र श्रूयमाणपदैरेवेष्टार्थसिद्धिर्न भवेत् तत्र सर्वत्र ज्ञेया । अस्मात् सूत्रादिदं पदमनुवर्तते इति नास्माभिर्लिख्यते, ग्रन्थभूयस्त्वभयादिति भावः ॥

वर्तनीयं सर्वत्र ॥ **अदर्शनं लोपः १।१।६०** ॥ प्रसक्तस्यादर्शनं[1] लोपसंज्ञं स्यात् । **तस्य लोपः १।३।९** ॥ तस्येतो लोपः स्यात् । णादयोऽणाद्यर्थाः[2] । **आदिरन्त्येन सहेता १।१।७१**॥ अन्त्येनेता सहित आदिर्मध्यगानां[3] स्वस्य च संज्ञा स्यात् । यथाणिति अइउवर्णानां संज्ञा । एवमच्[4]हल्अलित्यादयः ॥ **ऊकालोऽज्झ्रस्वदीर्घप्लुतः[5] १।२।२७**॥ उश्च ऊश्च ऊ३श्च वः । वां काल इव कालो यस्य सोऽच् क्रमाद् ह्रस्वदीर्घप्लुतसंज्ञः स्यात् । स[6] प्रत्येकमुदात्तादिभेदेन त्रिधा[7] । **उच्चैरुदात्तः[8] १।२।२९** ॥ **नीचैरनुदात्तः[9] १।२।३०** ॥ **समाहारः[10] स्वरितः १।२।३१** ॥ स[11] नवविधोऽपि[12] प्रत्येकमनुनासिकत्वाननुनासिकत्वाभ्यां द्विधा ॥ **मुखनासिकावचनोऽनुनासिकः**

---

१ "**स्थानेऽन्तरतमः**" इति सूत्रात् 'स्थाने' पदमनुवर्तते इति भावः । विद्यमानस्येत्यर्थः । २ "उच्चरितप्रध्वंसिनोऽनुबन्धाः स्मर्यमाणाः सन्त एव कार्यं निर्वाहयन्ति" इति शब्दकौस्तुभोक्तमत्र वेद्यम् । ३ अत्र सूत्रे आदित्वमन्त्यत्वं च बुद्धिकल्पितसमुदायापेक्षमेव गृह्यते नतु सूत्रापेक्षम् । तेनेणादयो रप्रत्याहारश्च सिद्धः ॥ ४ ४-६ पृष्ठप्रदर्शितप्रत्याहारेषु प्रदर्शितम् ॥ ५ कुक्कुटरुते उकार एवैकमात्रद्विमात्रत्रिमात्रत्वस्य स्पष्टतयाऽभिव्यक्तिरतोऽकारादयो नोक्ताः ॥ ६ सः=प्राप्तह्रस्वादिसंज्ञकः । ७ वर्णभेदज्ञापकचक्रे ७, ८ पृष्ठयोः द्रष्टव्यम् ॥ ८ सभागेषु स्थानेषूर्ध्वभागनिष्पन्नोऽजुदात्तसंज्ञः ॥ ९ सभागेषु स्थानेष्वधोभागनिष्पन्नोऽजनुदात्तसंज्ञः ॥ १० उदात्तत्वानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन् सोऽच् स्वरितसंज्ञः॥ ११ सः=प्राप्तह्रस्वोदात्तादिसंज्ञकः ॥ १२ वर्णभेदज्ञाप

१।१।८॥मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात्। तदित्थम्—अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः। लृवर्णस्य द्वादश, तस्य दीर्घाभावात्। एचामपि द्वादश, तेषां ह्रस्वाभावात्॥

**तुल्यास्यप्रयत्नं सवर्णम् १।१।९॥** ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात्। (ऋऌवर्णयोर्मिथः सावर्ण्यं वाच्यम्) अकुहविसर्जनीयानां कण्ठः। इचुयशानां

---

—कचक्रं ७ पृष्ठे द्रष्टव्यम्। तत्रानुनासिकाननुनासिकपदयोगो हेयः॥ १ "ऊकालोऽज्" इत्यादिभिः सूत्रैः कृतानां संज्ञानां समावेशेन यज्जातम्, तद् इत्थं पर्यवसितम्॥ २ वर्णभेदज्ञापकचक्रं ७ पृष्ठे द्रष्टव्यम्। लृवर्णस्य एचां च द्वादशभेदज्ञानमपि तत्रैव द्रष्टव्यम्॥ ३ विवृतप्रयत्नस्येति बोध्यम्॥ ईषत्स्पृष्टप्रयत्नवतः लृवर्णस्य तु दीर्घत्वमप्यस्ति॥४ 'आस्ये भवानि स्थानानि। आस्येषु प्रयत्न आस्यप्रयत्नः स्थानान्तर्गतप्रयत्नः। तुल्य आस्यप्रयत्नो यस्य वर्णकदम्बकस्य तत्' इत्येवं भाष्यसूचितसमासफलितमर्थमाह—**ताल्वादिस्थानमिति**।ताल्लुन आदिःताल्वादिः कण्ठः, तालु आदिर्येषां ते ताल्वादयः। ताल्वादिश्च ताल्वादयश्च ताल्वादयः। एवं च कण्ठस्यापि ग्रहणं सिद्धम्॥५ स्थानभेदेनाप्राप्तसावर्ण्यं विधीयते,ऋकारस्य लृकारस्य च परस्परं सवर्णसंज्ञा वक्तव्या। अनित्यं चेदम् "ऋलृक्" इत्यत्र लृकारोपदेशसामर्थ्यात्॥ ६ कु—चु—टु—तु—पु—पदेन कवर्ग—चवर्ग—टवर्ग—तवर्ग—पवर्गस्थाः पञ्च पञ्च वर्णा ग्राह्याः॥ ७ कण्ठः कण्ठसमीपदेशश्चेत्यर्थः। तेन "जिह्वामूले तु कुः प्रोक्तः" इति शिक्षया न विरोधः। हकारोऽत्रासंयुत एव गृह्यते। "हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम्। उरस्यं तं विजानीयात्कण्ठ्यमाहुरसंयुतम्॥" इति शिक्षावचनात्। एवम् विसर्जनीयपदेन अकारात्परो विसर्जनीयो विवक्षितः। इकारादिभ्यः परस्तु पूर्वोक्तस्थानभाक्। यथा इकारात्परस्य तालुस्थानम्, उकारात्परस्योष्ठावित्यादि। "अयोगवाहा विज्ञेया आश्रयस्थानभा—

तालु । ऋटुरषाणां मूर्धा । लृतुलसानां दन्तौः । उपूपध्मानीयाना-मोष्ठौ । ञमङणनानां नासिका च[2] । एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तोष्ठम्[3] । जिह्वामूलीयस्य जिह्वामूलम् । नासिकाऽनुस्वारस्य ॥ यत्नो द्विधा । आभ्यन्तरो[4] बाह्यश्च । आद्यः पञ्चधा । स्पृष्टेषत्स्पृष्टेषद्विवृतविवृतसंवृतभेदात् । तत्र स्पृष्टं प्रयतनं स्पर्शानाम् । ईषत्स्पृष्टमन्तःस्थानाम् । ईषद्विवृतमूष्मणाम्[5] । विवृतं स्वराणाम् । ह्रस्वस्यावर्णस्य[6] प्रयोगे संवृतम् । प्रक्रियादशायां तु विवृतमेव । बाह्यप्रयत्नस्त्वेकादशधा । विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति[7] । खरो विवाराः श्वासा अघोषाश्च ।

---

-गिनः'' इति पाणिनीयशिक्षावाक्यादिति बोध्यम् ॥ १ दन्तजनिदिक्को देशः । तेन भग्नदन्तस्याप्युच्चारणं भवत्येव ॥ २ अत्र चकारेण स्वस्ववर्गस्थानकण्ठादिसंग्रहः । अत एव ' अङ्कितः ' इत्यादौ परककारसवर्णङकारसिद्धिः ॥ ३ वकारदन्त्यत्वं कैयटानुरोधेन । भाष्यकारस्तु ' उवोपोपध्मा ओष्ठे ' इति कात्यायनप्रातिशाख्योक्तमोष्ठ्यत्वमेव मन्यते । दन्तसंनिकृष्टावोष्ठौ स्थाने इत्यभिप्रायेण ' दन्त्यौष्ठ्यो वः ' इति शिक्षा ॥ ४ वर्णोत्पत्तेः प्राग्भावित्वम् आभ्यन्तरत्वम् । वर्णोत्पत्तेरूर्ध्वभावित्वं बाह्यत्वम् ॥ ५ भाष्यप्रदर्शितयोगविभागानुसारेणेदम् ॥ ६ ननु स्पृष्टादिभिश्चतुर्भिरेव प्रयत्नैः सकलवर्णानां कुक्षीकृतत्वात्संवृतेन कुत्र भाव्यमत आह-ह्रस्वेति । प्रयोगे=रामः कृष्णः इत्यादिपरिनिष्ठिते रूपे । ननु दण्डाढकमित्यादौ संवृतस्य=ह्रस्वाकारस्य विवृतेन दीर्घाकारेण सह प्रयत्नभेदात् सवर्णदीर्घो न स्यादत आह-प्रक्रियेति । साधनावस्थायामित्यर्थः । ७ उदात्तादयस्त्रयः केवलाचामेव बोध्याः

हशः संवारा नादा घोषाश्च । वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्प-प्राणाः । वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः । कादयो मावसानाः स्पर्शाः । यणोऽन्तःस्थाः । शल ऊष्माणः । अचः स्वराः । ≍ क ≍ ख इति कखाभ्यां प्रागर्धविसर्गसदृशो जिह्वामूलीयः । ≍ प ≍ फ इति पफाभ्यां प्रागर्धविसर्गसदृश उपध्मानीयः । अं अः इत्यचः परावनु-स्वारविसर्गौ ॥ **अणुदित्सवर्णस्य चाप्रत्ययः १ । १ । ६९ ॥** प्रतीयते विधीयत इति प्रत्ययः । अविधीयमानोऽणुदिच्च सवर्णस्य संज्ञा स्यात् । अत्रैवाण् परेण णकारेण । कु चु टु तु पु एते उदितः । तदेवम्-अ इत्यष्टादशानां संज्ञा । तथेकारोकारौ । ऋकारस्त्रिंशतः । एवं लृका-रोऽपि । एचो द्वादशानाम् । अनुनासिकाननुनासिकभेदेन यवला द्विधा । तेनाननुनासिकास्ते द्वयोर्द्वयोस्संज्ञा ॥ **परः संनिकर्षः संहिता**

---

१ 'अशः' इत्येवोचितम् । तेनाचामपि संवारनादघोषप्रयत्नसिद्धिः ॥ २ अत्र चकारेण स्वराणामपि संग्रहः । तेन स्वराणामल्पप्राणप्रयत्नसिद्धिः ॥ ३ **अविधीयमान** इति 'अणु'इत्यस्यैव विशेषणम् न तु 'उदित्' इत्यस्य''चजोःकु घिण्ण्यतोः' इत्यादौ विधेये उदित्करणात् ॥ 'अविधीयमान' इत्युक्तेर्नेह–' इदम इश्' 'त्यदादीनामः' इति ॥ ४ " परेणैवेण्ग्रहाः सर्वे पूर्वेणैवाण्ग्रहा मताः । ऋतेऽणुदित्सवर्णस्येत्येतदेकं परेण तु ॥१॥" ५ 'उदित्' इत्येषां संज्ञेति नैव कुकुटुगादावुदित् व्यवहार इति प्राञ्चः । उदेव इत् येषामित्यवधारणगर्भितबहुव्रीहिस्वीकारान्नैव टुगादौ तत्प्रसङ्ग इति नव्याः ॥ ६ तत्=तस्मात् कारणात् ,एवम्=सवर्णग्रहणे । ७ ऋलृवर्णयो परस्परं सवर्णतया ऋकारेण अष्टादशानां स्वीयानां द्वादशानां च लृवर्णसंबन्धिन भेदानां ग्रहणादिति, भावः । **प्लुतमिति** । इदं च संभवमात्रेणोक्तम् । नत्वस्य-

१।४।१०९॥ वर्णानामतिशयितः संनिधिः संहितासंज्ञः स्यात् ॥ **हलोऽनन्तराः संयोगः १।१।७॥** अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः॥ **सुप्तिङन्तं पदम् १।४।१४॥** सुबन्तं तिङन्तं च पदसंज्ञं स्यात् ॥

इति संज्ञाप्रकरणम् ।

---

**इको यणचि ६।१।७७॥** इकः स्थाने यण् स्यादचि संहितायां विषये॥ सुधी उपास्य इति स्थिते ॥ **तस्मिन्निति निर्दिष्टे पूर्वस्य १।१।६६ ॥** सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यव-

---

–क्वापि प्रयोजनम् । ऌकारेण ऋकारग्रहणस्य कुत्राप्यदृष्टत्वादिति बोध्यम् ॥ १ वर्णात्मके शब्दे संनिधिर्वर्णानामेव संभवतीति भावः॥ २ व्यवधानं विजातीयैरेव संभवतीति भावः॥ ३ 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसबध्यते' इति न्यायेन प्रत्येकमन्त पदं संबध्यत इत्याह–'सुबन्तम्' इति। 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इति परिभाषयैवान्तग्रहणे लब्धे अन्तग्रहणं 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति परिभाषां ज्ञापयतीति बोध्यम् ॥ ४ 'शब्दस्य शब्देन कोऽन्योऽभिसम्बन्धो भवितुमर्हति अन्यदतः स्थानात्' इति भाष्योक्तयुक्तेः षष्ठ्याः स्थानार्थकत्वमभिप्रेतमाह–**इकः स्थान** इति । 'संहितायाम्' इति सूत्रमनुवर्तते इति बोध्यम् ॥ ५ तेन इगुच्चारणोत्तरं यत्रार्धमात्रान्तराल एवाजुच्चार्यते तत्रैव यण्, यत्र त्वर्धमात्राधिककालव्यवधानं नैव तत्र कदापि यण्, "अर्धमात्राधिककालव्यवायः संहिता" इत्युक्तेरिति बोध्यम् ॥ ६ ननु सुधी+उपास्यः इति स्थिते "अचि सति इको यण्" इति सूत्रार्थादुकारयोरपि यण् स्यादत आह–**तस्मिन्निति** । एवं च "अजव्यवहितपूर्वस्येकः" इति सूत्रार्थादीकारस्यैव यण् भवतीति सिद्धं भवति ॥

वहितस्य पूर्वस्य[1] बोध्यम् ॥ **स्थानेऽन्तरतमः १ । १ । ५० ॥** प्रसंगे[2][3] सति सदृशतम आदेशः स्यात् । सुध्य् उपास्य इति जाते ॥ **अनचि च ८।४।४७ ॥** अचः[4] परस्य यरो द्वे वा स्तो न त्वचि[5] । इति धकारस्य द्वित्वेन सुध्ध्य् उपास्य इति जाते ॥ **झलां जश् झशि ८।४।५३ ॥** स्पष्टम्[6] । इति पूर्वधकारस्य दकारः[7] ॥ **संयोगान्तस्य लोपः ८।२।२३ ॥** संयोगान्तं[8] यत्पदं[9] तदन्त्यस्य[10] लोपः स्यात् । **अलोऽ-**

---

१ पूर्वस्य 'सप्तमीनिर्दिष्टार्थापेक्षया' इति योज्यम् ॥ २ नन्वेवमपि ईकारस्य स्थाने वरला एव कुतो न स्युरत आह—**स्थाने** इति । अनेकादेशप्राप्तौ योऽतिशयेन सदृशः स इत्यर्थः । सादृश्यं च स्थानार्थगुणप्रमाणकृतभेदाच्चतुर्विधम् । एवंच स्थानकृतसादृश्यादीकारस्य यकार उकारस्य वकारः ऋकारस्य रकारः ऌकारस्य लकार इति सिद्धं भवति ॥ ३ 'दर्भाणां स्थाने शरैः प्रस्तरितव्यम्' इत्यत्रेव स्थानशब्दस्य प्रसंगार्थकत्वमिति भावः॥ "षष्ठी स्थानेयोगा" इत्यतः स्थानेग्रहणेऽनुवर्तमाने पुनरत्र स्थानेग्रहणम् "यत्रानेकविधमान्तर्य्यं तत्र स्थानत आन्तर्य्यं बलीयः" इति परिभाषां ज्ञापयति ॥ तेन जेता जोतेत्यादौ मात्रिकस्य मात्रिकोऽकारो गुणो नेति बोध्यम् ॥ ४ "अचो रहाभ्यां द्वे" "यरोऽनुनासिकेऽनुनासिको वा" इत्यतः अचः, द्वे, यरः, वा, इति वर्तन्ते । तत्र 'अचः' इत्यस्य पञ्चमीत्वेन तस्मादित्युत्तरस्य, इति परिभाषाबलेन 'परस्य' इति चोपतिष्ठत इति भावः ॥ ५ 'अनचि' इत्यस्य पर्युदासत्वे हलि परत एव द्वित्वं स्यात्, नत्वभीष्टेऽवसाने 'वाक्क्' 'वाग्ग्' इत्यादौ द्वित्वमित्यतः प्रसज्यप्रतिषेधत्वमाश्रित्याह—**न त्वचीति** ॥ एतेन 'लाघवाद् 'हलि' इत्येव कुतो नोक्तम्' इति शंकापि निरस्ता ॥ ६ अनुवर्तनीयपदान्तराभावात् स्पष्टार्थकमित्यर्थः । ७ स्थानत आन्तर्यादिति भावः ॥ ८ संयोगः=' द्ध्य्' इति, तदन्तं पदम्="सुद्ध्य्" इति, तदन्त्यः=यकार इति स्पष्टम् ॥ ९ 'पदस्य' इत्यधिक्रियत इति भावः ॥ १० 'तद

**न्त्यस्य १।१।५२॥** षष्ठीनिर्दिष्टाऽन्त्यस्याल आदेशः स्यात् । इति थलोपे प्राप्ते-( **यणः** प्रतिषेधो वाच्यः ) सुद्ध्युपास्यः मद्ध्वरिः । धात्रंशः । लाकृतिः ॥ **एचोऽयवायावः ६।१।७८॥** एचः क्रमादय् अव् आय् आव् एते स्युरचि॥ **यथासंख्यमनुदेशः समानाम् १।३।१०॥** समसम्बन्धी विधिर्यथासंख्यं स्यात् । हरये । विष्णवे । नायकः पावकः ॥ **वान्तो यि प्रत्यये ६।१।७९ ॥** यकारादौ प्रत्यये परे ओदौतोरव् आव् एतौ स्तः । गव्यम् । नाव्यम् । (अध्वपरिमाणे च)।

---

-न्त्यस्य' इत्यर्थलाभः कथमत आह-**अलोऽन्त्यस्येति** । एवं च षष्ठीनिर्दिष्टम्=संयोगान्तस्येति तस्य य आदेश उच्यते लोपरूपः स तस्य संयोगान्तस्य यत् अन्त्यं तस्य भवतीति तदन्त्यस्येति लभ्यते ॥१ "षष्ठी स्थानेयोगा" इति सूत्रमनुवर्ततेऽत आह-**षष्ठीनिर्दिष्टेति**॥ २ संयोगान्तलोपे संयोगादिलोपे च कार्ये यणन्तसंयोगान्तपदस्य प्रतिषेध इति वार्तिकार्थः । तेन काक्यर्थम्, वास्यर्थम्,-इत्यादौ संयोगादिलोपेऽपि यणन्तसंयोगस्य ग्रहणाभावे संयोगादिलोपो नेति बोध्यम् ॥ ३'क्रमात्' इत्यर्थलाभसाधकपरिभाषामाह-**यथासंख्यमिति** 'तुल्यसंख्यावतां कार्यं क्रमेण भवति' इति सरलार्थः । एचो यथा चत्वारस्तथाऽयादयोऽपि चत्वार एवेति क्रमेणैव ते भवन्तीति क्रमादिति लभ्यते ॥ ४ "इको यणचि" इत्यतोऽचीति वर्तते ॥ ५ 'येन विधिस्तदन्तस्य' इत्यपवादभूतया 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति वाचनिक्या परिभाषया तदादिविधिः । 'ओदौतोरेव स्थानित्वस्य वान्तादेशो निर्णीतत्वम्' इति चाभिप्रेत्याह-**यकारादावित्यादि** ॥ ६ गोर्विकारो नावा तार्यमित्यर्थे तद्धिते यति 'यचि भम्' इति भत्वेन पदत्वबाधान्नैव 'लोपः शाकल्यस्य' इति वकारलोपः, गव्यूतिरित्यत्र तु संज्ञाभंगभयान्न स इति बोध्यम् । ७'गोर्यूतौ वान्त' इति वर्तते । एवं च गोर्यूतौ-

गव्यूतिः । **अदेङ् गुणः १।१।२॥** अत् एङ् च गुणसंज्ञः स्यात् ॥ **तपरस्तत्कालस्य १।१।७०॥** तः परो यस्मात्स च तात्परश्चोच्चार्यमाणसमकालस्यैव संज्ञा स्यात् ॥ **आद्गुणः ७।१।८७॥** अवर्णादचि परे पूर्वपरयोरेको गुण आदेशः स्यात् । उपेन्द्रः । गङ्गोदकम् ॥ **उपदेशेऽजनुनासिक इत् १।३।२॥** उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात् । प्रतिज्ञाऽनुनासिक्याः पाणिनीयाः । लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा ॥ **उरण् रपरः १।१।५१॥** ऋ इति त्रिंशतः संज्ञेत्युक्तम् । तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्तते । कृष्णर्द्धिः । तवल्कारः ॥ **लोपः शाकल्यस्य**

---

–वान्तादेशः समुदायेन मार्गपरिमाणं गम्यते चेत् इत्यर्थः॥१ "गव्यूतिः स्त्री क्रोशयुगम्" इत्यमरः ॥ २ तेन अत् इत् उत् इत्यादयः षण्णां षण्णां संज्ञा। ऋदिति द्वादशानाम् । ३ अकारेण दीर्घप्लुतयोः, एङा त्रिमात्रचतुर्मात्रग्रहणवारणाय तपरपदे बहुव्रीहिपञ्चमीतत्पुरुषसमासावाश्रित्य व्याचष्टे–**तः परो यस्मात्** इत्यादि ॥ तः परो यस्मात् तादृशो वर्णः तात्परो यः शब्दस्तद्बोध्यो वर्णश्चेत्यर्थः ॥ ४ "इको यणचि" इत्यतः 'अचि' इति "एकः पूर्वपरयोः" इत्यधिकारसूत्रं चाश्रित्याह–**अचि पर** इत्यादि ॥ ५ पाणिनिप्रभृतिप्रोक्ता वर्णाः प्रतिज्ञाविषयानुनासिक्यवन्त इत्यर्थः ॥ ६ एतदर्थमेव 'लण्मध्ये त्वित्संज्ञकः' इत्युक्तं प्राक् ॥ नव्यास्तु 'ऌकारस्य लपरः' इत्यपूर्वमेव वचनं कर्तव्यम् इति वदन्ति ॥ ७ कृष्ण+ऋद्धिः, तव+ऌकारः, इति स्थिते अकारस्य कण्ठः स्थानम्, ऋकारस्य मूर्धा स्थानम्, एवं ऌकारस्य दन्ताः स्थानम्, तादृशोभयस्थानवांश्च गुणेषु न कश्चिदस्तीति त्रयाणामविशेषेण प्राप्तौ सूत्रम्–**उरणिति** । नन्वत्र पूर्वपरसमुदायस्य स्थानित्वेन ऋकारस्यैव स्थानित्वाभावात्कथं रपरत्वमिति चेत् । मैवम्, "पूर्वपरयोः" इति–

८।३।१९ ॥ अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोपो वाऽशि परे । **पूर्वत्रा-सिद्धम् ८।२।१ ॥** सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा, त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धम् । हर इह, हरयिह । विष्ण इह, विष्णविह ॥ **वृद्धिरादैच् १।१।१ ॥** आदैच्च वृद्धिसंज्ञः स्यात् ॥ **वृद्धिरेचि ६।१।८८ ॥** आदेचि परे वृद्धिरेकादशः स्यात् । गुणापवादः । कृष्णे-

---

-द्विवचननिर्देशेन सहितयोरवयवयोरेव स्थानित्वात् । तदुक्तं भाष्ये-"यो ह्युभयोः स्थाने भवति लभतेऽसावन्यतरतो व्यपदेशम्" इति । एवं च ऋकारऌकारयोः रपरलपरत्वे अर्+ए+ओ,+अल्, ए+ओ इति त्रयाणां प्राप्तौ स्थानत आन्तर्यात् अकारऋकारयोः अर्, अकारऌकारयोः अल् इति सिद्धं भवतीति भावः॥१"भोभ-गोअघोअपूर्वस्य" इत्यत ओकारान्तानामनुवृत्तेः "ओतो गार्ग्यस्य" इत्यनेन वैयर्थ्यसूचनात् केवलम् 'अपूर्वस्य' इत्येवानुवर्तते, 'अशि' इति च "पदस्य" "व्योर्लघु"-इत्यतः 'व्योः' इति च ॥ २ ननु यत्र "लोपः शाकल्यस्य" इति सूत्रेण यवयोर्लोपो भवति तत्राच्परत्वाद् गुणेन भाव्यमत आह-**पूर्वत्रेति** । प्रथमाध्यायत आरभ्य अष्टमाध्यायस्य प्रथमपादपर्यन्तं "सपादसप्ताध्यायी" इति व्यवहारः, अष्टमाध्यायस्यावशिष्टाश्च द्वितीयतृतीयचतुर्थपादाः "त्रिपादी" इति नाम्ना व्यवह्रियन्ते । सप्तानामध्यायानां समाहारः सप्ताध्यायी पादेन सहिता सप्ताध्यायी सपादसप्ताध्यायी, त्रयाणां पादानां समाहारः त्रिपादी इति तद्व्युत्पत्तेः । ३ अधिकारफलमाह-**त्रिपाद्या-मपीति** ॥ प्रतिसूत्रमस्यैकवाक्यतया संयोगान्तं यत्पदं तदन्त्यस्य लोपः स्यात् । 'पूर्वस्मिन्कर्तव्ये तु जातोऽप्ययमसिद्धः' इत्येवं त्रिपादीस्थानां सर्वेषां विधीनामर्थः कल्पनीयः । तेन विद्वानित्यादौ सलोपादेरसिद्धत्वान्नलोपो नेति भावः ॥ ४ तपर-सूत्रेण नियमनात् द्विमात्र्योरेव ग्रहणमिति भावः ॥ ५ आद्गुणः इति सूत्रत 'आद्' इति, 'एकः पूर्वपरयोः' इति च वर्तते ॥ ६ 'येन नाप्राप्ते यो विधिरार-

कत्वम् । गङ्गौघः । देवैश्वर्यम् । कृष्णौत्कण्ठ्यम् ॥ एत्येधत्यूठ्सु ६।१।८९ ॥ अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात् । उपैति । उपैधते । प्रष्ठौहः । एजाद्योः किम् ? उपेतः । मा भवान्प्रेदिधत् । ( अक्षादूहिन्यामुपसंख्यानम् ) अक्षौहिणी सेना । (प्रादूहोढोढ्येषैष्येषु ) प्रौहः । प्रौढः । प्रौढिः । प्रैषः । प्रैष्यः । ( ऋते च तृतीयासमासे ) सुखेन ऋतः सुखार्तः । तृतीयेति किम् ? परमर्तः ( प्रवत्सतरकम्बलवसनार्णदशानामृणे ) । प्रार्णम् । वत्सतरार्णम् इत्यादि ॥ **उपसर्गाः क्रियायोगे १।४।५९॥**

---

–रभ्यते स तस्य बाधको भवति' इति न्यायेन गुणकर्तृकावश्यप्राप्तौ "वृद्धिरेचि" इति वृद्धिः प्रारभ्यतेऽतो वृद्धिर्गुणस्यापवादभूतैवेति भावः ॥ १ 'आद्' 'वृद्धिरेचि' 'एकः पूर्वपरयोः' इति वर्तते ॥ २ 'येननाप्राप्त' न्यायेन "एङि पररूपम्" "आद्गुणः" इत्यस्यापवादोऽयमिति भावः ॥ ३ "इक्श्तिपौ धातुनिर्देशे" इति श्तिपो निर्देशेनात्र 'इण् गतौ' 'एध वृद्धौ' इति धात्वोरेव ग्रहणमिति बोध्यम् ॥ ४ "अक्षशब्दात् ऊहिनीशब्दे परे पूर्वपरयोरचोः स्थाने वृद्धिरेकादश" इत्यर्थः, तेन न सर्वादेशः। गुणापवादः॥ ५ अक्षाणामूहिनीति विग्रह एतत्, अक्षाणामूहोऽस्यामस्तीति विग्रहे तु अक्षोहिणीत्येव तत्रार्थवत ऊहिनीशब्दस्याभावात् ॥ ६ 'प्र' शब्दात् ऊह, ऊढ, ऊढि, एष, एष्य, एषु शब्देषु परेषु पूर्वपरयोरचोर्वृद्धिरेकादेश इत्यर्थः । एवम् "एत्येधति" सूत्रेऽपि बोध्यम् । पररूपगुणापवादः ॥ ७ ऊढवदिति क्तवत्वन्तैकदेशभूत ऊढशब्दे तु न वृद्धिः । तत्रोढशब्दस्यानर्थकत्वादिति बोध्यम् ॥ ८ अवर्णात् ऋतशब्दे परे पूर्वपरयोरचोर्वृद्धिरेकादेशः स्यात् तृतीयासमासश्चेत् । गुणापवादः ॥ ९ परमश्चासावृतश्चेति कर्मधारयोऽयमिति भावः ॥ १० पंचम्यर्थे षष्ठी । प्र, वत्सतर, कम्बल, वसन, ऋण, दश, एभ्यः शब्देभ्यः ऋणशब्दे परे–

प्रादयः क्रियायोगे उपसर्गसंज्ञाः स्युः । प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उद् अभि प्रति परि उप-एते प्रादयः ॥ **भूवादयो धातवः १ । ३ । १ ॥** क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः ॥ **उपसर्गादृति धातौ ६।१।९१॥** अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात् । प्रार्छति ॥ **एङि पररूपम् ६।१।९४ ॥** आदुपसर्गादेङादौ धातौ पररूपमेकादेशः स्यात् । प्रेजते । उपोषति ॥ **अचोन्त्यादि टि १।१।६४ ॥** अचां मध्ये योऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात् । ( शकन्ध्वादिषु पररूपं वाच्यम् ) । तच्च टेः । शकन्धुः । कर्कन्धुः । मनीषा । आकृतिगणोऽयम् । मार्त्तण्डः ॥ **ओमाङोश्च ६।१।९५॥**

---

-पूर्वपरयोरचोर्वृद्धिरेकादेशः स्यात् । गुणापवादः ॥ १ "प्रादयः" इति सूत्रमनुवर्त्याह-**प्रादय** इति ॥ २ भुवं भावं वदन्ति ते भूवादयः भूरादिर्येषां ते भूवादयः भूवादयश्च भूवादयश्चेत्येकशेष इत्यभिप्रेत्याह-**क्रियावाचिन** इति ॥ ३ "आद्गुणः" इति सूत्राद् 'आत्' इति "वृद्धिरेचि" इत्यतो वृद्धिरिति चानुवर्त्याह-**अवर्णान्तादिति** ॥ ४ "आद्गुणः" इत्यत आदिति । "उपसर्गादृति" इत्यत उपसर्गादिति धाताविति चानुवर्त्य "येन विधिस्तदन्तस्य" 'यस्मिन्विधिस्तदादावल्ग्रहणे' । इति क्रमेण तदन्ततदादिविधी इत्यत आह-**एङादौ धाताविति** ॥ ५ अन्त्यः=अच् इत्यर्थात् । सः=अन्त्योऽच् । यस्य=समुदायस्य तत्=समुदितम् । ६ शकन्ध्वादिविषये तत्सिद्ध्यनुगुणं पररूपं वाच्यमित्यर्थः । अतएवाह-**तच्च टेरिति** । तत् पररूपं टिसंज्ञकस्यैवेत्यर्थः। ७ आकृत्या=स्वरूपेण गण्यते इति आकृतिगणः । पररूपघटिता अन्यासाध्या यावन्तो दृष्टिपथमवतरेयुस्ते सर्वे **शकन्ध्वादिषु वेदितव्याः** । एतावन्त एव शकन्ध्वादय इति सङ्ख्यानियमो नास्ती-

ओमि आङि चात् परे पररूपमेकादेशः स्यात्। शिवायोन्नमः। शिव एहि॥ **अन्तादिवच्च ६।१।८५॥** योऽयमेकादेशः स पूर्वस्यान्तवत्परस्यादिवत्। शिवेहि॥ **अकः सवर्णे दीर्घः ६।१।१०१॥**

---

–त्यर्थः। अत एव 'कतन्तेषु गमर्थाभ्याम्' इत्यादिनिर्देशाः संगच्छन्ते। १ "आद् गुणः" इत्यत 'आद्' इति "एङि पररूपम्" इत्यतः 'पररूपम्' इत्यनुवर्तते इत्याह–**आदित्यादि**॥ २ "वृद्धिरेचि" इत्यस्य "एत्येधत्यूठ्सु" इत्यस्य चापवादः। ३ 'शिव+आ+इहि' इत्यवस्थायाम् 'शिव+आ' इत्यत्र "अकः सवर्णे" इति दीर्घे प्राप्ते 'आ + इहि' इत्यत्र "आद्गुणः" इति गुणे प्राप्ते धातूपसर्गकार्यत्वेन गुणस्यान्तरङ्गत्वात् दीर्घस्य बहिरङ्गत्वात् पूर्वं गुणे जाते इति भावः॥ ४ ननु आकारेकारयोर्गुणेनैकारे कृते शिव+एहि इति स्थिते आङ्परत्वाभावात् पररूपं न स्यादत आह–**अन्तेति**। एकादेशः='पूर्वपरयोः स्थाने' इत्यर्थात् पूर्वस्य=पूर्वघटितसमुदायस्य, परस्य=परघटितसमुदायस्य। पूर्वपरवर्णयोर्भवन्नेकादेशः प्रथमस्थानिघटितसमुदायस्य पूर्वस्य यः अन्तः प्रथमस्थानी तत्कार्यकारी भवति द्वितीयस्थानिघटितसमुदायस्य उत्तरस्य यः आदिः द्वितीयस्थानी तत्कार्यकारी भवति इति सरलार्थः। "एकादेशशास्त्रप्रवृत्तेः प्राक् अन्तघटितपूर्वसमुदाये आदिघटितपरसमुदाये वा ये ये धातुत्वप्रातिपदिकत्वनिपातत्वोपसर्गत्वादिविशिष्टधर्मास्ते कृतेकादेशेऽप्यतिदिश्यन्ते" इति वास्तविकः सूत्रार्थः॥ ५"एकः पूर्वपरयोः" इत्यनुवर्तते। तथा च–एकादेशः पूर्वस्यान्तवदेव परस्यादिवदेव वा स्यात्–इत्यर्थफलितमाह–**योऽयमित्यादि**॥ एवं च 'उभयत आश्रयणे नान्तादिवत्' इति फलितम् इति बोध्यम्। किं च, विशिष्टधर्मस्यैव तत्तद्धातुत्वप्रातिपदिकत्वनिपातत्वोपसर्गत्वादिरूपस्यैवातिदेश इति च बोध्यम्॥ एवं चात्राङ्त्वस्यातिदेशात्पररूपं भवत्येव॥

अकः सवर्णेऽचि[1] परे पूर्वपरयोर्दीर्घ एकादेशः स्यात् । दैत्यारिः श्रीशः । विष्णूदयः । होतृकारः ॥ **एङः पदान्तादति ६ । १ १०९ ॥** पदान्तादेङोऽति परे पूर्वरूपमेकादेशः[2] स्यात् हरेऽव । विष्णोऽव ॥ **सर्वत्र विभाषा गोः ६।१।१२२ ॥** लोके वेदे चैङन्तस्य[3] गोरति वा प्रकृतिभावः[4] पदान्ते । गोअग्रम् । एङन्तस्य किम् । चित्र्यग्वग्रम्[5] । पदान्ते किम् । गोः ॥ **अनेकाल् शित्सर्वस्य[6] १।१।५५ ॥** इति प्राप्ते ॥ **ङिच्च १।१।५३ ॥** ङिदनेकालप्यन्त्यस्यैव[7] स्यात् ॥ **अवङ् स्फोटायनस्य ६।१।१२३॥** पदान्ते[8] एङन्तस्य गोरवङ् वाऽचि । गवाग्रम् । **गोऽग्रम्** ।

---

१ "इको यणचि" इत्यतः 'अचि' इति "एकः पूर्वपरयोः" इति सूत्रं चानुवर्ततेऽत आह—**अचि पर** इत्यादि ॥ २ "अमि पूर्वः" इत्यतः 'पूर्व' इति "एङि पररूपम्" इत्यतो रूपमिति चानुवर्ततेऽत आह—**पूर्वरूपमिति** ॥ ३ "एङः पदान्तादति" इति, प्रकृत्यान्तःपादम्-" इति सूत्रात् 'प्रकृत्या' इति चानुवर्ततेऽत आह—**एङन्तस्येत्यादि** ॥ ४ प्रकृतिशब्दोऽत्र स्वभाववाची, "दुस्त्यजा प्रकृतिः" इत्यादौ तथा दर्शनात् । प्रकृत्या=स्वभावेनावस्थानमित्यर्थः । अतएव प्रकृतिभावे न पूर्वरूपं नाप्ययादय इति भावः । ५ 'एकदेशविकृतमनन्यवत्' इति न्यायेन विकृते 'गु' इति शब्दे गोत्वस्यागमनेऽपि 'विकृतावयवनिबन्धनकार्ये नायं न्यायः' इति गु शब्दे नैवागच्छति एङन्तत्वमिति भावः॥ ६ "अलोन्त्यस्य" "आदेः परस्य" इत्यनयोः जरसौ रामैरित्यादावपवादोऽयम् ॥ ७ आरम्भसामर्थ्यादाह—**अनेकालिति** ॥ तातङि तु ङित्करणादेव सर्वस्य भवति ॥ ८ "एङः पदान्तात्" इति 'गोः' इति चानुवर्तते, 'अति'—

पदान्ते किम् । गवि ॥ **इन्द्रे च ६।१।१२४ ॥** गोरवङ् स्यादिन्द्रे । गवेन्द्रः॥**दूराद्धूते च ८।२।८४॥** दूरात्सम्बोधने वाक्यस्य टेः प्लुतो वा ॥ **प्लुतप्रगृह्या अचि नित्यम् ६।१।१२५ ॥** एतेऽचि प्रकृत्या स्युः । आगच्छ कृष्ण ३ अत्र गौश्चरति ॥ **ईदूदेद्द्विवचनं प्रगृह्यम् १।१।११ ॥** ईदूदेदन्तं द्विवचनं प्रगृह्यं स्यात् । हरी एतौ । विष्णू इमौ । गङ्गे अमू ॥ **अदसो मात् १।१।१२ ॥** अस्मात्परावीदूतौ प्रगृह्यौ स्तः । अमी ईशाः । रामकृष्णावमू आसाते ।

---

--इति नानुवर्तनेऽस्वरितत्वात् ॥ १ आरम्भसामर्थ्यादयं वैकल्पिक इति ॥ २ यावति देशे स्वाभाविकप्रयत्नोच्चारितं सम्बोध्यमानो न शृणोति किन्त्वधिकं प्रयत्नमपेक्षते तावद् दूरम् । तदुक्तं भाष्ये--"यत्र प्राकृतात् प्रयत्नाद् विशेषेऽनुपादीयमाने सन्देहो भवति--'श्रोष्यति न श्रोष्यति' इति, तद् दूरमिहावगम्यते" इति ॥ ३ "वाक्यस्य टेः प्लुत उदात्तः" इत्यधिक्रियते ॥ 'सर्वः प्लुतः साहसमनिच्छता विकल्पः कर्तव्यः' इति भाष्यम् ॥ ४ 'नित्यप्रहसितः नित्यप्रजल्पितः' इत्यादाविव नित्यपदं प्रायः समानार्थकम् ॥ अतएव 'मणी वोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम' इत्यादौ नित्यकर्मणः भोजनशौचादेः कदाचित् त्याग इव प्रकृतिभावप्रवृत्तेरपि त्यागेन न प्रकृतिभावः ॥ ५ "प्रकृत्याऽन्तःपादम्--" इत्यतः प्रकृत्या इति वर्तते ॥ ६ पचेते इत्यादौ प्रगृह्यत्वसिद्धये 'येन विधिस्तदन्तस्य' इति प्रवर्त्याह--**ईदूदेदन्तमिति** ॥ ७ 'आद्यन्तवदेकस्मिन्' इति सूत्रं मनसि निधायोदाहरति--**हरी** इत्यादि ॥ ८ 'ईदूदेद्' इत्यस्यानुवृत्तावपि अदस्शब्दसम्बन्धिमकारात्परस्यैकारस्यासम्भवादाह--**ईदूताविति** ॥ ९ 'द्विवचनम्' इति तु नानुवर्तते इति बोधयितुं बहुवचनमुदाहरति--**अमी** इति ॥ १० स्त्रियां क्लीबे च 'अदे' इति भूत्वा '**अमू**' इति भवतीति पूर्वसूत्रेणैव तत्र प्रगृह्यत्वं सिद्धम्, एकारान्तद्विवचनत्वात्--

मात्किम् । अमुकेऽत्र[1] ॥ **चादयोऽसत्त्वे[2] १।४।५७** ॥ अद्रव्यार्था-श्चादयो निपाताः[3] स्युः ॥ **प्रादयः १।४।५८** ॥ एतेऽपि[4] तथा ॥ **निपात एकाजनाङ् १।१।१४** ॥ एकोऽज्[5] निपात आङ्वर्जः । प्रगृह्यः स्यात् । इ इन्द्रः । उ उमेशः । 'वाक्यस्मरणयोरङित्[6]' । आ एवं नु मन्यसे । आ एवं किल तत् । अन्यत्र ङित्[7] । आ ईषदुष्णम् ओष्णम् ॥ **ओत् १।१।१५** ॥ ओदन्तो[8] निपातः प्रगृह्यः स्यात् । अहो ईशाः ॥ **सम्बुद्धौ शाकल्यस्येतावनार्षे १।१।१६** ॥ सम्बुद्धिनिमित्तक[9] ओकारो वा प्रगृह्योऽवैदिके इतौ परे । विष्णो इति, विष्ण[10] इति, विष्णविति ॥ **मय उञो वो वा ८।३।३३** ॥ मयः

---

-इति स्त्रीलिङ्गः क्लीबलिंगश्च नास्योदाहरणम्, पुंसि तु 'अदौ' इति भूत्वा 'अमू' इति भवतीति नात्र पूर्वसूत्रेण प्रगृह्यत्वं सिध्यत्यौकारान्तत्वादिति पुँल्लिङ्ग एवादः-शब्दोऽस्य सूत्रस्योदाहरणमिति स्फोरणाय "रामकृष्णौ" इत्युपन्यस्तम् ॥ १ असति माग्रहणे एकारोऽप्यनुवर्त्तेत । माग्रहणे कृते तु मकारादव्यवहितपरस्यैकारस्यासम्भव इति भावः ॥ २ लिंगसंख्यानन्वयित्वमसत्त्वत्वम् ॥ ३ "प्राग्रीश्वरात्" इत्यतो 'निपाताः' इत्यनुवर्तते इत्यभिप्रेत्याह--**निपाता** इति ॥ ४ "चादयोऽसत्त्वे" इत्यतोऽसत्त्व इति, 'निपाताः' इति चानुवर्त्याह--**एतेऽपीति** ॥ ५ 'प्रगृह्यम्' इत्यनुवर्तते, 'एकाच्' इति च कर्मधारयः, इत्यभिप्रेत्याह--**एकोऽजिति** ॥ ६ ननु प्रयोगे सर्वत्र आकारस्यैव श्रवणेन ङकारस्य क्वाप्यनुपलम्भात् ङित्त्वाङित्त्वविवेको दुर्विज्ञेयोऽत आह-**वाक्येति** ॥ ७ 'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ॥ एतमातं ङितं विद्यात्' इत्यादि शेषः ॥ ८ 'प्रगृह्यम्' इति 'निपातः' इति च वर्तते । 'येन विधिस्तदन्तस्य' इत्युपतिष्ठते इत्याह--**ओदन्त** इति ॥ अहो इति चाखण्डनिपात इति भावः । ९ 'ओत्' इति, 'प्रगृह्यम्' इति चानुवर्तते । ऋषिशब्दो वेदवाचीत्यभि-प्रेत्याह--**सम्बुद्धिनिमित्तक इति** ॥ १० शाकल्यो दृष्टपूर्वस्य लोपस्य स्मर्ता-

परस्य ङमो वो वा अचि । किम्वुक्तम्, किमु उक्तम् ॥ **इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च** ६।१।१२७ ॥ पदान्ता इको ह्रस्वा वा स्युरसवर्णेऽचि[4] । ह्रस्वविधिसामर्थ्यान्न स्वरसंधिः । चक्रि अत्र, चक्र्यत्र । पदान्ता इति किम् । गौर्यौ । **अचो रहाभ्यां द्वे** ८।४।४६ ॥ अचः पराभ्यां रेफहकाराभ्यां परस्य यरो[3] द्वे वा स्तः । गौर्य्यौ । (न समासे[4]) वाप्यश्वः ॥ **ऋत्यकः** ६।१।१२८ ॥ ऋति परे पदान्ता[5] अकः

---

--न त्वन्यत्रादृष्टपूर्वस्य लोपस्य विधायक इत्यभिप्रेत्य लोपघटितमुदाहरति–**विष्ण इतीति** ॥ प्रगृह्यत्वलोपविधायकत्वे तु शाकल्यमते प्रकृतिभावस्यैव जातत्वेना- वादेशाप्राप्त्या लोपस्यासम्भाव्यत्वात् तृतीयप्रयोगस्य लोपघटितस्य न कदापि सम्भव इति भावः ॥ १ "ङमो ह्रस्वात्" इत्यतोऽचीति वर्ततेऽत आह– **अचीति** ॥ "इको यणचि" इत्युत्तरं "मय उञो वो वा" इति सूत्रकरणेनापि प्रकृतिभाववारणसिद्धौ त्रैपादिकप्रकरणे सूत्रान्तरनिर्माणफलं वत्वस्यासिद्धत्वादनु- स्वाराभाव एवेति सूचयन्नुदाहरति–**किम्वुक्तमिति** ॥ २ "एङः पदान्तात्–" इत्यतः "पदान्ताद्' विभक्तिविपरिणतम्, "प्लुतप्रगृह्या" इत्यतः 'अचि' इति वर्ततेऽत आह–**अचीति** ॥ ह्रस्वोत्तरमपि यदि यण् स्यात् तर्हि ह्रस्वविधानमेव व्यर्थं स्यादित्याह–**ह्रस्वविधीति** ॥ अयं भावः–ह्रस्वविधानं किं श्रवणार्थम्, उत यणादेशार्थम् ? नान्त्यः, नहि ह्रस्वविधिमन्तरा यण् न भवति दीर्घस्यापि नद्यौ इत्यादौ यणः सर्वसम्मतत्वात् । नाद्यः,यणाद्यादेशोत्तरं श्रवणाप्रसङ्गात् । तथाच ह्रस्व- विधानं व्यर्थं सत् स्वश्रवणसाधकं सन्ध्यभावं ज्ञापयतीति ॥ ३ "यरोऽनुनासिके- ऽनुनासिको वा" इत्यतः 'यरः' इति 'वा' इति च वर्ततेऽत आह–**यर इति** ॥ ४ "इकोऽसवर्णे शाकल्यस्य ह्रस्वः" इति वर्तते ॥ 'समासघटकोत्तरपदादिभूते- ऽसवर्णेऽचि परे पदान्ता अको ह्रस्वा न स्युः' इति वास्तविको वार्तिकार्थः । तेन परमचक्रि अत्र इत्यत्र न निषेधः॥ ५ "एङः पदान्तात्–" इत्यतः 'पदान्तात्' इति 'इकोऽसवर्णे–' इत्यतः 'शाकल्यस्य ह्रस्वः' इति च वर्तते तदाह–**प्राग्वदिति** ॥

प्राग्वद्वा । ब्रह्म ऋषिः, ब्रह्मर्षिः । पदान्ताः किम् । आर्च्छत् ॥

इत्यच्सन्धिः ।

**स्तोः श्चुना श्चुः ८।४।४०** ॥ सकारतवर्गयोः शकारचवर्गाभ्यां योगे[2] शकारचवर्गौ स्तः । रामश्शेते । रामश्चिनोति[3] । सच्चित् । शार्ङ्गिञ्जयं[4] ॥ **शात् ८।४।४४** ॥ शात्परस्य तवर्गस्य चुत्वं[5] न स्यात् । विश्नः । प्रश्नः ॥ **ष्टुना ष्टुः ८।४।४१** ॥ स्तोः[6] ष्टुना योगे ष्टुः स्यात् । रामष्षष्ठः । रामष्टीकते । पेष्टा । तट्टीका । चक्रिण्ढौकसे ॥ **न पदान्ताट्टोरनाम् ८।४।४२** ॥ पदान्ताट्टवर्गात्परस्याऽनामः

---

१ "आडजादीनाम्" इति जातस्याडागमस्य धात्ववयवत्वेन पदान्तत्वाभाव इति भावः ॥ २ श्चुना योगः=सम्बन्धः । स चाव्यवधानरूप एव ग्राह्यः । 'बहुषु बहुवचनम्' इति निर्देशात् । तेन 'चितम्' इत्यादौ न दोषः । 'ष्टुना' इत्यत्रापि तथा 'पूरणगुणसुहित-' इति निर्देशात् । तेन 'कटु तैलम्' इत्यादौ न दोषः । एतन्मूलक एव 'योगः=संयोगः' इति नव्यानामुद्घोषः । **सच्चिदिति** ! चुत्वस्यासिद्धत्वाज्जश्त्वेन दत्वे तस्य चुत्वेन जकारे चर्त्वमिति प्रक्रियेति बोध्यम् ॥ ३ अत्र स्थान्यादेशयोरेव यथासंख्यम् न निमित्तकार्यिणोः, नापि निमित्तादेशयोः "शात्" इति ज्ञापकात् इत्यभिप्रेत्योदाहरति-**रामश्चिनोतीति** ॥ ४ तुल्यास्यसूत्रे-"आस्यभवयावत्स्थानसाम्यं सावर्ण्यप्रयोजकम्" नासिका तु आस्यानन्तर्भूतेति तुशब्देन पञ्चानामेव ग्रहणमिति ध्वनयन्नुदाहरति-**शार्ङ्गिञ्जयेति** ॥ ५ 'स्तोः' इति, "तोः षि" इत्यतः 'तोः' इति, "न पदान्तात्-" इत्यतः 'न' इति च वर्तते । तत्र निषेधः प्राप्तस्यैवेति यत् प्राप्तं तदाह-**चुत्वमिति** ॥ ६ "स्तोः श्चुना" इत्यतः 'स्तोः' इति वर्ततेऽत आह-**स्तोरिति** ॥ अत्रापि स्थान्यादेशयोरेव यथासंख्यम् "तोः षि" इति ज्ञापकात्' इत्यभिप्रेत्योदाहरति--**रामष्टीकते, पेष्टेति** ॥

स्तोः[1] ष्टुर्न स्यात् । षट् सन्तः । षट् ते । पदान्तात्किम् । ईट्टे । टोः[2] किम् । सर्पिष्टमम्[3] । ( अनाम्नवतिनगरीणामिति वाच्यम्[4] ) षण्णाम् । षण्णवतिः[5] । षण्णगर्यः ॥ **तोः षि ८।४।४३** ॥ न ष्टुत्वम्[6] । सन्षष्ठः ॥

**झलां जशोऽन्ते ८।२।३९॥** पदान्ते[7] झलां जशः स्युः । वागीशः ॥

**यरोऽनुनासिकेऽनुनासिको वा ८।४।४५॥** यरः पदान्तस्या-[8]नुनासिके परेऽनुनासिको वा स्यात् । एतन्मुरारिः, एतद् मुरारिः । ( प्रत्यये[9] भाषायां नित्यम् ) । तन्मयम् । चिन्मयम् ॥ **तोर्लि ८।४।६०** ॥ तवर्गस्य लकारे परे परसवर्णः[10] । तल्लयः । विद्वाँल्लिखति ।

---

१ 'स्तोः' इति, 'ष्टुः' इति च वर्ततेऽत आह-**स्तोरिति** ॥ २ पदान्ते टकारस्य जश्त्वेन टवर्ग एव भेलिष्यतीति पृच्छति-**टोः किमिति** ॥ ३ "ह्रस्वात्तादौ तद्धिते" इति जातस्य षत्वस्य जश्त्वं प्रत्यसिद्धत्वात् षकारो भेलिष्यतीत्युदाहरति-**सर्पिष्टममिति** ॥ ४ सूत्रे नाम्निषेधेन सह नवतिनगरी-शब्दयोरपि निषेधो वक्तव्यः । "न पदान्ताट्टोरनाम् नवतिनगरीणाम्" इत्येवं सूत्रं कार्यमित्यर्थः। तथा च पदान्ताट्टवर्गात् सस्य षो न, नाम् नवति नगरी, एतच्छब्दा-वयवभिन्नस्य तवर्गस्य टवर्गो न स्यात् इति फलितम् ॥ ५ षडधिका नवति-रिति विग्रहः । षण्णगर्य इति पृथक् पदे । पक्षे 'षड्णवतिः' 'षड्णगर्यः' इत्यपि बोध्यम् । अनुनासिकविकल्पात् । ६ "न पदान्तात्-" इत्यतः 'न' इति "ष्टुना ष्टुः" इत्यतः 'ष्टुः' इति च वर्तते इत्याह-**न ष्टुत्वमिति**॥ ७ "पदस्य" इत्यनुवर्त्याह-**पदान्ते इति** ॥ ८ "पदस्य" इत्यनुवर्त्य "येन विधिः" इत्युपस्थितया 'यरन्तस्य पदस्य' इत्यर्थे "अलोऽन्त्यस्य" इति परिभाषोपस्थितिलब्धमर्थमाह-**यरः पदा-न्तस्येति** ॥ ९ यरः पदान्तस्यानुनासिकेऽनुनासिकः । इति शेषः । एवं च "यरः पदान्तस्यानुनासिकादौ प्रत्यये परे नित्यमनुनासिको लौकिकप्रयोगे" इति वार्त्ति-कार्थः । 'वेद्मि' इत्यादौ तु पदान्तत्वाभावान्नानुनासिक इति बोध्यम् ॥ १० अनु-

नस्यानुनासिको लः ॥ **उदः स्थास्तम्भोः पूर्वस्य ८।४।६१॥** उदः परयोः स्थास्तम्भोः पूर्वसवर्णः ॥ **तस्मादित्युत्तरस्य १।१।६७॥** पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाव्यवहितस्य परस्य ज्ञेयम् ॥ **आदेः परस्य १।१।५४ ॥** परस्य यद्विहितं तत्तस्यादेर्बोध्यम् । इति सस्य थः ॥ **झरो झरि सवर्णे ८।४।६४॥** हलः परस्य झरो वा लोपः सवर्णे झरि ॥ **खरि च ८।४।५५ ॥** खरि झलां चरः स्युः । इत्युदो दस्य तः । उत्थानम् । उत्तम्भनम् । **झयो होऽन्यतरस्याम् ८।४।६२ ॥** झयः परस्य हस्य वा पूर्वसवर्णः । नादस्य घोषस्य संवारस्य महाप्राणस्य हस्य तादृशो वर्ग-

---

-स्वारस्य ययि-" इति सूत्रात् 'परसवर्णः' इति वर्तत इत्याह-**परेति**॥ १ अनुनासिक इति । नस्यानुनासिकतया तत्स्थाने भवन् लकारोऽपि **अनुनासिक** एव भवति आन्तर्यादिति भावः ॥ २ "अनुस्वारस्य-" इति सूत्रतः 'सवर्ण' इति वर्तते इत्याह-**पूर्वसवर्ण** इति ॥ ३ परयोः इत्यर्थलाभसाधकपरिभाषामाह-**तस्मादिति**॥ ४ "तस्मिन्निति निर्दिष्टे" इत्यतः 'इति निर्दिष्टे' इति वर्ततेऽत आह-**अव्यवहितस्य परस्येति** ॥ ५ यत्=कार्यम् तत्=कार्यम् तस्य=परत्वेन निर्दिष्टस्य आदेः-अल इति शेषः ॥ ६ "अलोऽन्त्यस्य" इत्यस्यापवादः। **सस्येति** । अघोषमहाप्राणप्रयत्नवतः सस्य तादृश एव थकार इत्यर्थः॥ ७ "हलो यमां यमि लोपः" इत्यतः 'हलः' इति 'लोपः' इति च वर्तते ॥ ८ "झलां जश् झशि" इत्यतो 'झलाम्' इति "अभ्यासे चर्च" इत्यतः 'चर्' इति च बहुवचनविपरिणतं वर्ततेऽत आह-**खरीति** ॥ **दस्येति** । भाष्यसम्मताष्टाध्यायीपाठस्वीकारे तु लोपाभावपक्षे आदेशभूतथकारस्यापीति बोध्यम् ॥ ९ अनुवर्त्याह-**पूर्वसवर्ण इति** ॥ १० अत्र "हस्य तादृशो घकारः" इत्यनुक्त्वा 'वर्गचतुर्थः' इति वदन् "हकारात् पूर्वं कवर्गीयो झय् चेत् तस्य घकारः, चवर्गीयश्चेत् झकारः, टवर्गीयश्चेत् ढकारः, तवर्गीयश्चेत् धकारः,-

चतुर्थः । वाग्घरिः, वाग्हरिः ॥ **शश्छोऽटि ८।४।६३॥** झयः परस्य शस्य छो वाऽटि । तद् शिव इत्यत्र दस्य श्चुत्वेन जकारे कृते खरि चेति जकारस्य चकारः । तच्छिवः, तच्शिवः । (छत्वममीति वाच्यम्)। तच्छ्लोकेन ॥ **मोऽनुस्वारः ८।३।२३ ॥** मान्तस्य पदस्यानुस्वारो हलि । हरिं वन्दे ॥ **नश्चापदान्तस्य झलि ८।३।२४॥** नस्य मस्य चापदान्तस्य झल्यनुस्वारः। यशांसि । आक्रंस्यते । झलि किम् । मन्यसे॥ **अनुस्वारस्य ययि परसवर्णः ८।४।५८॥** स्पष्टम् । शान्तः ॥ **वा पदान्तस्य ८।४।५९॥** त्वङ्करोषि, त्वं करोषि ॥ **मो राजि समः क्वौ ८।४।२५॥** क्विबन्ते राजतौ परे समो मस्य मे एव स्यात्। सम्राट् ॥ **हे मपरे वा ८।३।२६ ॥** मपरे हकारे परे मस्य मो

---

–पवर्गीयश्चेत् मकारः, इति व्यापकनियमं सूचयति ॥१ "वा पदान्तस्य," इत्यतः 'पदान्तात्' इति विभक्तिविपरिणामेनानुवर्त्योदाहरति–'**तद्+शिव**' इति॥ त्रिपाद्यां परत्वेनासिद्धतया श्चुत्वचर्त्वयोः कृतयोः पश्चाच्छत्वमिति दर्शयति '**तद् शिव इत्यत्र**' इति ॥ २ ननु लकारस्याट्प्रत्याहारे पाठाभावात् तच्छ्लोकेनेत्यादौ छत्वं न स्यादत आह–**अमीति** ॥ अटीति पदं विहाय तत्स्थाने **अमीति पठनीयम्** । 'शश्छोऽमि' इत्येवं **सूत्रं** कार्यमित्यर्थः । ३ " पदस्य " इत्यधिकृत्य "**येनविधिः**" इति तदन्तविधिलभ्यमर्थमाह–**मान्तस्येति** ।"हलि सर्वेषाम्"इत्यतो हलीति च ॥ ४ "मोऽनुस्वार" **इत्यतः** 'मः' इति 'अनुस्वारः' इति चानुवर्ततेऽत आह–**मस्य चेति** ॥५ "मोऽनुस्वारः" इत्यतः 'मः' इति षष्ठ्यन्तमनुवर्तते । **मकारस्य मकार**-विधानमनुस्वारव्यावृत्त्यर्थमित्याह–**मस्य म एवेति** ॥ ६ "मोऽनुस्वारः" इत्यतः '**मः**' **इति** षष्ठ्यन्तम्, "मो राजि–" इत्यतो 'मः' इति **प्रथमान्तं च वर्तते इत्याह–मस्य मो वेति** ॥

वा। किम् ह्मलयति, किं ह्मलयति ॥ ( यवलपरे यवला वा ) किय्ँ ह्यः, किं ह्यः। किव्ँ ह्वलयति, किं ह्वलयति। किल्ँ ह्लादयति, किं ह्लादयति ॥ **नपरे नः ८।३।२७ ॥** नपरे हकारे मस्य नो वा। किन् ह्नुते, किं ह्नुते ॥ **आद्यन्तौ टकितौ १।१।४६ ॥** टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः ॥ **ङ्णोः कुक्टुक् शरि ८।३।२८॥** वा स्तः। (चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्)। प्राङ्ख् षष्ठः, प्राङ्क्षष्ठः, प्राङ् षष्ठः। सुगण्ठ् षष्ठः, सुगण्ट् षष्ठः, सुगण् षष्ठः ॥ **ड: सि धुट् ८।३।२९॥** डात्परस्य सस्य धुड्वा।

---

१ 'मः' इति षष्ठयन्तम्, 'हे' इति चानुवर्तते। तथा च 'यवलपरे हकारे परे मस्य यवला वा' इत्यर्थः ॥ २ **किय्ँह्य** इति। यवलानामनुनासिकाननुनासिकभेदेन द्विविधानामपि प्राप्तौ मकारस्यानुनासिकत्वेन तादृशा एव तत्स्थाने भवन्तो यवला भवन्तीति भावः। विधीयमानत्वेन सवर्णाग्राहकत्वान्निरनुनासिका एव यवला भवन्तीति तु नव्याः। यथोक्तम्–"भाव्यमानेन सवर्णानां ग्रहणं न" इति ॥ ३ 'मः' इति षष्ठयन्तम्, 'हे' इति चानुवर्तते 'वा' इति च ॥ ४ टश्च कश्च टकौ तावितौ ययोस्तौ टकितौ। 'द्वन्द्वान्ते द्वन्द्वादौ वा श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति न्यायमाश्रित्याह–**टित्कितावि**ति ॥ ५ यस्य=समुदायस्य, तस्य=समुदायस्य आद्यवयवष्टित् अन्तावयवः कित् ॥ यथासंख्यापरिभाषालब्धमर्थमाह–**क्रमा**दिति ॥ ६ ङ्णोः=ङान्तस्य णान्तस्य च पदस्येत्यर्थः॥७"हे मपरे वा" इत्यतो'वा' इति वर्ततेऽत आह–**वे**ति ॥ ८ चय्प्रत्याहारवाच्यवर्णानां लोकप्रसिद्धवर्गाद्यवर्णानां स्वस्ववर्गद्वितीयवर्णा भवन्ति' इत्यर्थः ॥ ९ "हे मपरे""वा' इत्यतो 'वा' इति वर्तते।'डः' इति पञ्चमी 'सि' इति सप्तमी। तथा च 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति'सि'इति–

ट्त्सन्तः, षट् सन्तः ॥ **नश्च ८।३।३०॥** नान्तात्परस्य सस्य[1] धुड्वा। सन्त्सः, सन्सः ॥ **शि तुक् ८।३।३१॥** पदान्तस्य[3] नस्य शे परे तुग्वा। सञ्[4]छम्भुः सञ्च्छम्भुः सञ्च्शम्भुः, सञ्शम्भुः ॥ **ङमो ह्रस्वादचि ङमुण् नित्यम् ८।३।३२ ॥** ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो[6] ङमुँट् । प्रत्यङ्ङात्मा । सुगण्णीशः । सन्नच्युतः ॥ **समः सुटि ८।३।५ ॥** समो रुँः सुटि ॥ **अत्रानुनासिकः पूर्वस्य तु वा ८।३।२॥** अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा ॥

---

--सप्तम्याः षष्ठ्यर्थत्वेनाह—**सस्य धुडिति** ॥ १ **नान्तादिति**। पदादिति शेषः। २ "ङः सि धुट्" इत्यतः 'सि, धुट्' इति, 'वा' इति चानुवर्तते 'सि' इति सप्तम्याः षष्ठ्यर्थत्वमङ्गीकृत्याह—**सस्येति** ॥ ३ "पदस्य" इत्यधिकृत्य "नश्च" इत्यतः 'नः' इति 'वा' इति वर्तते। 'नः' इति पञ्चम्याः 'नश्च' इत्यत्र चरितार्थतया 'शि'इति सप्तम्या निरवकाशत्वमङ्गीकृत्य पञ्चम्याः षष्ठ्यर्थत्वमङ्गीकृत्याह—**पदान्तस्येति** ॥ ४ "ञछौ ञचछा ञचशा ञशाविति चतुष्टयम् । रूपाणामिह तुक्छत्वचलोपानां विकल्पनात् ॥" तुकि ककार इत्, उकार उच्चारणार्थः, एवं धुटि बोध्यम्। "लोपेतरफलसत्त्वे इत्संज्ञा" इति नियमादिति बोध्यम् । ५ नित्यमहसितः नित्यप्रजल्पित इत्यादाविव नित्यपदं प्रायः समानार्थकम् । तेन "इको यणचि" "सुप्तिङन्तं" "सनाद्यन्ताः" इत्यादौ ङमुड् न कृत इति भावः ॥ ६ 'अचि' इति सप्तम्याः षष्ठ्यर्थत्वमाश्रित्याह—**अच इति** ॥ ७ ङमुट्=ङान्तात्परस्याचो ङुट्, नान्तात् नुडित्यर्थः । ८ "मतुवसो रु सम्बुद्धौ छन्दसि" इत्यतो 'रुः' इति वर्तते। सुडत्रागम एव गृह्यते व्याख्यानादित्याह—**रुरिति** ॥ ९ 'अत्र' इत्यस्य 'रु' प्रकरण इति । तदपि "ससजुषो रुः" इति विहितं न ग्राह्यम् एतदेव बोधयितुं 'रौ' इति विहाय 'अत्र' इत्युक्तम्॥ "मतुवसो–" इत्यतो 'रुः' इत्यनुवर्त्य दिग्योगलक्षणपञ्चमीं च कृत्वाह—**रोः पूर्वस्येति** ॥

**अनुनासिकात्परोऽनुस्वारः ८।३।४ ॥** अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः॥ **खरवसानयोर्विसर्जनीयः ८।३।१५॥** खरि अवसाने च पदान्तस्य रस्य विसर्गः । ( संपुंकानां सो वक्तव्यः ) । सँस्स्कर्त्ता, संस्स्कर्ता ॥ **पुमः खय्यम्परे ८।३।६ ॥** अम्परे खयि पुमो रुः । पुँस्कोकिलः, पुंस्कोकिलः ॥ **नश्छव्यप्रशान् ८।३।७॥** अम्परे छवि नान्तस्य पदस्य रुः, न तु प्रशान्शब्दस्य ॥ **विसर्जनीयस्य सः ८।३।३४ ॥** खरि । चक्रिँस्त्रायस्व, चक्रिंस्त्रायस्व । अप्रशान् किम् । प्रशान्तनोति । पदस्येति किम् । हन्ति ॥ **नॄन् पे ८।३।१०॥** नॄनित्यस्य रुर्वा पे ॥ **कुप्वोः ≍क ≍पौ च**

---

१ " अनुनासिकात् " इति पञ्चमी " ल्यब्लोपे कर्मणि " इत्यभिप्रेत्याह- **अनुनासिकं विहायेति ॥** अत्राश्रयाचा अनुनासिकघटितप्रयोगमित्यर्थः । 'रुः' 'पूर्वस्य' इति अनुवर्त्य योग्यतया विभक्तिविपरिणमय्य व्याचष्टे-**रोः पूर्वस्मात् पर इति ॥** २ " पदस्य " इत्यधिकृत्य " रो रि " इत्यतः ' रः ' इत्यनुवर्त्य तदन्तविधिना ' रान्तस्य पदस्य ' इत्यर्थे अलोऽन्त्यविधिलब्धमर्थमाह-**पदान्तस्येति ॥** ३ सम, पुम्, कान्, एषां विसर्गस्य सकारो भवतीति वक्तव्यार्थः। ४ "खर्परे शरि वा विसर्गलोपः" इत्यस्य " कुप्वोः ≍क ≍पौ च " इत्यस्य चापवादः ॥ ५ **"मतुवसो-"** इत्यतः 'रुः' इत्यनुवर्त्याह-**रुरिति** ॥ ६ "पदस्य" इत्यधिकृतस्य **विशेषणे** ' नः ' इत्यत्र तदन्तविधिः । 'रुः' 'अम्परे' इत्यनुवर्त्तेते इत्याह-**अम्पर इति** ॥ ७ सूत्रे **' अप्रशान् '** इति लुप्तषष्ठीकम् पदम् । अप्रशानित्यस्य पर्युदासत्वे सुसखिशब्दे घिसंज्ञाया इव सुप्रशान्-अप्रशान्-शब्दादिष्वत्वप्रसङ्ग इति भावः ॥ ८ ' खरवसानयो- ' इत्यतोऽनुवर्त्याह--**खरीति** । ९ द्वितीयान्तानुकरणं लुप्तषष्ठ्यन्तम् ' रुः ' इति " **उभयथर्क्षु** " इत्यत-

**८।३।३७॥** कवर्गे पवर्गे च विसर्गस्य ≍ क ≍ पौ स्तः चाद्विसर्गः। नॄँ ≍ पाहि, नॄँः पाहि, नॄं ≍ पाहि, नॄंः पाहि, नॄन्पाहि॥ **तस्य परमाम्रेडितम् ८।१।२॥** द्विरुक्तस्य परमाम्रेडितं स्यात्॥ **कानाम्रेडिते ८।३।१२॥** कान्नकारस्य रुः स्यादाम्रेडिते। काँस्कान्, कांस्कान्॥ **छे च ६।१।७२॥** ह्रस्वस्य छे तुक्। शिवच्छाया॥ **पदान्ताद्वा ६।१।७६॥** दीर्घात्पदान्ताच्छे तुग् वा। लक्ष्मीच्छाया, लक्ष्मीछाया॥

इति हल्संधिः।

---

–उभयथेति चानुवर्तते। पे इत्यकारो न विवक्षितः। तेन प्रीणाति पुनाति इत्यादावपि रुः सिध्यति इत्यभिप्रायवानाह–**नॄन्नित्यस्येति**॥ १"शर्परे विसर्जनीयः" इत्यतो 'विसर्जनीयः' इति चेनानुकृष्यते। "विसर्जनीयस्य सः" इत्यतो 'विसर्जनीयस्य' इति 'खरि' इति, चानुवर्तते। तेन कवर्गपवर्गसम्बन्धिनि 'खरि' इत्यर्थेन 'नरो गच्छति, जनो बध्नाति' इत्यादौ खर्परत्वाभावेन विसर्गस्याजातत्वेन रोरुत्वं सिद्ध्यतीति बोध्यम्॥ २ आदेशयोः कपावुच्चारणार्थौ। ३"सर्वस्य द्वे" इत्यनुवर्तते, तेनाभ्यासाधिकारविहितद्वित्वे नास्य प्रवृत्तिः॥ ४ 'कान्' इति द्वितीयान्तानुकरणं लुप्तषष्ठ्यन्तम्। अलोन्त्यपरिभाषया 'नः' इत्यस्यानुवृत्त्या वा लब्धमर्थमाह–**कान्नकारस्येति**॥५ 'ह्रस्वस्य पिति कृति तुक्' इत्यतः 'तुक्' इति, 'ह्रस्वस्य' इति चानुवर्तते॥ ६ श्चुत्वस्यासिद्धत्वाज्जश्त्वेन दः। ततश्चर्त्वस्यासिद्धत्वात् पूर्वं श्चुत्वेन जः तस्य चर्त्वेन चः। श्चुत्वस्यासिद्धत्वाच्चोः कुरिति कुत्वं न। ७"ह्रस्वस्य पिति कृति–" इत्यतः "तुक्' इति "छे च" इत्यतः 'छे' इति 'दीर्घात्' इति सूत्रं चानुवर्ततेऽत आह–**दीर्घादित्यादि**॥ दीर्घस्यैवायं तुक् न तु छस्य, "चेनाम्रच्छाया" इति निर्देशात्॥

**विसर्जनीयस्य सः ८।३।३४ ॥** खरि[1] । विष्णुस्त्राता ॥ **वा शरि ८।३।३६ ॥** शरि विसर्गस्य[3] विसर्गो वा । हरिः शेते, हरिश्शेते ॥ **ससजुषो रुः ८।२।६६ ॥** पदान्तस्य[4] सस्य सजुषश्च रुः स्यात् ॥ **अतो रोरप्लुतादप्लुते ६।१।११३ ॥** अप्लुतादतः परस्य रोरुः[5] स्यादप्लुतेऽति । शिवोऽर्च्यः ॥ **हशि च ६।१।११४॥** तथा[6] । शिवो वन्द्यः ॥ **भोभगोअघोअपूर्वस्य योऽशि ८।३।१७॥** एतत्पूर्वस्य रोर्यादेशोऽशि । देवा इह, देवायिह । भोस् भगोस् अघोस् इति सान्ता निपाताः[8] । तेषां रोर्यत्वे कृते ॥ **हलि सर्वेषाम् ८।३।२२ ॥** भोभगोअघोअपूर्वस्य[9] यस्य लोपः स्याद्धलि ।

---

१ यद्यपि विसर्गस्यापि हल्त्वेन हल्सन्धावेवास्यान्तर्भाव एवं स्वादिसन्धेरपि, तथापि ब्राह्मणवसिष्ठन्यायेन श्रोतॄणां प्रतिपत्तिसौकर्याय पृथक् कथनम् । श्रोतारो हि विसर्गस्थानिककार्यसन्देहे विसर्गसन्धिप्रकरणमवेक्ष्य निश्चिन्वन्ति, एवं स्वादिस्थानिककार्यसन्देहेऽपीत्यवधेयम् । 'शिवोऽर्च्यः' इत्यतः स्वादिसन्धिर्बोध्यः ॥ २ "खरवसानयो-" इत्यतः 'खरि' इति वर्ततेऽत आह-**खरीति** ॥ ३ "विसर्जनीयस्य" इति "शर्परे विसर्जनीयः" इत्यतो विसर्जनीय इति वर्ततेऽत आह-**विसर्गस्येति** ॥ ४ "पदस्य" इत्यनुवर्तते, तदन्तविधिना 'सान्तस्य सजूरन्तस्य' पदस्य इत्यर्थेऽलोन्त्यपरिभाषालब्धमर्थमाह-**पदान्तस्येति** ॥ ५ "एङः पदान्तात्" इत्यतः 'अति' इति, "ऋत उत्" इत्यतः 'उद्' इति चानुवर्तेऽत आह--**उरिति** ॥ ६ "अतो रोरप्लुतात्" इति "उद्:" इति चानुवर्ततेऽत आह-**तथेति** ॥ 'अप्लुतादतः परस्य रोरुः स्याद्धशि' इत्यर्थः ॥ ७ "रोः सुपि" इत्यतो 'रोः' इति वर्ततेऽत आह-**रोरित्यादि** ॥ ८ निपातानामपीत्यर्थः । तेन "विभाषा भवद्भगवदघवतामोच्चावस्य" इति निष्पन्नानामपि ग्रहणं सिध्यतीति भावः ॥ ९ भोभगोअघोअपूर्वस्य इति "व्योर्लघु-" इत्यतो 'व्योः' इति "लोप

भो देवाः । भगो नमस्ते । अघो याहि ॥ **रोऽसुपि ८।२।६९ ॥** अह्नो रेफादेशो न तु सुपि । अहरहः । अहर्गणः ॥ **रो रि ८।३।१४॥** रेफस्य रेफे परे लोपः ॥ **ढ्रलोपे पूर्वस्य दीर्घोऽणः ६।३।१११॥** ढरेफयोर्लोपनिमित्तयोः पूर्वस्याणो दीर्घः । पुना रमते । हरी रम्यः । शम्भू राजते । अणः किम् । तृढः । वृढः । मनस् रथ इत्यत्र रुत्वे कृते हशि चेत्युत्वे रोरीति लोपे च प्राप्ते ॥ **विप्रतिषेधे परं कार्यम् १।४।२ ॥** तुल्यबलविरोधे परं कार्यं स्यात् । इति लोपे प्राप्ते । पूर्वत्रासिद्धमिति रो रीत्यस्यासिद्धत्वादुत्वमेव । मनोरथः ॥ **एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ६।१।१३२ ॥** अककारयोरेतत्तदोर्यः सुस्तस्य लोपो हलि न तु नञ्समासे । एष विष्णुः । स शम्भुः । अकोः किम् । एषको रुद्रः । अनञ्समासे किम् । असः शिवः । हलि किम् । एषोऽत्र ॥ **सोऽचि लोपे चेत्पादपूरणम्**

---

–शाकल्यस्य" इत्यतो 'लोपः' इति च वर्तते । तत्र तस्यैतत्पूर्वस्यासम्भवादाह–**भोभगोअघोअपूर्वस्येत्यादि** ॥ १ " अहन् " इति सूत्रं वर्ततेऽत आह–**अह्न** इत्यादि ॥ २ " ढो ढे लोपः " इति सूत्रात् 'लोप' इति वर्ततेऽत आह–**लोप** इति ॥ ३ ढश्च रश्च ढ्रौ, ढ्रौ लोपयत इति ढ्रलोपौ – इति विग्रहफलितमर्थमाह–**ढरेफयोर्लोपनिमित्तयोरिति** ॥ ४ समासाभावेऽपि पूर्वस्य दीर्घसिद्धये पूर्वग्रहणमित्यभिप्रायेणोदाहरति–**पुना रमत** इत्यादि ॥ ५ 'तृह हिंसायाम्, वृहू उद्यमने' आभ्यां क्तः, ढत्व-धत्व-ष्टुत्व-ढलोपाः । अण्ग्रहणाभावे दीर्घपदश्रुत्या 'अचश्च' इति 'अचः' इत्युपस्थितौ 'पूर्वस्याचो दीर्घः' इत्यर्थादत्रापि दीर्घापत्तिरिति भावः ॥६ अन्यत्रान्यत्र लब्धावकाशयोरेकत्र युगपत्प्राप्तिस्तुल्यबलविरोधः ॥ ७ " तन्मध्यपतितस्तद्ग्रहणेन गृह्यते"–

६।१।१३४॥ स इत्यस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्य्येत । सेमामविड्ढि प्रभृतिम् । सैष दाशरथी रामः ॥

इति विसर्गसन्धिः ।

---

अथ षड्लिंगेषु अजन्तपुँल्लिंगाः ।

**अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १।२।४५** । धातुं प्रत्ययं प्रत्ययान्तं च वर्ज्जयित्वा अर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात् ॥ **कृत्तद्धितसमासाश्च १।२।४६ ॥** कृत्तद्धितान्तौ समासाश्च तथा स्युः ॥ **स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् ४।१।२ ॥** सु औ जस् इति प्रथमा । अम् औट् शस् इति द्वितीया । टा

---

—इति परिभाषया एतद्शब्देन 'एतकद्' शब्दस्यापि ग्रहणादिति भावः ॥ १ 'सः' इति प्रथमान्तानुकरणं लुप्तषष्ठ्यन्तम् ॥ 'सुलोपः' इति वर्ततेऽत आह—**स इत्यस्येति** ॥ २ पादशब्देनात्र ऋक्पादवच्छ्लोकपादोऽपि ग्राह्य इत्याशयेन ऋक्पादमुदाहृत्य श्लोकपादमुदाहरति—**सैष दाशरथिरिति** ॥ ३ लौकिके प्रयोगे प्रसिद्धतरो योऽर्थस्तद्वत्त्वम् अर्थवत्त्वम् ॥ अर्थवद्ग्रहणं धनं वनमित्यादौ प्रतिवर्णं प्रातिपदिकसंज्ञावारणाय ॥ अहन्नित्यादौ तद्वारणाय 'अधातुः' इति ॥ ४ क्विबन्तविजन्तेषु धातुत्वानपायात्प्रातिपदिकत्वसिद्ध्ये कृद्ग्रहणम् ॥ तद्धितान्तेषु प्रत्ययान्तत्वानपायात् प्रातिपदिकत्वसिद्ध्ये तद्धितग्रहणम् । समासपदं तु नियमार्थम्—

"यत्रार्थवति संघाते पूर्वो भागस्तथोत्तरः ॥
स्वातन्त्र्येण प्रयोगार्हः समासस्यैव तस्य चेत् ॥" इति ॥

भ्याम् भिस् इति तृतीया । ङे भ्याम् भ्यस् इति चतुर्थी । ङसि भ्याम् भ्यस् इति पञ्चमी । ङस् ओस् आम् इति षष्ठी । ङि ओस् सुप् इति सप्तमी ॥ **ङ्याप्प्रातिपदिकात् ४।१।१ ॥ प्रत्ययः ३ । १ । १ ॥ परश्च ३ । १ । २ ॥** इत्यधिकृत्य ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः ॥ **सुपः १।४।१०१॥** सुपस्त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचनबहुवचनसंज्ञानि स्युः ॥ **द्व्येकयोर्द्विवचनैकवचने १।४।२२ ॥** द्वित्वैकत्वयोरेते स्तः ॥ **विरामोऽवसानम् १।४।११० ॥** वर्णानामभावोऽवसानसंज्ञः स्यात् । रुत्वविसर्गौ । रामः ॥ **सरूपाणामेकशेष एक-**

---

१ स्वदेशे वाक्यार्थबोधशून्यत्वे सति परदेशे वाक्यार्थबोधजनकत्वम् अधिकारत्वम् । एवं त्रीणि सूत्राण्यधिकृत्य 'स्वौजस्'-इति सूत्रस्यार्थमाह-**ङ्यन्तादिति** ॥ परे स्वादयः स्युस्ते च प्रत्ययाः=प्रत्ययसंज्ञका इति योज्यम् ॥ २ "तिङस्त्रीणित्रीणि" इत्यतः 'त्रीणित्रीणि' इति, "तान्येकवचन-" इत्यतः 'एकवचनद्विवचनबहुवचनान्येकशः' इति चानुवर्त्याह-**त्रीणित्रीणीति** ॥ ३ भावप्रधाननिर्देशोऽयमिति द्विवचनम् । अन्यथा ( द्वित्वैकत्वपरत्वानङ्गीकारे ) द्विशब्देन द्वित्वविशिष्टयोर्ग्रहणे एकशब्देन एकत्वविशिष्टैकस्य ग्रहणे तथा द्वन्द्वे द्व्येकशब्दस्य बहुसंख्याकत्वेन 'द्व्येकेषु' इति बहुवचनान्तमेव निर्दिश्येत, तथा निर्देशाभावाच्च द्वित्वैकत्वपरतात्र सूत्रकृताऽभिप्रेतेति भावः ॥ ४ भाष्यकृता-"एकवचनम्" इति सामान्यसूत्रं विधायकं कृत्वा तस्य बाधकम् "द्विबह्वोर्द्विवचनबहुवचने इति सूत्रं कृत्वा सप्तम्यन्तम् एकपदं प्रत्याख्यातम् ॥ तथा च असंख्येभ्योऽव्ययेभ्योऽप्येकवचनं सिध्यति ॥ ५ लोके प्रतीतपदार्थकध्वन्यात्मकशब्दानुशासनेऽभावो भावो वा योग्यतया वर्णानामेव सम्भवतीत्यत आह-**वर्णानामिति** ॥ अभावश्चायं संसर्गाभावो 'विवक्' इत्यादौ प्रध्वंसाभावो 'रामः' इत्यादावत्यन्ताभावो वाच्यः ॥ ६ संज्ञाशब्दोऽयमव्युत्पन्न-

**विभक्तौ** १।२।६४ ॥ एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते ॥ **प्रथमयोः पूर्वसवर्णः** ६।१।१०२॥ अकः प्रथमाद्वितीययोरचि पूर्वसवर्णदीर्घ एकादेशः स्यात् । इति प्राप्ते ॥ **नादिचि** ६।१।१०४ ॥ आदिचि न पूर्वसवर्णदीर्घः । वृद्धिरेचि । रामौ ॥ **बहुषु बहुवचनम्** १।४।२१॥ बहुत्वविवक्षायां बहुवचनं स्यात् ॥ **चुटू** १।३।७॥ प्रत्ययाद्यौ चुटू इतौ स्तः ॥ **विभक्तिश्च** १।४।१० ॥ सुप्तिङौ विभक्तिसंज्ञौ स्तः ॥ **न विभक्तौ तुस्माः**

---

--इति पक्षे अर्थवत्सूत्रेण प्रातिपदिकसंज्ञा, 'करणाधिकरणयोश्च' इत्यधिकारे वापवादेन 'हलश्च' इति घञा रमन्तेऽस्मिन्निति व्युत्पादने तु 'कृत्तद्धित-' इति सूत्रेणेति विवेकः ॥ १ "वृद्धो यूना-" इत्यत 'एव' इत्यनुकृष्याह-**सरूपाण्येवेति** ॥ एकशब्दो यावत्परः विभक्ताविति विषयसप्तमी, तेन "यावद्विभक्तिविषये, यानि सरूपाण्येव दृष्टानि" इति परमार्थः । तेन जननीपरिच्छेत्रार्थकयोर्मातृशब्दयोर्नैकशेषः, श्यामादिषु सारूप्येऽप्यौजसादौ वैरूप्यात् ॥ २ "अकः सवर्णे दीर्घः" इत्यतः 'अकः' इति 'दीर्घः' इति, च "इको यणचि" इत्यतो 'अचि' इति, वर्ततेऽत आह-**अक इत्यादि** ॥ ३ "प्रथमयोः **पूर्वसवर्णः**" इति वर्ततेऽत आह-**पूर्वसवर्णेति** ॥ ४ "वृद्धिरेचि" इत्येतद् बाधित्वा प्राप्तः "प्रथमयोः" इति पूर्वसवर्णदीर्घस्य "नादिचि" इत्यनेन बाधनात् "वृद्धिरेचि" इत्येतदबाधितमेव प्रवर्तत इति भावः ॥ ५ राम-राम-इत्येवं द्वित्वादिविवक्षायाम् विभक्त्युत्पत्तेः प्रागेवैकशेषः, ततः "यः शिष्यते स लुप्यमानार्थाभिधायी" इति न्यायेन द्विवचनादीति बोध्यम् ॥ ६ "उपदेशेऽजू-" इत्यतः 'इत्' इति "षः प्रत्ययस्य" इत्यतः "प्रत्ययस्य" इति "आदिर्ञिटु-" इत्यतः 'आदिः' इति च वर्ततेऽत आह-**प्रत्ययाद्या इति**॥ ७ "तिङस्त्रीणि"इत्यतः'तिङः'इति "सुपः" इति सूत्रे चानुवर्ततेऽत आह-**सुप्तिङाविति** ॥

१।३।४॥ विभक्तिस्थास्तवर्गसमा नेतः। इति सस्य नेत्त्वम्। रामाः॥ **एकवचनं सम्बुद्धिः** २।३।४९॥ सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात्॥ **यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्** १।४।१३॥ यः प्रत्ययो यस्मात् क्रियते तदादि शब्दस्वरूपम् तस्मिन्नङ्गं स्यात्॥ **एङ्ह्रस्वात्सम्बुद्धेः** ६।१।९७॥ एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते सम्बुद्धेश्चेत्। हे राम। हे रामौ। हे रामाः। **अमि पूर्वः** ६।१।१०७॥ अकोऽम्यचि पूर्वरूपमेकादेशः। रामम्। रामौ॥ **लशक्वतद्धिते** १।३।८॥ तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतः स्युः॥ **तस्माच्छसो नः पुंसि** ६।१।१०३॥ पूर्वसवर्ण-

---

१ "उपदेशेऽज्" इत्यतः 'इत्' इति वर्ततेऽत आह-**नेत इति**॥ २ इत्त्वम्=इत्संज्ञा, 'हलन्त्यम्' इति प्राप्ता। ३ "सम्बोधने च" इत्यतः 'सम्बोधने' इति "प्रातिपदिकार्थलिङ्ग--" इति सूत्रतः 'प्रथमा' इति वर्ततेऽत आह-**सम्बोधन** इत्यादि॥ ४ **तदादीति**। तत्=प्रकृतिरूपम् आदिर्यस्य शब्दस्वरूपस्येति बहुव्रीहिः। प्रकृते व्यपदेशिवद्भावेनाङ्गसंज्ञा। मुख्योदाहरणं तु भवामि 'भविष्यामि' इत्यादीति बोध्यम्॥ ५ "लोपो व्योर्वलि" इत्यतो 'लोपः' इति, "हल्ङ्याब्भ्यो-" इत्यतो 'हल्' इति वर्तते "प्रत्ययग्रहणे यस्मात्स विहितस्तदादेः" इति परिभाषयाऽङ्गपर्यायस्य तदाद्यंशस्योपस्थितौ तदन्तविधिना फलितमर्थमाह-**एङन्तादित्यादि**॥ ६ "इको यण्-" इत्यतोऽचीति "एकः पूर्वपरयोः" इति च वर्ततेऽत आह **अचीति** अमवयवेऽचीत्यर्थः॥ ७ "उपदेशेऽज्--" इत्यतः 'इत्' इति, "षः प्रत्ययस्य" इत्यतः 'प्रत्ययस्य' इति, "आदिर्ञिटुडवः--" इत्यतः 'आदिः' इति च वर्ततेऽत आह--**प्रत्ययाद्या इति**॥ रामशः सिध्मलः नौका इत्यादिव्यावृत्तये **अतद्धित इति**॥ ८ "प्रथमयोः" इत्यतः 'पूर्वसवर्णदीर्घः' इत्यनुवर्ततेऽत आह-**पूर्वसवर्णदीर्घादिति**॥

दीर्घात्परो यः शसः सस्तस्य नः स्यात्पुंसि॥ **अट्कुप्वाङ्नुम्व्यवायेऽपि ८।४।२ ॥** अट् कवर्ग पवर्ग आङ् नुम् एतैर्व्यस्तैर्यथासम्भवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः समानपदे । इति प्राप्ते । **पदान्तस्य ८।४।३७ ॥** नस्य णो न । रामान् ॥ **टाङसिङसामिनात्स्याः ७।१।१२ ॥** अदन्ताट्टादीनामिनादयः स्युः । णत्वम् । रामेण ॥ **सुपि च ७।३।१०२॥** यञादौ सुपि अतोऽङ्गस्य दीर्घः । रामाभ्याम् ॥ **अतो भिस ऐस् ७।१।९ ॥** अनेकाल्शित्सर्वस्य

---

१ पुंसि वर्तमानाद्विहितस्य शसोऽवयवो यः पूर्वसवर्णदीर्घात् परः सकारस्तस्य नकारादेश इति परमार्थः ॥ २ ऋ-र्-ष्-एभ्यः परस्य नस्य णः स्वरवर्णः, कवर्ग, पवर्ग, य, व, ह, अनुस्वार, एषां व्यवधानेऽपि नस्य णः; एतदतिरिक्तवर्णव्यवधाने तु न; यथा अर्चना, इति णत्वविधेः साधारणो नियमः । 'चुटुतुलशर्व्यवाये न' इति वार्तिकम् एतदभिप्रायमेव ॥ ३ "रषाभ्यां नो णः समानपदे" इति सूत्रं वर्ततेऽत आह--**रषाभ्यामिति** ॥ निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वं समानपदत्वम् ॥ ४ "रषाभ्यां नो णः समानपदे" इति वर्तते " न भाभू--" इत्यतो 'न' इति चेत्यत आह–**नस्येत्यादि** ॥ ५ " अपदान्तस्य मूर्धन्यः" इत्यधिकारं णत्वप्रकरणेऽप्यानीय "रषाभ्यां–"सूत्रे णग्रहणं "पदान्तस्य" इति सूत्रं च भाष्यकृता प्रत्याख्यातम् ॥ ६ "अतो भिस–"–इत्यतः 'अतः' इति वर्तते, "अङ्गस्य" इत्यधिक्रियते विशेषणे तदन्तविधिरित्याह--**अदन्तादिति** ॥ ७ "अतो दीर्घो यञि" इति वर्तते,विशेषणं तदादिविधिः"अङ्गस्य" इत्यधिक्रियते इत्याह--**यञादाविति** ।। ८ 'अकारान्तादङ्गाद् भिस ऐस् स्यात्' इत्यर्थस्य स्पष्टत्वान्न व्याख्यातम् । . 'अकारात्परस्याङ्गसंज्ञानिमित्तस्य भिसः' इति तु परमार्थः । अतएव 'ब्राह्मणभिस्सा' इत्यत्र न भिस ऐस् । अन्यथाऽन्तर्वर्तिविभक्त्या ब्राह्मणे–

रामैः॥**ङेर्यः ७।१।१३॥** अतोऽङ्गात्परस्य ङेर्यादेशः ॥ **स्थानिवदादेशोऽनल्विधौ १।१।५६ ॥** आदेशः स्थानिवत्स्यान्न तु स्थान्यलाश्रयविधौ । इति स्थानिवत्त्वात् सुपि चेति दीर्घः । रामाय । रामाभ्याम् ॥ **बहुवचने झल्येत् ७।३।१०३ ॥** झलादौ बहुवचने सुप्यतोऽङ्गस्यैकारः । रामेभ्यः । सुपि किम् । पचध्वम् ॥ **वाऽवसाने ८।४।५६ ॥** अवसाने झलां चरो वा । रामात्, रामाद् । रामाभ्याम् । रामेभ्यः । रामस्य ॥ **ओसि च ७।३।१०४ ॥** अतोऽङ्गस्यैकारः । रामयोः ॥ **ह्रस्वनद्यापो नुट् ७।१।५४ ॥** ह्रस्वान्ता-

---

–स्यस्याकारान्तस्याङ्गतया तदापत्तिः स्यादिति बोध्यम् ॥१ "अतो भिस--" इत्यतः 'अतः' वर्तते "अंगस्य" इत्यधिक्रियते च । 'ङेः' इति चतुर्थ्येकवचनङे-शब्दस्यैव षष्ठ्यन्तम् न तु सप्तम्येकवचनङिशब्दस्य "बहुवचने" इत्यादिनिर्देशात् ॥ २ आदेशः स्थानिना तुल्यो भवति स्थानिधर्मको भवतीति यावत्, आदेशस्य स्थानिभूतो योऽल् तत्स्थानिसम्बन्धी च योऽल् तद्वृत्तिधर्माश्रये तु नेति परमार्थः ॥ ३ अत्र यादेशे जाते सुप्त्ववैकल्यप्रयुक्ता दीर्घशास्त्राप्राप्तिरिति सुप्त्वस्य भ्यामादावपि सत्त्वेन स्थान्यल्मात्रवृत्तित्वाभावान्न निषेधप्रवृत्तिरिति भावः । "यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तावतिदेशो मृग्यते तस्य निमित्तस्य स्थान्यल्वृत्तित्वमात्रधर्मत्व एवानल्विधाविति निषेधप्रवृत्तिः" इति ह्यत्र नियम इति ज्ञेयम् । ४ "सुपि च" इति दीर्घे कर्तव्ये 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति परिभाषा तु न प्रवर्तते, "कष्टाय क्रमणे" इति निर्देशात् ॥ ५ "अतो दीर्घो यञि" इत्यतः 'अतः' इति "अंगस्य" इति, "सुपि च" इत्यतः 'सुपि इति वर्तते ॥ ६ "झलां जश् झशि" इत्यतो झलामिति, "अभ्यासे चर्च" इत्यतः 'चर्' इति वर्तते ॥ ७ "अतो दीर्घो--" इत्यतः अतः इति "अंगस्य" इति च "बहुवचने झलि" इत्यतः 'एत्' इति च वर्तते ॥ ८ "अंगस्य"–

ह्रस्वन्तादाबन्ताच्चांगात्परस्यामो नुडागमः ॥ **नामि ६।४।३** । अजन्तांगस्य दीर्घः । रामाणाम् । रामे । रामयोः । सुपि एत्वे कृते । **आदेशप्रत्यययोः ८।३।५९॥** इण्कुभ्यां परस्यापदान्तस्यादेशस्य प्रत्ययावयवस्य च सस्य मूर्धन्यादेशः । ईषद्विवृतस्य सस्य तादृश एव षः । रामेषु । एवं कृष्णादयोऽप्यदन्ताः ॥ **सर्वादीनि सर्वनामानि १।१।२७ ॥** सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थाया-मसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः।

---

–इति विभक्तिविपरिणतम् अधिक्रियते,विशेषणे तदन्तविधिः"आमि सर्वनाम्नः--" इत्यतः 'आमि' इति वर्तते षष्ठ्या विपरिणम्यतेऽत आह--**ह्रस्वान्तादित्यादि** ॥ १ "ढ्रलोपे पूर्वस्य"--इत्यतः 'दीर्घः इति वर्तते' दीर्घविधिश्रुत्या "ह्रस्वदीर्घप्लुत-शब्दैर्यत्र विधानं तत्र 'अचः' इति षष्ठ्यन्तं पदमुपतिष्ठते" इत्यर्थकेन "अचश्च" इति सूत्रेण 'अचः' इत्युपतिष्ठते । "अंगस्य" इत्यधिक्रियते विशेषणे तदन्तविधि-रित्याह--**अजन्ताङ्गस्येत्यादि** ॥ २ "गालवानाम्" "प्रत्ययादीनाम्" इत्यादिनिर्देशैः संनिपातपरिभाषाऽत्रापि दीर्घे न प्रवर्त्तते ॥ ३ "अपदा-न्तस्य मूर्धन्यः" "इण्कोः" इत्यधिकृत्य "सहे साडः सः" इत्यतः 'सः' इति अनुवर्त्याह--**इण्कुभ्यामिति** ॥ ४ आदेशस्य सस्य=आदेशरूपस्य सकारस्येत्यर्थः। तेन तिसृणामित्यादौ न दोषः । प्रत्ययशब्दो लक्षणया प्रत्ययावय-वपरः, "आत्मनेपदेषु"–इत्यादिनिर्देशात् 'प्रत्ययरूपसकारस्य' इत्यर्थे निर्देशास-ङ्गतिः स्पष्टैव ॥ ५ पूर्वादीनि सप्त व्यवस्थायामसंज्ञायां च सर्वादिगणसन्निविष्टानि वेदितव्यानि । स्वमित्येतत्सर्वादिगणसन्निविष्टं वेदितव्यं ज्ञातिधनाख्या नो चेत् ६ अन्तरमित्येतत्सर्वादिगणसन्निविष्टं ज्ञेयम् - बहिर्योगोपसंव्याने चेत् ।

त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् ॥ **जसः शी ७।१।१७** ॥ [1]अदन्तात्सर्वनाम्नो जसः शी स्यात् । अनेकाल्त्वात्सर्वादेशः। सर्वे ॥**सर्वनाम्नः स्मै ७।१।१४**॥ [2]अतः सर्वनाम्नो ङेः स्मै । सर्वस्मै ॥ **ङसिङ्योः स्मात्स्मिनौ ७।१।१५**॥ अतः[3] सर्वनाम्न एतयोरेतौ स्तः।सर्वस्मात्। **आमि सर्वनाम्नः सुट् ७।१।५२** ॥ अ[4]वर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः । एत्वषत्वे । सर्वेषाम् । सर्वस्मिन्[5] । शेषं रामवत् । एवं विश्वादयोऽप्यदन्ताः । उभशब्दो द्विवचनान्तः । उभौ २ । उभाभ्याम् ३ । उभयोः २। त[6]स्येह पाठोऽकजर्थः । उभयशब्दस्य द्विवचनं

---

१ "अतो भिस"इत्यतः 'अतः' इति "सर्वनाम्नः स्मै"इत्यतः"सर्वनाम्नः"इति च वर्तते विशेषणे तदन्तविधिरित्यत आह--**अदन्तादित्यादि** । अदन्तादङ्गात्परस्य सर्वनाम्नो विहितस्येत्यर्थः। तेन 'ये,ते' इत्यादौ नाव्याप्तिः,'मासपूर्वा'इत्यादौ च नातिव्याप्तिः। एवं 'सर्वनाम्नः स्मै''ङसिङ्योः'-इत्यत्र व्याख्येयम्।२"अतो भिसः-" इत्यतः 'अतः' इति ' ङेर्यः' इत्यतो ' ङेः' इति वर्ततेऽत आह--**अतः सर्वनाम्न** इति ॥ ३ "अतो भिस--" इत्यतः 'अतः' इति "सर्वनाम्नः स्मै" इत्यतः 'सर्वनाम्न' इति च वर्ततेऽत आह--**अतः सर्वनाम्न** इत्यादि ॥ ४ "आज्जसेरसुक्" इत्यतः 'आद्' इति वर्तते, विशेषणे तदन्तविधिरित्याह--**अवर्णान्तादिति** ॥ ५ ननु सर्वशब्दस्य बुद्धिस्थानेकार्थवाचित्वेन बहुवचनमेव स्यान्नैकवचनादि इति चेत्। अत्राहुः--बुद्धिस्थानेकसंख्याकावयवारब्धसमुदाये सर्वशब्दः शक्त इति यदानुद्भूतावयवः समुदायस्तदैकवचनम् भवत्येव यथा सर्वो लोक इति । तादृक्समुदायद्वित्वादिविवक्षायां द्विवचनादि । उद्भूतावयवभेदविवक्षायां तु बहुवचनमेव सर्वे घटा इति यथेति ॥ ६ ननु द्विवचने सर्वनामकार्याभावात् सर्वादिगणे व्यर्थ उभशब्दस्य पाठोऽत आह-**तस्येति** ॥ उभशब्दस्य इह=सर्वादिगणे'उभकौ' इति प्रयोगे"अव्य-

नास्ति । उभयः । उभये । उभयम् । उभयान् । उभयेन । उभयैः उभयस्मै । उभयेभ्यः । उभयस्मात् । उभयेभ्यः । उभयस्य । उभयेषाम् उभयस्मिन् । उभयेषु ॥ डतरडतमौ प्रत्ययौ । प्रत्ययग्रहणे तदन्तग्रहणमिति तदन्ता ग्राह्याः ॥ नेम इत्यर्द्धे ॥ समः सर्वपर्य्यायः । तुल्यपर्य्यायस्तु न, यथासंख्यमनुदेशः समानामिति ज्ञापकात् ॥ **पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् १ । १ । ३४ ॥** एतेषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणसूत्रात्सर्वत्र या प्राप्ता सा जसि वा स्यात् । पूर्वे, पूर्वाः । असंज्ञायां किम् । उत्तराः कुरवः । स्वाभिधेयापेक्षावधिनियमो व्यवस्था । व्यवस्थायां किम् । दक्षिणा गाथकाः । कुशला इत्यर्थः ॥ **स्वमज्ञातिधनाख्यायाम् १।१।३५ ॥** ज्ञाति-

---

सर्वनाम्नामकच् प्राक् टेः" इत्यकच्प्रत्ययार्थ इत्यर्थः । १ 'उभयो मणिः, उभये देवमनुष्याः' इति भाष्यकृता द्विवचनस्यादर्शितत्वात् ॥ २ कतर-कतम-यतर-यतम-ततर-ततम-एकतर-एकतमशब्दाः ॥ ३ सर्वादिगणसन्निविष्ट इति शेषः ॥ ४ सर्वशब्दसमानार्थकः सर्वादिगणसन्निविष्ट इत्यर्थः । एकार्थबोधकाः शब्दाः परस्परं पर्याया इत्युच्यन्ते । तदानुपूर्वीभिन्नत्वे सति तच्छक्यार्थकत्वं पर्यायत्वम् । तुल्यार्थकस्यापि समशब्दस्य ग्रहणे तु 'समेषाम्' इत्येवं निर्देशेन भाव्यं स्यादिति भावः ॥ ५ "सर्वादीनि-" इत्यतः 'सर्वनामानि' इति "विभाषा जसि" इति च वर्तते ॥ गणसूत्रैः सिद्धावेकवाक्यताया आह-**एतेषामिति** ॥ ६ स्वस्याभिधेयः स्वाभिधेयः स्वाभिधेयम् अपेक्षते स्वाभिधेयापेक्षः स चासाववधिनियमः स्वाभिधेयापेक्षावधिनियमः इति विग्रहः ॥ ७ 'स्वो ज्ञातावात्मनि, स्वं त्रिष्वात्मीये, स्वोऽस्त्रियां धने' इत्यमरः ॥ "विभाषा जसि" 'सर्वनामानि' इति वर्ततेऽत आह-**ज्ञातिधनान्येति** ॥

धनान्यवाचिनः स्वशब्दस्य प्राप्ता संज्ञा जसि वा। स्वे, स्वाः। आत्मीयाः आत्मान इति वा। ज्ञातिधनवाचिनस्तु। स्वाः। ज्ञातयोऽर्था वा॥ **अन्तरं बहिर्योगोपसंव्यानयोः १।१।३६॥** बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य प्राप्ता संज्ञा जसि वा। अन्तरे, अन्तरा वा गृहाः। बाह्या इत्यर्थः। अन्तरे, अन्तरा वा शाटकाः। परिधानीया इत्यर्थः॥ **पूर्वादिभ्यो नवभ्यो वा ७।१।१६॥** एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः। पूर्वस्मात्, पूर्वात्। पूर्वस्मिन्, पूर्वे। एवं परादीनाम्। शेषं सर्ववत्॥ **प्रथमचरमतयाल्पार्धकतिपयनेमाश्च १।१।३३** एते जसि उक्तसंज्ञा वा स्युः। प्रथमे, प्रथमाः॥ तयः प्रत्ययः। द्वितये, द्वितयाः। शेषं रामवत्॥ नेमे, नेमाः। शेषं सर्ववत्॥ ( तीयस्य ङित्सु वा )। द्वितीयस्मै, द्वितीयायेत्यादि। एवं तृतीयः॥ निर्जरः। **जराया जरसन्यतरस्याम् ७।२।१०१॥** अजादौ विभक्तौ। पदाङ्गाधिकारे तस्य

---

१ "सर्वनामानि" "विभाषा जसि" इति वर्तते॥ २ "ङसिङ्योः स्मात्स्मिनौ" इति वर्तते॥ ३ "सर्वनामानि" इति "विभाषा जसि" इति च वर्तते॥ ४ 'ततस्तदन्ताः' द्वितय-द्वय-त्रितय-त्रय-चतुष्टय-पञ्चतय-षट्तय-सप्तय-अष्टतय-नवतय-दशतयप्रभृतयो ग्राह्याः॥ ५ सर्वनामसंज्ञा। ङिद्भ्योऽन्यत्र रामवत्॥ ६ "अष्टन आ–" इत्यतः 'विभक्तौ' इति, "अचि र–" इत्यतः 'अचि' इति वर्तते। विशेषणे तदादिविधिरित्याह–**अजादौ विभक्ताविति**॥ ७ तस्य=सूत्रोपात्तस्य तदन्तस्य=सूत्रोपात्तान्तस्य। 'येन विधिस्तदन्तस्य' 'व्यपदेशिवदेकस्मिन्' इत्येतत्फलितमिति बोध्यम्। तत्राष्टमाध्याये पदाधिकारः, षष्ठाध्यायस्य चतुर्थपादमारभ्य सप्तमाध्यायपर्यन्तं चाङ्गाधिकार इति ज्ञेयम्।

तदन्तस्य च । निर्दिश्यमानस्यादेशा भवन्ति । एकदेशविकृतमनन्यवदिति जरशब्दस्य जरस् । निर्ज्जरसौ । निर्ज्जरस इत्यादि । पक्षे हलादौ च रामवत् । विश्वपाः ॥ **दीर्घाज्जसि च ६।१।१०५॥** विश्वपौ । विश्वपाः। हे विश्वपाः। विश्वपाम् । विश्वपौ ॥ **सुडनपुंसकस्य १।१।४३॥** स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य ॥ **स्वादिष्वसर्वनामस्थाने १।४।१७॥** कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं पदं स्यात् ॥ **यचि भम् १।४।१८॥** यादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं भसंज्ञं स्यात् ॥ **आ कडारादेका संज्ञा १।४।१॥** इत ऊर्ध्वं कडाराः कर्मधारय इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया । या पराऽनवकाशा च ॥

---

१ षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयत्वं निर्दिश्यमानत्वम् । सूत्रे यतः षष्ठ्युच्चारिता तन्निर्दिश्यमानम् इति सरलं लक्षणम् । "षष्ठी स्थानेयोगा" इति सूत्रार्थभूतेयं परिभाषेति बोध्यम्॥ २ छिन्नपुच्छे शुनि श्वत्वव्यवहारदर्शनादिति भावः॥ ३ "जरारूपं यदङ्गं तस्य, जराशब्दान्तं यदङ्गं तदवयवस्य निर्दिश्यमानस्य एकदेशविकृतस्य जरशब्दस्य च जरसादेशोवाऽजादौ विभक्तौ" इति वर्तुलार्थादिति भावः ॥ ४ जरसादेशाभावपक्षे इत्यर्थः ॥ ५ 'सुट्' इत्ययं सुमारभ्य औटष्कारपर्यन्तं प्रत्याहारः 'असंबुद्धौ' इति विशेषणसामर्थ्यात् "शि सर्वनामस्थानम्" इत्यतः 'सर्वनामस्थानम्' इति वर्तते ऽत आह-**स्वादीति** ॥ ६ "सुप्तिङन्तम्-" इत्यतः 'पदम्' इति वर्तते । बहुव्रीहिलभ्यमर्थमाह-**कप्प्रत्ययावधीति** ॥ ७ समासान्तविधेरनित्यत्वेऽपीदमेव प्रमाणम् ॥ 'स्वादिषु' 'असर्वनामस्थाने' इत्यनुवर्त्याह-**यादिष्वित्यादि** ॥ ८ एवं चात्र भसंज्ञैव न पदसंज्ञेति भावः॥ ९ ननु तर्हि किमुभे अपि सञ्ज्ञे स्यातां नेत्याह-**आकडेति** ॥ नन्वेवमपि 'एकैव संज्ञा भवति नोभे' इति सूत्रेण बोधितेऽपि तत्र किं पदसंज्ञैवैका संज्ञा संभवति उताहो भरूपे-

**आतो धातोः ६।४।१४०॥** आकारान्तो यो धातुस्तदन्तस्य भस्यांगस्य लोपः। अलोऽन्त्यस्य । विश्वपः। विश्वपा । विश्वपाभ्यामित्यादि । एवं शंखध्मादयः । धातोः किम् । हाहान् । हरिः । हरी ॥ **जसि च ७।३।१०९॥** ह्रस्वान्तस्यांगस्य गुणः । हरयः ॥ **ह्रस्वस्य गुणः ७।३।१०८॥** सम्बुद्धौ । हे हरे । हरिम् । हरी । हरीन् ॥ **शेषो घ्यसखि १।४।७॥** शेष इति स्पष्टार्थम् । ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घिसंज्ञम् ॥ **आङो नाऽस्त्रियाम् ७।३।१२०॥** घेः परस्याङो ना स्यादस्त्रियाम् । आङिति टासंज्ञा । हरिणा । हरिभ्याम् ।

---

—वैका संज्ञा भवतीति विशेषनिर्णयाभाव एवेति शङ्कां शमयति—**या परेति** ॥ द्वयोः सावकाशत्वे या परा सा भवति, अन्यतरस्या निरवकाशत्वे तु सैवेत्यर्थः । एवं च प्रकृते निरवकाशा भसंज्ञेति पदसंज्ञां बाधत इति शसादावचि भसंज्ञैव भवति न पदसंज्ञेति भावः ॥ १ "भस्य" "अङ्गस्य" इत्यधिक्रियेते "अल्लोपोऽनः" इत्यतः 'लोप' इत्यनुवर्तते विशेषणे तदन्तविधिद्वयमित्याह—**आकारान्त** इति ॥ २ "अंगस्य" इत्यधिक्रियते "ह्रस्वस्य गुणः" इत्यनुवर्ततेऽत आह—**ह्रस्वान्तस्येति** ॥ ३ "सम्बुद्धौ च" इत्यतः 'सम्बुद्धौ' इत्यनुवर्तते ॥ ४ अनदीसंज्ञौ 'शेष' शब्दार्थः 'यू स्त्र्याख्यौ नदी' इति पूर्वमुक्तेस्ततोऽन्यस्यैव शेषशब्दार्थत्वात्, ततश्च अनदीसंज्ञयोरेव इदुदोर्घिसंज्ञेति लभ्यते तेन 'मत्यै' इत्यादौ न दोषः । अन्यथा घिसंज्ञायां 'मतये' इति गुणेन स्यात् इति शेषग्रहणम् । वस्तुतस्तु आकडाराधिकारे द्वयोः संज्ञयोः समावेशो भवितुं नार्हतीति नदीसंज्ञाया वैकल्पिकत्वात्, पक्षे चरितार्थाया घिसंज्ञाया अनवकाशया नदीसंज्ञया बाधेन 'मत्यै' इत्यादौ नैव दोष इति शेषग्रहणम् स्पष्टार्थमेवेति भावः ॥ ५ "यू स्त्र्याख्यौ-" इत्यतः 'यू' इति "ङिति ह्रस्वश्च" इत्यतः 'ह्रस्व' इति च वर्ततेऽत आह—**ह्रस्वावित्यादि** ॥ ६ "अच्च घेः" इत्यतः घेः इत्यनुवर्ततेऽत आह—**घेः परस्येति** ॥

हरिभिः ॥ **घेर्ङिति ७।३।१११॥** घिसंज्ञस्य ङिति सुपि गुणः । हरये । हरिभ्याम् । हरिभ्यः॥ **ङसिङसोश्च ६।१।११०॥** एङो ङसिङसोरति पूर्वरूपमेकादेशः । हरेः २ । हर्योः २ । हरीणाम् ॥ **अच्च घेः ७।३।११९॥** इदुद्भ्यामुत्तरस्य ङेरौत्, घेरच्च । हरौ । हरिषु । एवं कव्यादयः॥ **अनङ् सौ ७।१।९३ ॥** सख्युरंगस्यानङादेशोऽसंबुद्धौ सौ ॥ **अलोऽन्त्यात्पूर्व उपधा १।१।६५॥** अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः ॥ **सर्वनामस्थाने चासंबुद्धौ ६।४।८॥** नान्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने ॥ **अपृक्त एकाल् प्रत्ययः १।२।४१॥** एकाल् प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात् ॥ **हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ६।१।६८॥** हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल् लुप्यते । **न लोपः प्राति-**

---

१ "ह्रस्वस्य गुण" इत्यत 'गुणः' इति, "सुपि च" इत्यतः 'सुपि' इत्यनुवर्ततेऽत आह—**सुपि गुण इति** ॥ २ "एङः पदान्तादति" इत्यतः 'एङः' इति, 'अति' इति च वर्तते, 'अमिपूर्वः' पूर्वरूपमेकादेश इति च ॥ ३ "ङेराम्—" इत्यतः 'ङेः' इति, "इदुद्भ्याम्" इति "औत्" इति च वर्ततेऽत आह—**इदुद्भ्यामित्यादि** ॥ ४ "सख्युरसम्बुद्धौ" इति "अङ्गस्य" इति च वर्ततेऽत आह—**सख्युरित्यादि** ॥ ५ सखिरूपस्य सखिशब्दान्तस्य चांगस्येत्यर्थः । एवं 'सख्युरसम्बुद्धौ' इत्यत्रापि व्याख्येयम् ॥ ६ पूर्वोऽपि अन्त्याल्सजातीय एव ग्राह्य इत्याह—**पूर्वो वर्ण इति**॥ ७ "ढ्रलोपे—" इत्यतः 'दीर्घः' इति "अङ्गस्य" इति "नोपधायाः" इति च वर्तते विशेषणे तदन्तविधिलभ्यमर्थमाह—**नान्तस्येति** अंगस्य इति शेषः ॥ ८ हलन्तात्परं सुतिसीत्येतदपृक्तं हल् लुप्यते, तथा दीर्घौ यौ ङ्यापौ तदन्तात्परं 'सु' इत्येतदपृक्तं हल् लुप्यते इत्येवं विभज्य व्याख्येयम् ॥ ९ "लोपो व्यो—"–

**पदिकान्तस्य ८।२।८॥** प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नस्य लोपः । सखा ॥ **सख्युरसंबुद्धौ ७।१।९२ ॥** सख्युरङ्गात्परं संबुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात् ॥ **अचो ञ्णिति ७।२।११५॥** अजन्तांगस्य वृद्धिर्ञिति णिति च परे । सखायौ । सखायः । हे सखे सखायम् । सखायौ । सखीन् । सख्या । सख्ये ॥ **ख्यत्यात्परस्य ६।१।११२॥** खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरत उः । सख्युः ॥ **औत् ७।३।११८॥** इतः परस्य ङेरौत् । सख्यौ । शेषं हरिवत् ॥ **पतिः समास एव १।४।८॥**

---

–इत्यतः 'लोपः' इति वर्ततेऽत आह–**लुप्यते** इति ॥ तिपा सहचरितस्य सिप एव ग्रहणं न सिच इति 'अभैत्सीत्' इति सिचः सकारस्य लोपो नेति बोध्यम् ॥ १ "पदस्य" इत्यधिक्रियते तस्य 'प्रातिपदिक' इति लुप्तषष्ठ्यन्तं विशेषणम् । इत्याह–**प्रातिपदिकसंज्ञकमित्यादि** ॥ २ नेति प्रातिपदिकेति च लुप्तषष्ठीके पदे । तदन्तस्य=तस्य=प्रातिपदिकसंज्ञकपदस्य अन्तो यो नकारस्तस्येत्यर्थः ॥ ३ "इतोत्सर्वनामस्थाने" इत्यतः 'सर्वनामस्थाने' इति "गोतो णित्" इत्यतः 'णित्' इति, च वर्ततेऽत आह–**सर्वनामस्थानमित्यादि** ॥ ४ "अंगस्य" इत्यधिक्रियते+"मृजेर्वृद्धिः" इत्यतः 'वृद्धिः' इति वर्ततेऽत आह–**अजन्ताङ्गस्येति** ॥ ५ कृतयणादेशयोर्ह्रस्वदीर्घयोरनुकरणं **ख्यत्य** इति, । "एङः पदान्ता–" इत्यतः 'अति' इति, "ङसिङसोश्च" इति "ऋत उत्" इत्यतः 'उत्' इति वर्ततेऽत आह–**खितिशब्दाभ्यामिति** ॥ 'ख्यत्यात्' इति पञ्चमीनिर्देशादेव 'परस्य' इत्यस्य लाभसम्भवे परस्येति ग्रहणम् 'एकः पूर्वपरयोः' इति निवृत्तम् । इह नाधिक्रियत इति ध्वननार्थम् ॥ ६ "ङेराम्" इत्यतः 'ङेः' इति "इदुद्भ्याम्" इति चानुवर्ततेऽत आह–**इत इत्यादि** ॥ अत्रौकारानुवृत्तेः फलाभावादिति भावः ॥ ७ द्वयोर्बहूनां वा–

घिसंज्ञः१ पत्ये । पत्युः२। पत्यौ । शेषं हरिवत् । समासे तु भूपतये कति-शब्दो नित्यं बहुवचनान्तः ॥ **बहुगणवतुडति संख्या १।१।२२॥ डति च १।१।२५॥** डत्यन्ता संख्या षट्संज्ञा स्यात् । **षड्भ्यो लुक् ७।१।२२॥** जश्शसोः३॥ **प्रत्ययस्य लुक्श्लुलुपः १।१।६१॥** लुक्श्लुलुप्शब्दैः४ कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात् ॥ **प्रत्ययलोपे**

---

-पदानां एकपदीभवनं समासः'सीतायाः पतये नमः''कृष्णस्य सखिरर्जुनः''सखिना वानरेन्द्रेण दग्धा लंका महापुरी' इत्यादि त्वार्षम् । ऋषीणां तपोमाहात्म्येनासाधुशब्दप्रयोगेऽपि दोषाभावः । स्मृतिपुराणान्तर्गतानां तु तेषामुच्चारणेऽस्माकमपि दोषाभावः । स्वातन्त्र्येण तादृशं प्रयुञ्जानास्तु प्रत्यवयन्त्येव । छन्दोवत्कवयः कुर्वन्ति इत्युक्त्वा " न ह्येषेष्टिरस्ति " इति नदीसंज्ञासूत्रे भाष्योक्तेः । 'नष्टे मृते'-इति पराशरस्मृतौ तु 'अपतौ' इत्येवं छेदः । तथाच ईषदर्थकेन नञा सह समासे घिसंज्ञा निर्बाधैव । सप्तपदीतः प्राक् ईषत्पतित्वस्यैव सत्त्वेन "कामं तु क्षपयेद्देहं पुष्पमूल-फलैः शुभैः । न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु ॥ पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् । तेषां निष्ठा तु विज्ञेया विवाहात्सप्तमे पदे ॥ नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् ॥ न विवाहविधावुक्तं विधवावेदनं क्वचित् ॥ यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः । तामनेन विधानेन निजो विन्देत देवरः ॥" इति मनूक्त्या "अद्भिर्वाचा च दत्तायां म्रियेतोर्ध्वं वरो यदि । न च मन्त्रोपनीता सा कुमारी पितुरेव सा ॥ इति स्मृत्यन्तरेण च सह न विरोध इति दिक् ॥ १ "शेषो घ्यसखि" इत्यतः 'घि' इति अनुवर्ततेऽत आह-**घिसंज्ञ** इति ॥ २ "बहुगण-" इत्यतः 'संख्या' इति "ष्णान्ता-" इत्यतः षट् इति च वर्तते विशेषणे तदन्तविधिरत आह-**डत्यन्तेति** ॥ ३ "जश्शसोः शिः" इत्यतः 'जश्शसोः' इति वर्ततेऽत आह-**जश्शसोरिति** ॥ ४ "न लुमतांगस्य" इति सूत्रे लुमताग्रहणसामर्थ्यात् तद्भावितग्रहणं "अदर्शनं लोपः' इत्यतः 'अदर्शनम्' इति वर्ततेऽत आह-**लुक्श्लुलुप्शब्दैरिति** ॥

**प्रत्ययलक्षणम्** १।१।६२ ॥ प्रत्यये लुप्ते तदाश्रितं कार्य्यं स्यात्। इति जसि चेति गुणे प्राप्ते। **न लुमताऽङ्गस्य** १। १। ६३ ॥ लुमता शब्देन लुप्ते तन्निमित्तमंगकार्यं न स्यात्। कति २। कतिभिः। कतिभ्यः२। कतीनाम्। कतिषु। युष्मदस्मत्षट्संज्ञकास्त्रिषु सरूपाः। त्रिशब्दो नित्यं बहुवचनान्तः। त्रयः। त्रीन्। त्रिभिः। त्रिभ्यः २॥ **त्रेस्त्रयः** ७।१।५३ ॥ त्रिशब्दस्य त्रयादेशः स्यादामि। त्रयाणाम्। त्रिषु। गौणत्वेऽपि प्रियत्रयाणाम्॥ **त्यदादीनामः** ७।२। १०२॥ एषामकारो विभक्तौ। (द्विपर्य्यन्तानामेवेष्टिः) द्वौ। द्वौ। द्वाभ्याम् ३। द्वयोः २। पाति लोकमिति पपीः सूर्यः॥ **दीर्घाज्जसि च** ६। १।१०५॥ दीर्घाज्जसि इचि च परे न पूर्वसवर्णः। पप्यौ। पप्यः। हे पपीः। पपीम्। पपीन्। पप्या। पपीभ्याम् ३। पपीभिः। पप्ये। पपीभ्यः २। पप्यः। पप्योः। दीर्घत्वान्न नुट्। पप्याम्। ङौ तु सवर्ण-

---

"प्रत्ययलोपे प्रत्ययलक्षणम्" इत्यनुवर्ततेऽत आह-**लुमतेति**॥ २ **सरूपा** इति। लिंगबोधकप्रत्ययानुत्पत्त्या परिनिष्ठितरूपेषु विशेषाभावादिति भावः। "अलिंगे युष्मदस्मदी" इति भाष्यस्य तु "पदान्तरसंनिधानं विना लिंगविशेषो युष्मदस्मच्छब्दमात्रान्न प्रतीयते" इत्येवार्थ इति न विरोधः, अन्यथा लिंगसत्ताबोधकभाष्येण विरोधापत्तेः॥ ३"आमि सर्वनाम्नः-" इत्यतः 'आमि' इत्यनुवर्ततेऽत आह-**आमीति**॥ ४ अंगत्वात्तदन्तेऽपि प्रवृत्तेरिति भावः। गौणमुख्यन्यायस्तु नेह प्रवर्त्तते। तस्य पदकार्य एव प्रवृत्तेरंगीकारात्। "तत्त्वं च स्त्रीत्वानिमित्तकत्त्वे सति विभक्त्यनिमित्तकत्वम्"। प्रियाः त्रयोऽस्य स प्रियत्रिः, हरिवत्। आमि परं विशेषः। ५ "अष्टन आ विभक्तौ" इत्यतः 'विभक्तौ' इति वर्ततेऽत आह-**विभक्ताविति**॥ ६ "**प्रथमयोः पूर्वसवर्णः**" इति-

दीर्घः । पपी । पप्योः । पपीषु । एवं वातप्रम्यादयः । बह्वयः श्रेयस्यो यस्य स बहुश्रेयसी ॥ **यू स्त्र्याख्यौ नदी १ । ४ । ३** ॥ ईदूदन्तौ नित्यस्त्रीलिंगौ नदीसंज्ञौ स्तः ( प्रथमलिंगग्रहणं च )। पूर्वं स्त्र्याख्य- स्योपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः ॥ **अम्बार्थनद्योर्ह्रस्वः ७ । ३ । १०७** ॥ सम्बुद्धौ । हे बहुश्रेयसि ॥ **आण्नद्याः ७ । ३ । ११२** ॥ नद्यन्तात्परेषां ङितामाडागमः ॥ **आटश्च ६ । १ । ९०** ॥ आटोऽचि परे वृद्धिरेकादेशः । बहुश्रेयस्यै । बहुश्रेयस्याः । बहुश्रेय- सीनाम् ॥ **ङेराम्नद्याम्नीभ्यः ७ । ३ । ११६** ॥ नद्यन्तादाबन्ता-

---

-नादिच्चि इत्यतः'न' इति 'इचि'च वर्ततेऽत आह-**इचि चेत्यादि** ॥ १ नित्य- स्त्रीत्वं च प्रवृत्तिनिमित्तैक्ये लिंगान्तरविशिष्टार्थानभिधायकत्वम् । नन्वेवं बहु- श्रेयसीशब्दस्य नदीत्वं न स्यादत आह-**प्रथमेति** ॥ वृत्तेः प्राक् नित्यस्त्रीलिंगवाच- कस्य अन्यार्थविशेषणीभूतत्वेऽपि नदीत्वमित्यर्थः ॥ २ "सम्बुद्धौ च" इत्यतः सम्बुद्धौ इति वर्ततेऽत आह-**सम्बुद्धाविति** ॥ ३ ह्रस्वे कृते गुणस्तु न भवति. प्रक्रियालाघवाय 'अम्बार्थनद्योर्ह्रस्वः' इत्यनुक्त्वा 'अम्बार्थनद्योर्गुणः' इति वाच्ये ह्रस्वविधिसामर्थ्यादिति स्पष्टं भाष्ये ॥ ४ "अंगस्य" इत्यधिकृतम् । तद्विशेषणे तदन्तविधिः "घेर्ङिति" इत्यतः ङिति इति षष्ठीविपरिणतमनुवर्ततेऽत आह-**नद्यन्तादिति** । प्रकृते श्रेयसीशब्दस्य ईकारान्तनित्यस्त्रीलिंगतया नदीत्वेन बहुश्रेयसीशब्दो नद्यन्त इति ज्ञेयम् ॥ ५ "इको यणचि" इत्यतः 'अचि' इति, वृद्धिरेचि" इत्यतः 'वृद्धिः' इति, "एकः पूर्वपरयोः" इत्यधिक्रियतेऽत आह-**अचीत्यादि** ॥ ६ नद्यन्तात्परत्वान्नुट् । ७ "अंगस्य" इत्यधिक्रियते । विशेषणे तदन्तविधिरित्याह-**नद्यन्ता दित्यादि** ॥

स्त्रीशब्दाच्च परस्य ङेराम्। बहुश्रेयस्याम्। शेषं पपीवत्॥ अङ्यन्तत्वान्न सुलोपः। अतिलक्ष्मीः। शेषं बहुश्रेयसीवत्। प्रधीः॥ **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६।४।७७॥** श्नुप्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रू इत्यस्य चांगस्येयङुवङौ स्तोऽजादौ प्रत्यये परे। इति प्राप्ते॥ **एरनेकाचोऽसंयोगपूर्वस्य ६।४।८२॥** धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यणजादौ प्रत्यये। प्रध्यौ। प्रध्यम्। प्रध्यै। प्रध्यः प्रध्यि। शेषं पपीवत्। एवं ग्रामणीः। ङौ तु ग्रामण्याम्। अनेकाचः किम्। नीः। नियौ। नियः। अमि शसि च परत्वादियङ्। नियम्। ङेराम्। नियाम्॥ असंयोगपूर्वस्य किम्। सुश्रियौ। यवक्रियौ॥ **गतिश्च १।४।६०॥** प्रादयः क्रियायोगे गतिसंज्ञाः स्युः।

---

१ इह परत्वादाटानुड्बाध्यते। आटिकृते पुनर्नुट् तु न, सकृद्गताविति न्यायात्
२ आङ्गत्वात् तदन्तेऽपि 'ङेराम्'–इत्यस्य प्रवृत्तेरिति भावः। ३ लक्ष्मीशब्दस्य 'लक्षेर्मुट् च' इत्यौणादिक 'ई' प्रत्ययान्तत्वादिति भावः॥ ४ "अंगस्य" इत्यधिकारलब्धप्रत्ययविशेषणे तदादिविधिरित्याह–**अजादाविति**॥ ५ "अंगस्य" इत्यधिक्रियते एकदेशानुवृत्त्या 'धातोः' इति वर्तते 'अचि' इति च॥ तद्विशेषणे 'एः' इत्यत्र तदन्तविधिः तद्विशेषणे 'असंयोगपूर्वस्य' इति बहुव्रीहौ संयोगश्चोपस्थितत्वात्सन्निहितत्वाद् धात्ववयव एव गृह्यते। "इणो यण्" इत्यतः 'यण्' इति वर्ततेऽत आह–**धात्ववयवेति**॥ ६ अमि 'अमिपूर्वः' इति सूत्रापेक्षया शसि च 'प्रथमयोः'–इति सूत्रापेक्षयेति भावः। ७ "प्रादयः" इति सूत्रात् 'प्रादयः' 'क्रियायोगे' इत्यनुवर्त्याह–**प्रादय इति**॥

( गतिकारकेतरपूर्वपदस्य यण् नेष्यते ) शुद्धधियौ[1] ॥ **न भूसु-धियोः ६।४।८५॥** एतयोरचि[2] सुपि यण्न । सुधिय इत्यादि ॥ सुखमिच्छतीति सुखीः[3] । सुतीः । सुख्यौ । सुत्यौ । सुख्युः[4] । सुत्युः । शेषं प्रधीवत् ॥ शम्भुर्हरिवत् ॥ एवं भान्वादयः ॥ **तृज्वत्क्रोष्टुः ७।१।९५ ॥** असंम्बुद्धौ[5] सर्वनामस्थाने परे । क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः ॥ **ऋतो ङिसर्वनामस्था-नयोः ७।३।११०॥** ऋतोऽङ्गस्य गुणो[6] ङौ सर्वनामस्थाने च । इति प्राप्ते ॥ **ऋदुशनस्पुरुदंसोऽनेहसां च ७।१।९४॥** ऋदन्तानामुशनसादीनां चानँङ्[7] स्यादसंबुद्धौ सौ । **अप्तृन्तृच्स्व-सृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् ६।४।११॥**

---

१ शुद्धा धीर्यस्येति विग्रहः । शुद्धशब्दो न गतिः, प्रादिषु पाठाभावात्, नापि कारकम्, सत्त्वभूतार्थविशेषणत्वात्, इति शुद्धशब्दस्य गतिकारकेतरत्वात् तत्पूर्वकस्य न यण् किन्तु 'अचिश्नु'-इतीयङेवेति भावः ॥ २ "अचिश्नु-" इत्यतः 'अचि' इति "इणो यण्" इत्यतः 'यण्' इति, "ओः सुपि" इत्यतः 'सुपि' इति वर्ततेऽत आह-**अचि सुपीति अजादावित्यर्थः ॥** ३ सुखीय-सुतीय-इति क्यजन्ताभ्यां क्विपि अल्लोपयलोपौ ॥ ४ "ख्यत्यात्-" इत्यत्र दीर्घसंग्रहफलककृतयणादेशफलमाह-**सुख्युः । सुत्युरिति** ॥ ५ "इतो-ऽत्सर्वनामस्थाने" इत्यतः 'सर्वनामस्थाने' इति "सख्युरसंबुद्धौ" इत्यतः 'असंबुद्धौ' इति वर्ततेऽत आह-**असंबुद्धावित्यादि ॥** ६ "ह्रस्वस्य गुणः" इत्यतः 'गुणः' इति वर्ततेऽत आह-**गुण** इत्यादि ॥ ७ "अनङ् सौ" इति "सख्युरसंबुद्धौ" इत्यतः "असंबुद्धौ" इति च वर्तते ॥

अजादीनामुपधाया दीर्घोऽसंबुद्धौ सर्वनामस्थाने । क्रोष्टा । क्रोष्टारौ । क्रोष्टारः। क्रोष्टून् ॥ **विभाषा तृतीयादिष्वचि ७ । १ । ९१ ॥** अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत् । क्रोष्ट्रा । क्रोष्ट्रे ॥ **ऋत उत् ६ । १ । १११ ॥** ऋतो ङसिङसोरति उदेकादेशः । रपरः । **रात्सस्य ८।२।२४ ॥** रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य । रस्य विसर्गः । क्रोष्टुः २ क्रोष्ट्रोः २ । ( **नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन** ) क्रोष्टूनाम् । क्रोष्टरि । **पक्षे हलादौ च शम्भुवत् ॥** हूहूः । हूहौ । हूहूः । हूहून् इत्यादि ॥ **अतिचमूशब्दे तु नदीकार्य्यं विशेषः** । हे अतिचमु । अतिचम्वै । अतिचम्वाः । अतिचमूनाम् ॥ खलपूः । **ओः सुपि ६।४।८३ ॥** धात्ववयवसंयोगपूर्वो न भवति

---

१ "हूलोप—" इत्यतो 'दीर्घः' इति, "नोपधायाः" इत्यत 'उपधायाः' इति, "सर्वनामस्थाने चासंबुद्धौ" इति च वर्ततेऽत आह—**उपधाया** इत्यादि ॥ २ प्रातिपदविधित्वात् 'सर्वनामस्थाने च—' इति बाधित्वा 'अप्तृन्—' इत्येव दीर्घो भवतीति बोध्यम् ॥ ३ "तृज्वत्क्रोष्टुः" इति सूत्रं वर्त्तते विशेषणे तदादिविधिरित्याह—**अजादिष्विति** ॥ ४ "एङः पदान्ता—" इत्यतः 'अति' इति "ङसिङसोश्च" इति, "एकः पूर्वपरयोः" इति च वर्ततेऽत आह—**ङसिङसोरित्यादि** ॥ ५ "संयोगान्तस्य लोपः" इति वर्तते । तथा च संयोगान्तत्वेनैव लोपे सिद्धे सूत्रं नियमार्थमितरव्यावृत्त्यर्थमित्याह—**नान्यस्यैति** ॥ ६ आमि परत्वात् तृज्वद्भावे प्राप्ते वार्तिकम्—**नुमचिरेति** । वारीणामित्यादौ 'इकोऽचि'—इति नुमि सति 'नामि' इति दीर्घो न स्यादिति सफलम् । तिसृणामित्यत्र "अचि र ऋतः" इति रादेशे रूपासंगतिः । प्रकृतेऽपि रूपासंगतिरेव ॥७ तृज्वद्भावाभावपक्षे इत्यर्थः॥८"अंगस्य" इत्यधिक्रियते । "अचिश्नु—"—

य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादचि सुपि खलप्वौ। खलप्वः। एवं सुल्वादयः। स्वभूः। स्वभुवौ। स्वभुवः। वर्षाभूः। **वर्षाभ्वश्च ६।४।८४॥** अस्य यण् स्यादचि सुपि। वर्षाभ्वावित्यादि॥ दृन्भूः। (दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः) दृन्भ्वौ। एवं करभूः॥ धाता। हे धातः। धातारौ। धातारः। (ऋवर्णान्नस्य णत्वं वाच्यम्) धातॄणाम्। एवं नप्त्रादयः॥ नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम्[3]। तेनेह न। पिता। पितरौ पितरः। पितरम् शेषं धातृवत्॥ एवं जामात्रादयः॥ ना नरौ॥ **नृ च ६।४।६॥** अस्य नामि वा दीर्घः। नृणाम्। नॄणाम्॥ **गोतो णित् ७।१।९०॥**

---

—इत्यतः 'अचि' इति 'धातु' इति, "इणो यण्" इत्यतः 'यण्' इति, "एरनेकाचो- ऽसंयोग—" इत्यतः 'असंयोगपूर्वस्य' 'अनेकाचः' इति च वर्ततेऽत आह—**धात्वबयवेति**। १ 'यण्' 'अचि' 'सुपि' इति वर्ततेऽत आह—**यण् स्यादिति॥**
२ 'अत्र 'इको यणचि' इति यणं बाधित्वा 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घः प्राप्तः, तस्य "दीर्घाज्जसि च" इति निषेधे पुनरपि यणादेशप्रसक्तौ 'अचिश्नुधातुभ्रुवाम्—' इत्युवङ्, तं च बाधित्वा "ओः सुपि" इति यण्, तस्य "न भूसुधियोः" इति निषेधे पुनरुवङादेशस्य प्रसक्तौ "वर्षाभ्वश्च" इति यण् इति अत्र प्रक्रिया। एवमन्यत्रापि उत्सर्गापवादविधीनां प्राप्तिः पौर्वापर्यं स्वयमूहनीयम्॥ ३ ननु व्युत्पत्तिपक्षे तृन्नन्तत्वात्तृजन्तत्वाद्वा दीर्घे सिद्धे नप्त्रादिग्रहणं व्यर्थमत आह—**नियमार्थमिति**। भवन्ति हि पितृभ्रात्रादय औणादिका इति दीर्घभाजः। धातृकर्तृयन्त्रादयस्तु नोणादिव्युत्पन्ना इति नियमान्तर्गतत्वाद्दीर्घभाज एवेति भावः॥ ४ "ढ्रलोपे—" इत्यतः 'दीर्घः' इति "नामि" इति "छन्दस्युभयथा" इत्यत 'उभयथा' इति च वर्ततेऽत आह—**नामि वेति॥**

ओकाराद्विहितं सर्वनामस्थानं णिद्वत् । गौः । गावौ । गावः ।
**औतोऽम्शसोः ६।१।९३॥** औतोऽम्शसोरचि आकार एकादेशः ।
गाम् । गावौ । गाः । गवा । गवे । गोः इत्यादि ॥ **रायो हलि ७।२।८५॥** अस्याकारादेशो हलि विभक्तौ । राः । रायौ । रायः ।
राभ्यामित्यादि ॥ ग्लौः । ग्लावौ । ग्लावः । ग्लौभ्यामित्यादि ॥

इत्यजन्तपुंल्लिंगाः ॥

---

**अथाजन्तस्त्रीलिंगाः ।**

रमा । **औङ आपः ७।१।१८॥** आबन्तादंगात्परस्यौङः शी स्यात् । औङित्यौकारविभक्तेः संज्ञा । रमे । रमाः ॥ **सम्बुद्धौ च ७।३।१०६॥** आप एकारः स्यात्सम्बुद्धौ । एङ्ह्रस्वादिति संबुद्धिलोपः। हे रमे । हे रमे । हे रमाः । रमाम् । रमे । रमाः ॥ **आङि चापः ७।४।१०५॥** आङि ओसि चाप एकारः । रमया । रमाभ्याम् ।

---

१ "इतोऽत् सर्वनामस्थाने" इत्यतः 'सर्वनामस्थाने' इति वर्तते गकारस्त्वविवक्षितः । इत्यभिप्रेत्याह-**ओकारादित्यादि ॥** २'आ, ओतः' इति च्छेदः।"इको यण्-" इत्यतः 'अचि' इति ।"एकः पूर्वपरयोः" इति च वर्ततेऽत आह-**औतोऽमिति ॥** ३ "अष्टन आ विभक्तौ" इत्यत 'आ' 'इति' 'विभक्तौ' इति च वर्ततेऽत आह-**आकारादेश** इति ॥ ४ "जसः शी" इत्यतः 'शी' इति वर्ततेऽत आह-**शीति ॥** ५ "बहुवचने झल्येत्" इत्यत 'एत्' इति वर्तते 'आङि चापः" इत्यत 'आपः' इति चात आह-**आप** इत्यादि ॥ ६ संबुद्धौ प्रतिपदोक्तत्वेन शीघ्रोपस्थितिकतया हल्ङ्याब्दिलोपात् प्रथममेतस्मिन् सत्यनेनैव लोप इति भावः ॥ ७ "बहुवचने झल्येत्" इत्यत 'एत्' इति वर्तते "ओसि च-"

रमाभिः ॥ **याडापः ७।३।११३॥** आपो ङितो याट् । वृद्धिः । रमायै । रमाभ्याम् । रमाभ्यः । रमायाः । रमयोः । रमाणाम् । रमायाम् । रमासु । एवं दुर्गाम्बिकादयः ॥ **सर्वनाम्नः स्याड्ढ्रस्वश्च ७।३।११४॥** [3]आबन्तात्सर्वनाम्नो ङितः स्याट् स्यादापश्च ह्रस्वः । सर्वस्यै । सर्वस्याः। सर्वासाम् । सर्वस्याम् । शेषं रमावत् ॥ एवं विश्वादय आबन्ताः ॥ **विभाषा दिक्समासे बहुव्रीहौ १।१।२८॥** सर्वनामता वा। उत्तरपूर्वस्यै, उत्तरपूर्वायै । तीयस्येति वा सर्वनामसंज्ञा। द्वितीयस्यै, द्वितीयायै ॥ एवं तृतीया ॥ अम्बार्थेति ह्रस्वः । हे [6]अम्ब । हे

---

-इति सूत्रं चात आह-**ओसि चेत्यादि** ॥ १ ननु रमाभिरित्यादौ एकादेशस्य पूर्वान्तवत्वेन ग्रहणादतोभिस ऐस् स्यात् न च तपरत्वसामर्थ्यान्नैस्, अकृतैकादेशे विश्वपाभिरित्यादौ कृतार्थत्वादिति चेन्न । वर्णमात्रवृत्तिधर्मस्य तेनातिदेशाभावात् । अतएव "षत्वे तुकि च एकादेशोऽसिद्धः" इत्यर्थकस्य "षत्वतुकोरसिद्धः" इति सूत्रस्य चारितार्थ्यम् । अन्यथा 'अधीत्य' इत्यादावनेनादिवद्भावे सति "ह्रस्वस्य पिति-" इति ह्रस्वप्रयुक्ततुक्सिद्धौ तद्वैयर्थ्यमेव स्यादिति बोध्यम् । २ "घेर्ङिति" इत्यतो 'ङिति' इति वर्ततेऽत आह-**ङितो याडिति** ॥ ३ "घेर्ङिति" इत्यतः 'ङिति' इति, "याडापः" इत्यतः 'आप' इति च वर्तते । विशेषणे तदन्तविधिरत आह-**आबन्तादिति** ॥ ४ एकादेशस्य पूर्वान्तत्वेन ग्रहणात् 'आमि सर्वनाम्नः'-इति सुट् । नन्वेवमपि पूर्वान्तवत्वेन सर्वनामत्वेऽप्यावन्तत्वं कथम् । न च, परादिवद्भावेन तत्वं सत् । "उभयत आश्रयणे नान्तादिवत्" इत्युक्तोरितिचेत् । न, उभयत इत्यस्य भाष्यैकदेशिनोक्तेः । वस्तुतस्तु लिंगविशिष्टपरिभाषयाऽऽबन्तस्य सर्वनामत्वम्, आबन्तत्वं तु परादिवद्भावेनेति नव्याः ॥ ५ "सर्वादीनि-" इत्यतः 'सर्वनामानि' इति वर्ततेऽत आह-**सर्वनामतेति** ॥ ६ 'अम्बार्थं द्व्यक्षरं यदि' इति भाष्य-

अक्क । हे अल्ल ॥ जरा । जरसौ इत्यादि । पक्षे रमावत् ॥ गोपाः विश्वपावत् । मतीः । मत्या ॥ **ङिति ह्रस्वश्च १।४।६ ॥** इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ चेवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति । मत्यै[2], मतये । मत्याः २ । मतेः २ ॥ **इदुद्भ्याम्[3] ७।३।११७॥** इदुद्भ्यां नदीसंज्ञकाभ्यां[4] परस्य ङेराम् । मत्याम्, मतौ ॥ शेषं हरिवत् ॥ एवं बुद्ध्यादयः ॥ **त्रिचतुरोः स्त्रियां तिसृचतसृ ७।२।९९॥** स्त्रीलिङ्गयोरेतौ स्तो विभक्तौ[6] ॥ **अचि र ऋतः ७।२।१००॥** तिसृचतसृ एतयोर्ऋकारस्य रेफादेशः स्यादाचि । गुणदीर्घोत्वानामपवादः[8] ।

---

–वार्तिकाद् द्व्यच्केष्वेवास्य प्रवृत्तिरित्युदाहरणेन दर्शयति–**हे अम्ब इत्यादि ॥**
१ " नेयङुवङ्स्थानावस्त्री " इति, " यू स्त्र्याख्यौ नदी " इति, " वामि " इत्यतः ' वा ' इति वर्ततेऽत आह–**इयङुवङित्यादि ॥** २ नदीत्वपक्षे ' आण्नद्याः ' इत्यादि । पक्षे ' घेर्ङिति' इत्यादीति योज्यम् । ३ नदीत्वपक्षे ' ङेराम्–' इत्यपेक्षया परत्वात् 'औत्' इति ङेरौत्वे प्राप्ते सूत्रम्–**इदुद्भ्याम्** । पक्षे अच्च घेः।
४ " ङेराम्नद्याम्–" इत्यतो ' ङेराम् ' नदीति वर्तते न त्वाब्नीग्रहणम् अयोग्यत्वात् इत्याह–**नदीसंज्ञकाभ्यामिति ॥** ५ " स्त्रियां वर्तमानौ यौ त्रिचतुःशब्दौ तदन्तं यदंगं तदवयवयोर्निर्दिश्यमानयोस्त्रिचतुःशब्दयोः तिसृचतसृ एतावादेशौ स्तो विभक्तौ " इति वास्तविकसूत्रार्थः ॥ ६ " अष्टन आ–" इत्यतः 'विभक्तौ' इति वर्ततेऽत आह–**विभक्ताविति ॥** ७ "त्रिचतुरोः–"इत्यतः 'तिसृचतसृ ' इति षष्ठीविपरिणतमनुवर्ततेऽत आह–**तिसृचतसृ एतयोरिति ॥**
८ ' तिस्र ' इति प्रथमायाम् " ऋतो ङि " इति प्राप्तं " जसि च " इति वा प्राप्तं गुणम् , ' तिस्र ' इति द्वितीयायां " प्रथमयोः पूर्वसवर्णः " इति प्राप्तं दीर्घम् । प्रियतिस्रः इत्यादौ " ऋत उत् " इति प्राप्तम् उत्त्वं च बाधते इत्यर्थः ॥
बाध्यसामान्यचिन्तापक्षाश्रयणादिति भावः ।

तिस्रः । तिस्रः । तिसृभिः । तिसृभ्यः । तिसृभ्यः । आमि नुट्[1] ॥ **न तिसृचतसृ[2] ६।४।४॥** एतयोर्नामि[3] दीर्घो न । तिसृणाम् । तिसृषु॥ द्वे[4] । द्वे । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः॥ गौरी । गौर्यौ । गौर्यः। हे गौरि। गौर्यै इत्यादि । एवं नद्यादयः॥ लक्ष्मीः[5] शेषं गौरीवत् ॥ एवं तरीतन्त्र्यादयः । स्त्री । हे स्त्रि । **स्त्रियाः ६।४। ७९।** अस्येयङ्[6] स्यादजादौ प्रत्यये परे । स्त्रियौ । स्त्रियः । **वाम्शसोः ६।४।८०॥** अमि शसि च स्त्रियाँ इयङ् वा स्यात् । स्त्रियम्, स्त्रीम् । स्त्रियः, स्त्रीः । स्त्रिया । स्त्रियै । स्त्रियाः । परत्वान्नुट् । स्त्रीणाम् । स्त्रीषु ॥ श्रीः । श्रियौ । श्रियः ॥ **नेयङुवङ्स्थानावस्त्री १।४।४ ॥** इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तो न तु स्त्री । हे[10] श्रीः । श्रियै, श्रिये । श्रियाः, श्रियः ॥ **वामि १।४।५॥**

---

१ "ह्रस्वनद्यापः"–इति नुटं बाधित्वा 'अचि र ऋतः' इति रादेशे प्राप्ते तं बाधित्वा "नुमचिर–" इति नुडित्यर्थः॥ २ एतदारम्भसामर्थ्याद् रादेशाभावे सति नुटि सिद्धे "नुमचिर–" इति वार्तिके अचिरग्रहणं न कर्तव्यं भवति ॥ ३ "नामि" इति 'दीर्घ' इति च वर्तते । तिसृचतसृ इति लुप्तषष्ठ्यन्तमित्याह **एतयोरिति** ॥ ४ द्वेरत्वे सति 'अजाद्यतः' इति टाप् । ५ "अवी–लक्ष्मी–तरी–तन्त्री–तन्द्री–धी–ह्री–श्रियां पुरः । भीशब्दाच्च सोर्लोपः न स्त्रीलिंगे स्यात् कदाचन" ॥ ६ "अचि श्नुधातु–" इत्यतो योग्यतया 'इयङ्' इति 'अचि' इति च वर्तते अङ्गाधिकारलब्धप्रत्ययस्य विशेषणे तदादिविधिरित्याह–**इयङि-त्यादि** ॥ ७ "स्त्रिया" इति सूत्रं सानुवृत्तमनुवर्ततेऽत आह–**स्त्रिया इत्यादि**॥ ८ 'स्त्रियाः' इतीयङपेक्षयेत्यादिः ।९ "यू स्त्र्याख्यौ नदी" इति वर्ततेऽत आह–**ईदूतावित्यादि** ॥ १० श्रीशब्देकारे संबुद्धावियङभावेऽपि औजसादौ तत्स्थितेर्दृष्टत्वान्नदीसंज्ञानिषेधो भवत्येवेति भावः ॥

इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तो न तु स्त्री । श्रीणाम्, श्रियाम् । श्रियि, श्रियाम् ॥ धेनुर्मतिवत् ॥ **स्त्रियां च ७।१।९६॥** स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते । **ऋन्नेभ्यो ङीप् ४।१।५॥** ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप् । क्रोष्ट्री गौरीवत् ॥ भ्रूः श्रीवत्॥ स्वयम्भूः पुंवत् ॥ **न षट्स्वस्रादिभ्यः ४।१।१०॥** ङीप्टापौ न स्तः । " स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा । याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥ " स्वसा । स्वसारौ ॥ माता पितृवत् । शसि मातॄः ॥ द्यौर्गोवत् ॥ राः पुंवत् ॥ नौर्ग्लौवत् ॥

इत्यजन्तस्त्रीलिङ्गाः ॥

---

१ " नेयङुवङ्स्थानावस्त्री" इति वर्तते निषेधविकल्पस्यापि विधिविकल्पे पर्यवसानमित्याह-**इयङुवङ्स्थानावित्यादि** ॥ २ " तृज्वत् क्रोष्टुः " इति वर्ततेऽत आह-**क्रोष्टुशब्द** इति ॥ ३ " स्त्रियाम् " इत्यधिक्रियते प्रातिपदिकादिति च, तद्विशेषणत्वेन तदन्तविधिरित्याह-**ऋदन्तेभ्य** इत्यादि ॥ ४ " पदान्तरं विनापि स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वम् " इति वृत्तिकारमतम् । "स्त्रीलिङ्गान्यलिङ्गानभिधायकत्वमेव नित्यस्त्रीत्वम् " इति कैयटमतम् । ततश्च स्वयम्भूशब्दस्य चतुरानने रूढत्वात् तस्य यौगिकस्य पदान्तरं विना स्त्रियामवृत्तेर्न वृत्तिमते नित्यस्त्रीत्वम् । कैयटमते तु अनेकलिङ्गत्वात् न नित्यस्त्रीत्वम् । अतो नदीत्वाभावात् **पुंवदेव** रूपाणीति भावः ॥ ५ " स्त्रियाम् " इत्यधिकृतम् । तथा च ' स्त्रियां यद् विहितं तन्न ' इत्यर्थफलितमाह-**ङीप्टापौ नेति** ॥ ६ " अचि र ऋतः " " न तिसृचतसृ " इति सूत्रे अपि तिसृचतस्रोः स्वस्रादित्वकल्पनायामेव ज्ञापके संभवतः ॥ ७ ' अप्तृन्-' इति सूत्रे औणादिकतृजन्तेषु नप्त्रादीनामेव दीर्घनियमनादिति भावः ॥ ८ स्त्रीत्वान्नत्वाभाव इति भावः ।

## अथाजन्तनपुंसकलिङ्गाः ।

**अतोऽम्** ७।१।२४।। अतोऽङ्गात् क्लीबात्स्वमोरम्[१] । अमि पूर्वः । ज्ञानम् । एङ्ह्रस्वादिति हल्लोपः। हे ज्ञान[२] ।। **नपुंसकाच्च** ७।१।१९।। क्लीबादौङः[३] शी स्यात् । भसंज्ञायाम्[४] । **यस्येति च** ६।४।१४८।। ईकारे तद्धिते[५] च परे भस्येवर्णावर्णयोर्लोपः । इत्यल्लोपे प्राप्ते ( औङः श्यां प्रतिषेधो वाच्यः) ज्ञाने ।। **जश्शसोः शिः** ७।१।२० ।। क्लीबादनयोः[६] शिः स्यात् । **शि सर्वनामस्थानम्** १।१।४२ ।। शिइत्येतदुक्तसंज्ञं स्यात् । **नपुंसकस्य झलचः**:७।१।७२।।झलन्तस्याजन्तस्य च क्लीबस्य नुम्[७] स्यात् सर्वनामस्थाने ।। **मिदचोऽन्त्यात्परः** १।१।४७ ।। अचां मध्ये[८] योऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात् । उपधादीर्घः। ज्ञानानि । पुनस्तद्वत् । शेषं पुंवत् ।। एवं धन-

---

१ "स्वमोर्नपुंसकात्" इति वर्तते 'अङ्गात्' इति चात आह–**अङ्गात् क्लीबात् स्वमोरिति** ।। २ संबुद्ध्योपस्थितस्याङ्गस्यैङ्ह्रस्वाभ्यां विशेषणकरणे फलमाह–**हे ज्ञानेति** ।। ३ "जसः शी" इत्यतः 'शी' इति, "औङ आपः" इत्यतः 'औङः' इति च वर्ततेऽत आह–**औङ** इति ।। ४ नपुंसकत्वेन औङः सर्वनामस्थानत्वाभावाद् " यचि भम् " इति भसंज्ञायामित्यर्थः ।। ५ " नस्तद्धिते" इत्यतः 'तद्धिते' इति, ' भस्य ' इति च वर्तते ' लोप ' इति चात आह–**तद्धिते चेत्यादि** ।। ६ " नपुंसकाच्च " इत्यतो ' नपुसकात् ' इति वर्ततेऽत आह–**क्लीबादिति** ।। ७ " इदितो नुम्–" इत्यतः ' नुम् ' इति वर्तते –" उगिदचां सर्वनामस्थाने–" इत्यतः ' सर्वनामस्थाने ' इति चात आह–**नुम् स्यादित्यादि** ।। ८ अचां मध्ये योऽन्त्यस्तस्मात् परो मित् स्यात् यस्य समुदायस्य मिद् विहितस्तस्यैवान्तावयव–

वनफलादयः ॥ **अद्ड्डतरादिभ्यः पञ्चभ्यः** ७।१।२५ ॥ एभ्यः क्लीबेभ्यः[1] स्वमोरदड्डादेशः स्यात्। **टेः** ६।४।१४३ ॥ डिति[2] भस्य टेर्लोपः। कतरत्, कतरद्। कतरे। कतराणि। हे कतरत्। शेषं पुंवत्॥ एवं कतमत्। इतरत्। अन्यत्। अन्यतरत्। अन्यतमस्य त्वन्यतममित्येव[3]। (एकतरात्प्रतिषेधो[4] वक्तव्यः) एकतरम्॥ **ह्रस्वो नपुंसके प्रातिपदिकस्य** १।२।४७॥ अजन्तस्येत्येव[5]। श्रीपं ज्ञानवत्[6]॥ **स्वमोर्नपुंसकात्** ७।१।२३॥ लुक्[7] स्यात्। वारि। **इकोऽचि विभक्तौ** ७।१।७३॥ इगन्तस्य क्लीबस्य नुमचि विभक्तौ।

---

–इत्यन्वयः। तेन 'पञ्चारत्नीनि' इत्यादौ नुमः समुदायभक्तत्वात् 'इगन्तकाल–' इति स्वरसिद्धिः। 'मुञ्चति' इत्यादिविषये तु फलाभावादयोग्यत्वाच्च 'अन्तावयवः' इत्यंशाप्रवृत्तिः। परत्वांशस्तु तत्रापि प्रवर्तत एव। तेन न 'मुचादीनाम्' इत्यस्य स्थानषष्ठीत्वसंभावनयाऽलोऽन्त्यपरिभाषाप्रवृत्तिः। परशब्देन चात्र न परावयवत्वबोधनं किन्तु यस्य मिद् विहितस्तस्य योऽन्त्याच् ततः परत्वमात्रम्। अन्यथा पञ्चारत्नीनीत्यत्र स्वरासिद्धिः स्यात्। अमुञ्चदित्यादौ नुमि कृते विशिष्टस्याङ्गत्वं तु तन्मध्यपतितन्यायेन वेद्यमित्यन्यत्र विस्तरः। १ "स्वमोर्नपुंसकात्" इति वर्ततेऽत आह–**क्लीबेभ्य** इत्यादि ॥ २ 'भस्य' इत्यधिक्रियते "तिविंशते–" इत्यतः 'डिति' इति 'लोप' इति च वर्तते, अत आह–**डिति भस्येति**॥ ३ अन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावाद् द्विबहुविषये निर्धारणे वर्तेते, अतो नायं डतमान्त इति नाद्ड् इति भावः॥ ४ अद्ड्डादेशस्येति भावः ॥ ५ ह्रस्वपदश्रुत्योपस्थितस्याम्पदस्य विशेषणत्वेन तदन्तविधिरित्याह–**अजन्तस्येति**॥ ६ दीर्घान्तत्वप्रयुक्तो न कश्चिद्विशेष इति भावः। 'श्रीपाणि' इत्यादौ "एकाजुत्तरपद–" इति णत्वं भवत्येवेति बोध्यम्॥ ७ "षड्भ्यो लुक्" इत्यतो 'लुक्' इति वर्तते ॥ ८ "इदितो–

वारिणी । वारीणि । न लुमतेत्यस्यानित्यत्वात्पक्षे संबुद्धिनिमित्तो गुणः । हे वारे, हे वारि । घेर्ङितीति गुणे प्राप्ते ( वृद्ध्यौत्त्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन ) वारिणे । वारिणः । वारिणोः । नुमचिरेति नुट् । वारीणाम् । वारिणि । हलादौ हरिवत् ॥ **अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ७।१।७५ ॥** एषामनङ् स्याट्टादावचि । **अल्लोपोऽनः ६।४।१३४ ॥** अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपः । दध्ना । दध्ने । दध्नः ।

---

–नुम्–" इत्यतो 'नुम्' इति वर्तते " नपुंसकस्य झलचः " इत्यतः ' नपुंसकस्य ' इति च । तद्विशेषणत्वेन तदन्तविधिः इत्यत आह–**इगन्तस्येति** ॥

१ अस्यानित्यत्वे ज्ञापकम् "इकोऽचि" इति सूत्रे ' अचि ' ग्रहणमेव–तथाहि भ्यामभिसादिषु सत्यपि नुमि ' न लोपः प्रातिपदिकान्तस्य' इति तल्लोपसंभवादचीति व्यर्थम् । न च 'न ङिसंबुद्ध्योः ' इति निषेधात् संबुद्धौ लोपो न संभवतीति तत्रानिष्टवारणायाचीत्यावश्यकमिति वाच्यम् । संबुद्धिश्च लुका लुप्तेति नुमः प्राप्तेरेव तत्र दुर्लभत्वात् । 'न लुमता'–इति निषेधस्यानित्यतां विना तत्र प्रत्ययलक्षणाप्रवृत्तेः । नाप्युत्तरार्थं तदिति वाच्यम् । उत्तरत्रैव कर्तव्येऽत्राचीतिकरणस्य वैयर्थ्यात् । ' न लुमता–' इति निषेधस्यानित्यत्वे तु संबुद्धौ प्रत्ययलक्षणेन प्राप्तं नुमं वारयितुं तदिति भवत्येवाज्ग्रहणं लिङ्गम् । न चेदमनित्यत्वं संबुद्धिगुणमात्रविषयकमित्यभिनिवेष्टव्यम् । लक्ष्यानुरोधेनान्यत्रापि क्वचित् तदभ्युपगमे बाधकाभावात् । अतएव प्रियतिसृ प्रियत्रीति रूपद्वयमपि कैयटेन स्वीकृतम् ॥ २ तथा चोक्तं भाष्ये–' इह किंचित् 'त्रपो' इति' इति ॥ ३ " इकोचि विभक्तौ " इत्यतः ' अचि ' इति, " तृतीयादिषु भाषितपुंस्कम्–" इत्यतः ' तृतीयादिषु ' इति वर्ततेऽत आह–**टादावचीति** ॥ ४ "अङ्गस्य" "भस्य" इत्यधिकारद्वयफलितमर्थमाह–**अङ्गावयव** इत्यादि ॥

दध्नः । दध्नोः । दध्नोः ॥ **विभाषा ङिश्योः६।४।१३६॥** अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपो वा स्यात् ङिश्योः परयोः । दध्नि, दधनि । शेषं वारिवत् ॥ एवमस्थि-सक्थ्यक्षि ॥ सुधि । सुधिनी । सुधीनि । हे सुधे, हे सुधि । **तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य** ७।१।७४ ॥ प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिगन्तं क्लीबं पुंवद्वा टादावचि । सुधिया, सुधिनेत्यादि ॥ मधु । मधुनी । मधूनि । हे मधो, हे मधु ॥ सुलु । सुलुनी । सुलूनि ।

---

१ " अल्लोपोऽनः " इति सूत्रविहितस्यैव कार्यस्य विकल्प इति भावः ॥ २ " इकोऽचि विभक्तौ " इति वर्तते । भाषितः पुमान् यस्मिन्नर्थे इति भाषित-पुंस्कं प्रवृत्तिनिमित्तम्, तद् अस्ति अस्य तद्भाषितपुंस्कम् इति वृत्तिद्वयफलित-मर्थमाह–**प्रवृत्तिनिमित्तैक्य** इत्यादि ॥'यन्निमित्तमुपादाय पुंसि शब्दः प्रवर्तते । क्लीबवृत्ति तदेव स्यादुक्तपुंस्कं तदुच्यते ' ॥ " अन्यद्धि शब्दानां व्युत्पत्तिनिमि-त्तम्, अन्यच्च प्रवृत्तिनिमित्तम् । " इति दर्पणकाराः । तत्र व्युत्पत्तिलभ्यार्थे प्रकारतया भासमानं व्युत्पत्तिनिमित्तम् । यथा–कुशलशब्दे कुशग्राहित्वम् । यच्च शक्तिज्ञाने प्रकारतया भासते तत् प्रवृत्तिनिमित्तम् इत्युच्यते । यथा गोशब्दे गोत्वम् । व्युत्पत्तेः=योगार्थप्रतीतेः निमित्तं=कारणं–योगार्थतावच्छेदकम् । प्रवृत्तेः= मुख्यार्थज्ञानस्य निमित्तं=कारणं–शक्यतावच्छेदकम्, इति तद्व्युत्पत्तेः । एतदुक्तं भवति–" यद्विशेषणं पुरस्कृत्य घटादिशब्दाः तत्तद्व्यक्तिषु प्रयुज्यन्ते तद् विशेषणं प्रवृत्तिनिमित्तमित्युच्यते" । वाच्यतावच्छेदकमिति यावत् । ३ सुद्ध्यातृत्वं शोभ-नज्ञानवत्वं वा प्रवृत्तिनिमित्तं पुन्नपुंसकयोरेकमेवेति पुंवत् । पुंवत्त्वे ह्रस्वनुमोर-भावः फलति । ४"मधु पुष्परसे मधुर्वसन्ते चैत्रे च"इति कोशात् मधुशब्दस्य पुन्न-पुंसकयोरेकं प्रवृत्तिनिमित्तं नास्ति, किन्तु मद्यत्ववसन्तत्वादिरूपं भिन्नभिन्नमेवेति न पुंवत् ॥ ५ शोभनलवनकर्तृत्वं प्रवृत्तिनिमित्तं पुंसि क्लीबे चैकमेवेति पुंवत्त्वम् ।

सुलुनेत्यादि । धातृ[1] । धातृणी । धातॄणि । हे धातः, हे धातृ । धातॄणाम् । एवं ज्ञात्रादयः ॥ **एच इग्घ्रस्वादेशे १।१।४८** ॥ आदिश्यमानेषु ह्रस्वेषु मध्ये एच इगेव स्यात् । प्रद्यु प्रद्युनी । प्रद्यूनि । प्रद्युनेत्यादि ॥ प्रारि । प्ररिणी । प्ररीणि । प्ररिणा । एकदेशविकृतमनन्यवत् । प्रराभ्याम् । प्ररीणाम् । सुनु । सुनुनी । सुनूनि । सुनुनेत्यादि[2] ॥

इत्यजन्तनपुंसकलिङ्गाः ।

---

अथ हलन्तपुंल्लिङ्गाः ।

**हो ढः ८।२।३१** ॥ हस्य ढः स्याज्झलि[3] पदान्ते च । लिट्, लिड् ॥ लिहौ । लिहः । लिड्भ्याम् । लिट्त्सु, लिट्सु ॥ **दादेर्धातोर्घः ८।२।३२** ॥ झलि पदान्ते चोपदेशे दादेर्धातोर्हस्य[4] घः ॥ **एकाचो बशो भष् झषन्तस्य स्ध्वोः ८।२।३७** ॥ धात्ववयवस्यैकाचो[5]

---

१ धारणपोषणकर्तृत्वं प्रवृत्तिनिमित्तं पुन्नपुंसकयोरेकमेवेति भवति पुंवद्भावः । २ इह न पुंवत्, यदिगन्तं प्रद्यु इति तस्य भाषितपुंस्कत्वाभावात्, यच्च भाषितपुंस्कं 'प्रद्यो' इति तस्येगन्तत्वाभावात् । एवं प्रारि, सुनु इत्यादावपि । ३ "पदस्य" इत्यधिकृतम्, "झलो झलि" इत्यतः 'झलि' इति वर्ततेऽत आह–**झलि पदान्ते** इति ॥ ४ "हो ढः" इत्यतः 'हः' इति वर्तते । 'दादिपरं चौपदेशिकदादिपरम्'। इत्याह–**झलीति** ॥ ५ "दादेर्धातोः–" इत्यतोऽनुवृत्तं धातुपदं वैयधिकरण्येन "एकाचः" इत्यनेनान्वेति । "पदस्य" इत्यधिकृतम् । 'झलि' इति तु निवृत्तम् 'स्ध्वोः' ग्रहणसामर्थ्यात् इत्यभिप्रेत्याह–**धात्ववयवस्येति** ॥

झषन्तस्य बशो भष् से ध्वे पदान्ते च । धुक्, धुग् । दुहौ । दुहः । धुग्भ्याम् । धुक्षु ॥ **वा द्रुहमुहष्णुहष्णिहाम् ८।२।३३** ॥ एषां हस्य वा घो झलि पदान्ते च । ध्रुक्, ध्रुग्, ध्रुट्, ध्रुड् । द्रुहौ । द्रुहः । ध्रुग्भ्याम्, ध्रुड्भ्याम् । ध्रुक्षु, ध्रुट्त्सु, ध्रुट्सु ॥ एवं मुक्, मुग् इत्यादि ॥ **धात्वादेः षः सः ६।१।६४** ॥ स्नुक्, स्नुग्, स्नुट्, स्नुड् । एवं स्निक्, स्निग्, स्निट्, स्निड् ॥ विश्ववाट्, विश्ववाड् । विश्ववाहौ । विश्ववाहः । विश्ववाहम् । विश्ववाहौ ॥ **इग्यणः संप्रसारणम् १।१।४५** ॥ यणः स्थाने प्रयुज्यमानो य इक् स संप्रसारणसंज्ञः स्यात् ॥ **वाह ऊठ् ६।४।१३२** ॥ भस्य वाहः संप्रसारणमूठ् ॥ **संप्रसारणाच्च ६।१।१०८** ॥ संप्रसारणादचि पूर्वरूपमेकादेशः । एत्येधत्यूठ्स्विति वृद्धिः । विश्वौहः इत्यादि ॥ **चतुरन**-

---

१ इह व्यपदेशिवद्भावेन धात्ववयवत्वाद् भष्भावः । २ "दादेर्धातो–" इति सूत्राद् 'घः' इति वर्तते । तथा च द्रुहशे प्राप्तविभाषा इतरत्र त्वप्राप्तविभाषा इति भावः ॥ ३ संप्रसारणशब्देनेति पूर्वशेषः । तेन 'अदुह्वि' 'द्युभ्याम्' इत्यादौ सम्प्रसारणसंज्ञाऽभावेन 'हलः' इति दीर्घो नेति बोध्यम् । ४ विधिप्रदेशेषु सूत्रशाटकवद् भाविसंज्ञाश्रयणान्नान्योन्याश्रयः । ५ "वाहशब्दान्तं यदङ्गं भं तदवयवस्य निर्दिश्यमानस्य वाहशब्दस्य सम्प्रसारणभावी ऊठ् स्यात्" इति सूत्रार्थः । "अङ्गभसंज्ञानिमित्ते प्रत्ययपरो यो वाहशब्दस्तदन्तं यदङ्गं तदवयवस्य निर्दिश्यमानावयवस्य सम्प्रसारणभावी ऊठ् स्यात्" इति तु परमार्थः । तेन वाहवाट्शब्दे नातिप्रसङ्ग इति ध्येयम् । ६ "भस्य" इत्यधिकृतं 'वाहः' इत्यस्य विशेषणम् । "वसोः संप्रसारणम्" इत्यतः 'संप्रसारणम्' इति वर्ततेऽत आह–भस्येति ॥ ७ "इको यणचि" इत्यतः 'अचि' "एकः पूर्वपरयोः" इति–

**चतुरनडुहोरामुदात्तः ७।१।९८॥** अनयोराम् स्यात्सर्वनामस्थाने परे। **सावनडुहः ७।१।८२॥** अस्य नुम् स्यात् सौ परे। अनड्वान्॥ **अम् संबुद्धौ ७।१।९९॥** हे अनड्वन्। हे अनड्वाहौ। हे अनड्वाहः। अनडुहः। अनडुहा। **वसुस्रंसुध्वंस्वनडुहां दः ८।२।७२॥** सान्तवस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते। अनडुद्भ्यामित्यादि। सान्तेति किम्? विद्वान्। पदान्ते किम्? स्रस्तम्। ध्वस्तम्॥ **सहेः साडः सः ८।३।५६॥** साड्रूपस्य सहेः सस्य मूर्धन्यादेशः।

---

-'अभि पूर्वः" इत्यतः 'पूर्वः' इति च वर्तते इति मनसि कृत्वैवाह-**अचीति**॥ १ "इतोऽत्सर्वनाम-" इत्यतः 'सर्वनामस्थाने' इति वर्ततेऽत आह-**सर्वनामस्थान** इति॥ २ "आच्छीनद्योः-" इत्यत-'आत्, नुम्' इति वर्तते। "शप्श्यनो-" इत्यतः 'नित्यम्' इति च॥ "मिदचोऽन्त्यात्परः" इति परिभाषोपस्थानात् 'अनडुहोऽचामन्त्यादवर्णरूपादचः परस्तस्यैवान्तावयवो नुम् मित् स्यादित्यर्थस्वीकारेणायं नुम् आमागमसमागममन्तरा नैव प्राप्नोतीति विशेषविहितोऽप्ययमामागमं न बाधते नाप्यमागमेन बाध्यते इत्यभिप्रेत्योदाहरिष्यति अनड्वानिति, अत आह-**नुमिति**॥ ३ हस्थानिकस्य संयोगान्तलोपस्यात्र लोपो न। नकारस्य प्रातिपदिकसंज्ञकपदान्तत्वाभावात्। नुम्विधिसामर्थ्याद् "वसुस्रंसु-" इति दत्वं न। नन्वेवम् 'अनड्वांस्तत्र' इत्यत्र 'नश्छवि-' इति रुत्वमपि न स्यादिति चेत्। अत्राहुर्भाष्यकाराः-"यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमेव नासौ बाध्यते" इति। भवति हि दत्वं प्रति नुम्विधिर्निरर्थकः, रुत्वं प्रति तु निमित्तमेवेति॥ ४ "चतुरनडुहोरामुदात्तः" इत्यतः 'चतुरनडुहोः' इति वर्तते॥ ५ "पदस्य" इत्यधिकृतम्। "ससजुषो-"इत्यतः 'स' इत्यनुवर्तते। तच्च 'वसु' इत्यस्यैव विशेषणम्। विद्वान् विद्वन् इत्यत्र व्यभिचारात् विद्वांसः विदुष इत्यादौ संभवात्। न स्रंसुध्वंस्वोः अव्यभिचारात्, नाप्यनडुहः असंभवात् इत्यभिप्रेत्याह-**सान्तवस्वन्तस्येति**॥ ६ "अपदान्तस्य मूर्धन्यः"इत्य-

तुराषाट्, तुराषाड्। तुरासाहौ। तुरासाहः। तुराषाड्भ्यामित्यादि॥ **दिव औत् ७।१।८४॥** दिविति प्रातिपदिकस्यौत्स्यात्सौ। सुद्यौः। सुदिवौ॥ **दिव उत् ६।१।१३१॥** दिवोऽन्तादेश उकारः स्यात् पदान्ते। सुद्युभ्यामित्यादि॥ चत्वारः। चतुरः। चतुर्भिः। चतुर्भ्यः॥ **षट्चतुर्भ्यश्च ७।१।५५॥** एभ्य आमो नुडागमः॥ **रषाभ्यां नो णः समानपदे ८।४।१॥(अचो रहाभ्यां द्वे ८।४।४३॥** अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः।) चतुर्ण्णाम्, चतुर्णाम्॥ **रोः सुपि ८।३।१६॥** रोरेव विसर्गः सुपि। षत्वम्। षस्य द्वित्वे प्राप्ते॥ **शरोऽचि ८।४।४९॥** अचि परे शरो न द्वे

---

–विकृतम्॥ १ "सावनडुहः" इत्यतः 'सौ' इति वर्तते। निरनुबन्धकग्रहणे न सानुबन्धकस्य इति निरनुबन्धकस्यौणादिकस्यैवात्र ग्रहणम् न सानुबन्धकस्य धातुपाठसहितस्येत्यभिप्रेत्याह–**दिविति प्रातिपदिकस्येति**॥ २ अल्विधित्वेन स्थानिवत्त्वाभावाद् 'हल्ङ्याप्–' इति सुलोपो न। एतदुक्तं भवति–हल्त्वनिमित्तवैकल्यप्रयुक्तायां सुलोपाप्राप्तावतिदेशेनानिनीष्यमाणहल्त्वस्य स्थानिभूतवकारमात्रवृत्तित्वेन तदाश्रयात् अलः परस्य सोर्लोपस्य चिकीर्षितत्वाद् 'अनल्विधौ' इति स्थानिवत्त्वनिषेधात्र **सुलोप इति**। ३ "एङः पदान्ता–" इति वर्तितेऽत आह–**पदान्त** इति॥ ४ "ह्रस्वनद्यापो नुट्" इत्यतः 'नुट्' 'आमः' इति च वर्ततेऽत आह–**आम** इति॥ ५ रेफषकाराभ्या परस्य **नस्य णः स्यादेकपदे**॥ ६ "खरवसानयो–" इत्यतो विसर्जनीय इति वर्ततेऽत आह–**विसर्ग** इति॥ ७ रेफरूपेणः परत्वादिति भावः। अ–आ–भिन्नस्वर, कु, र्, इत्येतेभ्यः परस्य प्रत्ययसकारस्य षत्वम्, नुम्स्थानिक–अनुस्वार–विसर्ग–शर्–एषां व्यवधानेऽपि सस्य 'षः' इति षत्वविधेः साधारणो नियमः। ८ 'अचो रहाभ्याम्' इत्यनेन। ९ "अचो रहाभ्यां–" इत्यतः 'द्वे' इति "नादिन्याक्रोशे–" इत्यतो 'न'–

स्तः । चतुर्षु ॥ **मो नो धातोः ८।२।६४** ॥ धातोर्मस्य नः पदान्ते । प्रशान् ॥ **किमः कः ७।२।१०३** ॥ किमः कः स्याद्विभक्तौ । कः । कौ । के । इत्यादि । शेषं सर्ववत् ॥ **इदमो मः ७।२।१०८** ॥ सौ । त्यदाद्यत्वापवादः ॥ **इदोऽय् पुंसि ७।२।१११** ॥ इदम इदोऽय् सौ पुंसि । अयम् । त्यदाद्यत्वे ॥ **अतो गुणे ६।१।९७** ॥ अपदान्तादतो गुणे पररूपमेकादेशः ॥ **दश्च ७।२।१०९** ॥ इदमो दस्य मः स्याद्विभक्तौ । इमौ । इमे । त्यदादेः संबोधनं नास्तीत्युत्सर्गः ॥ **अनाप्यकः ७।२।११२** ॥ अककारस्येदम इदोऽनापि विभक्तौ । आबिति प्रत्याहारः । अनेन ॥ **हलि लोपः ७।२।११३** ॥ अककारस्येदम इदो लोप आपि हलादौ । नानर्थकेऽलोऽन्त्यविधि-

---

-इति च वर्ततेऽत आह-**नेत्यादि** ॥ १ "पदस्य" इत्यधिक्रियते ॥ २ "अष्टन आ-" इत्यतः 'विभक्तौ' इति वर्तते ॥ ३ "तदोः सः सा-" इत्यतः 'सौ' इति वर्तते ॥ ४ "**इदमो मः**" इत्यतः 'इदम' इति । "यः सौ" इत्यतः 'सौ' इति वर्तते ॥ ५ "**एङि पररूपम्**" इत्यतः 'पररूपम्' इति "उस्यपदान्तात्" इत्यतः 'अपदान्तात्' इति "एकः पूर्वपरयोः" **इति च वर्तते** । ६ "अष्टनः-" इत्यतो विभक्ताविति, "इदमो मः" इति च वर्तते ॥ ७ **उत्सर्ग** इति । केवलानां प्रयोगेण विवक्षितसंबोध्यस्य संबोधनासिद्धेः । क्वचित्तु तादृशप्रयोगोऽपि भवतीति भाष्यदत्तस्य 'हे स' 'हे असौ' इति प्रयोगस्य नानुपपत्तिः ॥ ८ "इदमो मः" इत्यतः 'इदमः' इति, "इदोऽय्-" इत्यतः 'इद' इति "अष्टन आ-" इत्यतो 'विभक्तौ' इति च वर्तते ॥ ९ **प्रत्याहार** इति । 'टा' इत्याकारमारभ्य सुपः पकारपर्यन्तं 'आप्' इति प्रत्याहारो व्याख्यानादिति भावः ॥ १० "अनाप्यकः" इत्यतः 'अकः' इति 'इदम' इति 'इद' इति च वर्तते ॥ ११ ननु इद+भ्याम्+ इति स्थितेऽलोऽन्त्यपरिभाषया इदो दकारस्य लोपः स्यादत आह-**नानर्थे**ति ।-

रनभ्यासविकारे ॥ **आद्यन्तवदेकस्मिन्** १।१।२१॥ एकस्मिन्क्रियमाणं कार्यमादाविवान्त इव स्यात् । सुपि चेति दीर्घः । आभ्याम् ॥ **नेदमदसोरकोः** ७।१।११ ॥ अककारयोरिदमदसोर्भिस ऐस् न । एभिः । अस्मै । एभ्यः । अस्मात् । अस्य । अनयोः । एषाम् । अस्मिन् । अनयोः । एषु ॥ **द्वितीयाटौस्स्वेनः** २।४।३४ ॥ इदमेतदोरन्वादेशे । किंचित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः । यथा—अनेन व्याकरणमधीतमेनं छन्दोऽध्यापयेति । अनयोः पवित्रं कुलमेनयोः प्रभूतं स्वमिति । एनम् । एनौ । एनान् । एनेन । एनयोः । एनयोः । राजा ॥ **न**

---

—इदम्—शब्दे हि 'इद्' इत्यनर्थकः, समुदायस्यैवार्थवत्वात् । ततश्च 'इद्' इत्यस्य कृत्स्नस्यैव लोप इति भावः। अभ्यासविकारे त्वनर्थकेऽपि अलोऽन्त्यविधिः प्रवर्तते एवेत्यर्थः । तेन 'पिपर्ति' इत्यादि सिद्धमित्यन्यत्र विस्तरः॥ १ लोपस्तु न विकार इति लोपेऽलोन्त्यविधिर्न भवति, "भवतेरः" इत्यादौ स्वरूपसत्यादेशे तु भवत्येवेति बोध्यम् ॥ २ ननु अ+भ्याम्+इति स्थिते अङ्गस्याकारात्मकत्वात् अदन्तत्वाभावात् 'सुपि च' इति दीर्घो न स्यादत आह—**आद्येति** । "आदौ अन्ते च सति यत् कार्यं भवति, तत् एकस्मिन्=असहायेऽपि स्यात्" इति वास्तविकः सूत्रार्थः । "तदादेः तदन्तस्य क्रियमाणं कार्यं यथा तदादौ तदन्ते च भवति, तथा असहायेऽपि स्यात्" इति यावत् ॥ ३ "अतो भिस ऐस्" इति वर्तते ॥ ४ अनादेशापेक्षया नित्यत्वात् ङेः स्मै, पश्चाद्धलि लोपः ॥ ५ इदमस्तु सन्निकृष्टं समीपतरवर्ति चैतदो रूपम् । अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्॥ ६ "इदमोऽन्वादेशे" इति वर्तते "एतदस्त्रतसोः" इत्यतः 'एतद' इति च वर्ततेऽत आह—**इदमेतदोरित्यादि** ॥ ७ विधातुम्=अज्ञातं ज्ञापयितुमित्यर्थः । 'एतन्मातं ज्वितम्' इत्यत्र त्वीषदर्थादयो नाज्ञाता ज्ञाप्यन्ते किंत्वनूद्यन्त एवेति नान्वादेश—

**ङिसम्बुद्ध्योः ८।२।८ ॥** नस्य[1] लोपो न ङौ संबुद्धौ च । हे राजन् । ( ङावुत्तरपदे[2] प्रतिषेधो वक्तव्यः )। ब्रह्मनिष्ठः । राजानौ । राजानः । राज्ञः ॥ **नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ८।२।२ ॥** सुब्विधौ[3] स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलो**पोऽसिद्धो**, नान्यत्र[4] राजाश्व इत्यादौ इत्यसिद्धत्वादात्वमेत्त्वमैस्त्वं च न । राजभ्याम् । राजभिः । राज्ञि, राजनि । राजसु ॥ यज्वा । यज्वानौ । यज्वानः ॥ **न संयोगाद्वमन्तात् ६।४।१३७॥** वमन्तसंयोगादनोऽकारस्य[5] लोपो न । यज्वनः । यज्वना । यज्वभ्याम् ॥ ब्रह्मणः। ब्रह्मणा ॥ **इन्हन्पूषार्यम्णां शौ ६।४।१२॥** एषां शावेवोपधाया दीर्घो नान्यत्र[6] । इति निषेधे प्राप्ते॥ **सौ च ६।४।१३ ॥**

---

–त्वमिति नैनादेशः । एवमेव 'नक्तं भीरुरयम्' इति गीतगोविन्दपद्येऽपि भीरुत्वमनुवाद्यमेवेति बोध्यम् । अयमत्र सरलोऽर्थः-यत्र कस्मिंश्चिदेकस्मिन् वाक्ये कश्चिच्छब्द उक्तः स एव पुनर्विषयान्तरप्रकाशनाय द्वितीयस्मिन् वाक्येऽपि पठितो भवति, तत्रान्वादेशत्वम् । तथा चाभियुक्ताः–" किंचिद्विधातुमुक्तस्य विधानान्तरहेतवे । शब्दस्य पुनरुक्तिश्चेदन्वादेशं विदुर्बुधाः ।" इति । यथा–" इमं विद्धि हरेर्भक्तं विद्ध्यथैनं शिवार्चकम् । इमाविमान् वित्त शैवानेनावेनांस्तु वैष्णवान् । अनेन पूजितः कृष्णोऽथैनेन गिरिशोऽर्चितः । अनयोः केशवः स्वामी शिवः स्वामी अथैनयोः " ॥ १ " न लोपः प्रातिपदिकान्तस्य " इति सूत्रमेवानुवर्तते ॥ २ उत्तरपदे परतः ङौ नकारलोपस्याप्रतिषेधः अर्थात् विधिरेवेत्यर्थः ॥ ३ सुप्त्वं तद्व्याप्यधर्मं वा पुरस्कृत्य प्रवर्तमानो विधिः सुब्विधिः । तेन षत्वविधेः सुब्विधित्वाभावेन ' पथिषु ' इत्यादौ नलोपस्य सिद्धत्वमेवेति बोध्यम् ॥ ४ " पूर्वत्रा- ". इति वर्तते । तथा च तेनैव सिद्धेऽसिद्धत्वे पुनर्विधानं नियमार्थमेवेति लमाह–नान्यत्रेति ॥५ "अल्लोपोऽन" इति सूत्रं वर्तते ॥६"ढ्लोपेः–"–

इन्नादीनामुपधाया दीर्घो[1]ऽसंबुद्धौ सौ । वृत्रहा । हे वृत्रहन् ॥ **एकाजु-त्तरपदे णः ८।४।१२ ॥** एकाजुत्तरपदं यस्य तस्मिन्समासे पूर्वपद-[3]स्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य णः । वृत्र-हणौ ॥ **हो हन्तेर्ञ्णिन्नेषु ७।३।५४॥** ञिति णिति प्रत्यये नकारे च परे हन्तेर्हकारस्य कुत्वम्[4] । वृत्रघ्नः इत्यादि । एवं शार्ङ्गिन्, यशस्विन्, अर्यमन्, पूषन् ॥ **मघवा बहुलम् ६।४।१२८ ॥** मघवन्शब्दस्य वा तृ[6] इत्यन्तादेशः । ऋ इत् ॥ **उगिदचां सर्वनामस्थानेऽधा-तोः ७।१।७०॥** अधातोरुगितो नलोपिनोऽञ्चतेश्च नुम् स्यात्सर्वनाम-

---

–इत्यतो दीर्घ इति,'नोपधायाः''"सर्वनामस्थाने चासंबुद्धौ"इति वर्तते । तथा च शेः सर्वनामस्थानत्वादेव दीर्घे सिद्धे पुनर्विधानमितरव्यावृत्त्यर्थं नियमार्थमेवेत्याह–**नान्य-त्रेति ॥** १ "शावेव" इति नियमेन सौ दीर्घेऽप्राप्ते विध्यर्थमिदमित्याह–**दीर्घो-ऽसंबुद्धावित्यादि ॥** २ भिन्नपदत्वाद् 'अट्कुप्वाङ्'–इति णत्वं न प्राप्नोतीति वचनारम्भः। ३ "रषाभ्यां नो णः" इति "पूर्वपदात्संज्ञायामगः" इत्यतः 'पूर्वपदात्' इति, " प्रातिपदिकान्तनुम्विभक्तिषु च" इति च वर्तते अत आह–**पूर्वपदस्था-दिति॥**४"चजोः कु–"इत्यतः'कु' इति वर्ततेऽत आह–**कुत्वमिति ॥**५"अनिन-स्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति" इति वचनाद् विन्प्रत्यये इनोऽनर्थकत्वेऽपि दीर्घनियमसिद्धी भवतः ॥ ६ "अवर्णस्तृ–" इत्यतः 'तृ' इति वर्तते । "नानुबन्धकृतमनेकाल्त्वम्" इति परिभाषयाऽनेकाल्त्वनिषेधे सर्वादेशत्वाप्राप्तिफलितमाह–**तृ इत्यन्तादेश** इति ॥ ७ ननु 'तृ इत्यन्ता-देशः' इत्यसङ्गतम् आदेशस्यानेकाल्तया सर्वादेशस्यैव युक्तत्वादत आह–**ऋ इ-दिति** । 'उपदेशेऽच्–' इति सूत्रेणेत्संज्ञ इत्यर्थः । तथा च 'नानुबन्धकृतमने-काल्त्वम्' इत्यनेकाल्त्वाभावान्न सर्वादेशत्वमिति भावः । ८ "इदितो नुम्–" इत्यतः'नुम'इति वर्तते । अनूपदेन नलोप्यञ्चतेरेव ग्रहणं व्याख्यानादित्यभिप्रेत्याह–

स्थाने परे । मघवान् । मघवन्तौ । मघवन्तः । हे मघवन् । मघवद्भ्याम् । तृत्वाभावे मघवा । सुटि राजवत् ॥ **श्वयुवमघोनामतद्धिते ६।४।१३३ ॥** अन्नन्तानां[2] भानामेषामतद्धिते संप्रसारणम् । मघोनः । मघवभ्याम् । एवं श्वन्, युवन् ॥ **न[3] संप्रसारणे संप्रसारणम् ६।१।३७॥** संप्रसारणे परतः पूर्वस्य यणः संप्रसारणं न स्यात् । इति यकारस्य नेत्वम् । अत[4] एव ज्ञापकादन्त्यस्य यणः पूर्वं संप्रसारणम् । यूनः । यूना । युवभ्याम् इत्यादि ॥ अर्वा । हे अर्वन् ॥ **अर्वणस्त्रसावनञः ६।४।१२७ ॥** नञा रहितस्यार्वन्नित्यस्याऽङ्गस्य तृ इत्यन्तादेशो न तु सौ । अर्वन्तौ । अर्वन्तः । अर्वद्भ्यामित्यादि ॥

---

-**नलोपिन** इत्यादि ॥ १ तकारस्थानिकस्य संयोगान्तलोपस्यासिद्धत्वान्नलोपो न । 'सर्वनामस्थाने च-' इति दीर्घे कर्तव्ये तु संयोगान्तलोपो नासिद्धो भवति, बहुलग्रहणात् । २ "भस्य" इत्यधिक्रियते । "वसोः संप्रसारणम्" इत्यतः 'संप्रसारणम्' इति, "अल्लोपोऽनः" इत्यतः 'अनः' इत्यपकृष्टं गृह्यमाणविशेषणमिति तदन्तविधिं ग्रन्थ्याह-**अन्नन्तानामिति** ॥ ३ ननु वकारस्य संप्रसारणे कृते यकारस्यापि तत्कुतो न, 'लक्ष्ये लक्षणम्-' इति न्यायस्य तु नात्र विषयः, 'यं धर्मं लक्ष्यतावच्छेदकीकृत्य शास्त्रं प्रवृत्तं तदेव लक्ष्यतावच्छेदकीकृत्य पुनर्न प्रवर्तते' इत्येव तस्यार्थाङ्गीकरणेनात्र लक्ष्यतावच्छेदकभेदात् । अत आह-**न संप्रसारणे** इति ॥ ४ ननु तर्हि प्रथमं यकारस्यैव सम्प्रसारणमस्तु, तदानीं सम्प्रसारणपरत्वाभावेन निषेधाप्रवृत्तेः, अनन्तरं तु वकारस्यापि सम्प्रसारणमस्तु । विनिगमनाविरहादत आह-**अत एवेति** । सूत्रारम्भसामर्थ्यादेवेत्यर्थः । तथा सति 'न सम्प्रसारणे-' इति निषेधस्यैव वैयर्थ्यापातादिति भावः । तदुक्तं भाष्ये-"इहेङ्गितेन चेष्टितेन निमिषितेन महता वा सूत्रप्रबन्धेनाचार्याणामभिप्रायो गम्यते, एतदेव ज्ञापयति-परस्य पूर्वं अभि-

**पथिमथ्यृभुक्षामात्** ७।१।८५ ॥ एषामाकारोन्तादेशः स्यात् सौ परे । **इतोऽत्सर्वनामस्थाने** ७।१।८६ ॥ पथ्यादेरिकारस्याकारः स्यात्सर्वनामस्थाने परे । **थो न्थः** ७।१।८७॥ पथिमथोस्थस्य न्थादेशः सर्वनामस्थाने । पन्थाः । पन्थानौ । पन्थानः ॥ **भस्य टेर्लोपः** ७।१।८८ ॥ भस्य पथ्यादेष्टेर्लोपः । पथः । पथा । पथिभ्याम् । एवं मथिन्, ऋभुक्षिन् ॥ **ष्णान्ता षट्** १।१।२४॥ षान्ता नान्ता च संख्या षट्संज्ञा स्यात् । पञ्चन्शब्दो नित्यं बहुवचनान्तः । पञ्च । पञ्च । पञ्चभिः। पञ्चभ्यः। पञ्चभ्यः । नुट् । **नोपधायाः** ६।४।७ ॥ नान्तस्योपधाया दीर्घो नामि । पञ्चानाम् । पञ्चसु ॥ **अष्टन आ विभक्तौ** ७।२।८४॥ हलादौ वा स्यात् । **अष्टाभ्य औश्**

---

–ष्यति'' इति ॥ १ ''सावनडुहः'' इत्यतः 'सौ' इति वर्तते । शुद्धाया एव व्यक्तेर्विधीयमानत्वेनासवर्णग्रहणाप्राप्त्या नानुनासिक इत्याह–**आकार** इति ॥ २ '' पथिमथ्यृभुक्षाम्'' इति वर्ततेऽत आह–**पथ्यादेरिति** ॥ ३ अनुवृत्तानां पथिमथ्यृभुक्षिन्शब्दानाम् ऋभुक्षिन्शब्दे थकारासंभवादाह–**पथिमथोरिति** ॥ ४ ''पथिमथ्यृभुक्षाम् '' इति वर्ततेऽत आह–**पथ्यादेरिति** ॥ ५ ''बहुगणवतुडति–'' इत्यतः 'संख्या' इति वर्तते ॥ ६ 'षट्चतुर्भ्यश्च' इत्यनेन । ७ नलोपस्यासिद्धत्वात् '' नामि '' इति दीर्घो न प्रवर्तत इत्ययमारम्भः । ८ ''ढ्रलोपे–'' इत्यतः 'दीर्घः' इति वर्तते ''नामि'' इति ''अङ्गस्य'' इत्यधिकृतविशेषणे नकारे तदन्तविधिरित्याह–**नान्तस्येति** ॥ ९''रायो हलि'' इत्यतोऽपकृष्टहल्पदे तदादिविधिः, ''अष्टनो दीर्घात्'' इति सूत्रे दीर्घग्रहणसामर्थ्यादस्य वैकल्पिकत्वमवगम्यते इत्याह–**हलादौ वेति** ॥

७।१।२१ ॥ कृताकारादष्टनो जश्शसोरौश् । अष्टभ्य[1] इति वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति । अष्टौ । अष्टौ । अष्टाभिः । अष्टाभ्यः । अष्टाभ्यः । अष्टानाम् । अष्टासु । आत्वाभावे अष्ट,पञ्चवत् ॥

**ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ३।२।५९ ॥**

एभ्यः क्विन्[3] अञ्चेः सुप्युपपदे, युजिक्रुञ्चोः केवलयोः, क्रुञ्चेर्नलोपाभावश्च[4] निपात्यते । कनावितौ ॥ **कृदतिङ् ३।१।९३॥** अत्र धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात् । **वेरपृक्तस्य ६।१।६७ ॥**

---

१ "अष्टनः" इत्येव वक्तव्ये "अष्टाभ्यः" इति निर्देशः कृताकार-विवक्षार्थः सन् जश्शसोर्विषयेऽप्यात्वं ज्ञापयति ॥ "जश्शसोः शिः" इत्यतो 'जश्शसोः' इत्यनुवर्ततेऽत आह-**कृताकारादित्यादि** ॥
२ भ्यसि यद्यपि 'अष्टाभ्यः, अष्टभ्यः' इति द्वे रूपे भवतः, तथापि सूत्रकृता मात्रा-लाघवमनादृत्य यद् 'अष्टाभ्यः' इति पठितम्, तेन विज्ञायते-नायं लक्षणवशसम्पन्नत्वनिर्देशः, अन्यथा लाघवादष्टभ्य इत्येव वदेत्, किन्तु नकारस्यात्वे कृते योऽष्टा-शब्दस्तस्येदमनुकरणम् इति "कृताकारादष्टनः" इत्येव सूत्रकृतोऽभिमतोऽर्थः, कृताकारश्चाष्टन्शब्दो जश्शसोरसंभवीति सूत्रकारकृताकारनिर्देशादेव "जश्शसोरात्वं वा" इत्यपूर्वं वचनं कल्प्यते । एतदुक्तं भवति-सूत्रकृतः कृताकारनिर्देशात् 'अष्टन आ विभक्तौ'इति सूत्रस्य वाक्यद्वयम्-'अष्टन आत्वं वा विभक्तौ'इत्येकम्, "अष्टन आत्वं वा हलादौ विभक्तौ" इत्यपरम् । तत्र पूर्ववाक्येनैव सर्वत्र निर्वाहे उत्तरवाक्यं पूर्ववाक्यस्य क्वाचित्कत्वं बोधयतीति क्वचिदजादिविभक्तावपि "अष्टन आ विभक्तौ" इति सूत्रस्य प्रवृत्तिरिति । **अष्टभ्य** इतीति कथनं गुर्वनुरोधेन । भाष्ये तु 'अष्टन इति' इत्येवोपलभ्यते ॥ ३ "स्पृशोऽनुदके" इत्यतः 'क्विन्' इति वर्तते ॥ ४ **नलोपाभाव** इति । नकारस्यौपदेशिकस्य ञकारादेशनिपातनेनेति बोध्यम् ॥

अपृक्तस्य वस्य लोपः[1]॥ **क्विन्प्रत्ययस्य कुः ८।२।६२ ॥** क्विन्प्रत्ययो यस्मात्तस्य[2] कवर्गोऽन्तादेशः पदान्ते । [अस्यासिद्धत्वाच्चोः[3] कुरिति कुत्वम् ] ऋत्विक्, ऋत्विग् । ऋत्विजौ । ऋत्विग्भ्याम् ॥ **युजेरसमासे ७।१।७१ ॥** युजेः सर्वनामस्थाने[4] नुम् स्यादसमासे । सुलोपः । संयोगान्तलोपः । कुत्वेन[5] नस्य ङः । युङ् । अनुस्वारपरसवर्णौ । युञ्जौ[6] । युञ्जः । युँग्भ्याम् ॥ **चोः कुः ८।२।३०॥** चवर्गस्य कवर्गः स्याज्झलि पदान्ते च । सुयुक्, सुयुग् । सुयुजौ । सुयुग्भ्याम् ॥ खन् । खञ्जौ । खन्भ्याम् ॥ **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ८। २।३६ ॥** झलि पदान्ते च । जश्त्वचर्त्वे । राट्, राड् । राजौ । राजः ।

---

१ "लोपो व्योर्वलि" इत्यतो 'लोपः' इति वर्तते ॥ २ "यस्मात्" इति बहुव्रीहिफलं तु स्त्रीलिङ्गे दृक्शब्दे कथयिष्यति ॥ "पदस्य" इति त्वधिक्रियत एव ॥ ३ अयं कोष्ठान्तर्गतः पाठः सर्वथा प्रामादिकः, नह्यत्र 'चोः कुः' इति कुत्वं भवितुमर्हति, 'व्रश्च'–इति षत्वेन बाधनात् । 'क्विन्प्रत्ययस्य'–इति कुत्वं तु क्विन्विधिसामर्थ्यादेव न बाध्यते, यष्टेत्यादौ षत्वविधेश्चरितार्थत्वात् । 'सुयुक्' इत्यादौ तु "क्विन्प्रत्ययस्य'–इत्यस्यासिद्धत्वाच्चोः कुरिति कुत्वम्" इति युक्तमिति तत्रैवायं पाठो बोध्यः ॥ ४ "इदितो नुम्" इत्यतो 'नुम्' इति "उगिदचाम्" इत्यतः 'सर्वनामस्थाने' इति वर्तते ॥ ५ **कुत्वेनेति ।** "क्विन्प्रत्ययस्य–" इति सूत्रेणेत्यर्थः।"चोः कुः" इत्यस्य तु न प्राप्तिश्चवर्गाभावात् ॥ ६ परसवर्णस्यासिद्धत्वाच्चोः कुरिति कुत्वं न ॥ ७ 'चोः कुः' इति कुत्वम्, 'क्विन्प्रत्ययस्य' इत्यस्यासिद्धत्वात् । ८ "पदस्य" इत्यधिक्रियते । "झलो झलि" इत्यतः 'झलि' इति वर्तते । 'स्कोः संयोगाद्योः–' इत्यतः 'अन्ते' इति च ॥'कुञ्चौ, कुञ्च' इत्यादौ कुत्वं तु ञकारादेशनिपातनस्य बाधकत्वेन बाध्यत एवेति बोध्यम् ॥ इत्यभिप्रेत्याह–**झलीत्यादि** ॥ ९ "पदस्य" इत्यधिकृतम् । 'स्कोः–' इत्यतः–

राड्भ्याम् ॥ एवं विभ्राट् । देवेट् । विश्वसृट् ॥ (परौ व्रजेः षः पदान्ते ) । परावुपपदे व्रजेः क्विप् स्याद्दीर्घश्च पदान्ते षत्वमपि । परिव्राट् । परिव्राजौ ॥ **विश्वस्य वसुराटोः ६।३।१२८ ॥** विश्वशब्दस्य दीर्घोऽन्तादेशः स्याद्वसौ राट्शब्दे च परे । विश्वाराट्, विश्वाराड् । विश्वराजौ । विश्वाराड्भ्याम् ॥ **स्कोः संयोगाद्योरन्ते च ८ । २ । २९ ॥** पदान्ते झलि च यः संयोगस्तदाद्योः स्कोर्लोपः । भृट् । सस्य श्चुत्वेन शः । झलाञ्जश् झशि इति शस्य जः । भृज्जौ । भृड्भ्याम् ॥ त्यदाद्यत्वं पररूपत्वं च ॥ **तदोः सः सावनन्त्ययोः ७।२।१०६ ॥** त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात्सौ । स्यः । त्यौ । त्ये ॥ सः । तौ । ते ॥ यः । यौ । ये ॥ एषः । एतौ । एते ॥ **ङे प्रथमयोरम् ७।१।२८ ॥** युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमाद्विती-

---

-'अन्ते' इति, "झलो झलि"इत्यतः'झलि' इति च वर्ततेऽत आह-**झलि पदान्ते** इति॥१ "ढ्लोपे-"इत्यतो'दीर्घः'इत्यनुवर्ततेऽत आह-**दीर्घ** इति ॥ राट् इति चर्त्वमविवक्षितम् । पदान्तत्वमात्रं विवक्षितमित्यभिप्रेत्योदाहरति-**विश्वाराड्भ्यामिति** ॥ २ "पदस्य" इत्यधिकृतम् । "झलो झलि", इत्यतो 'झलि' इति वर्तते । "संयोगान्तस्य लोपः" इत्यतो 'लोपः' इति चात आह-**पदान्ते** इति ॥ ३"त्यदादीनामः" इत्यतः 'त्यदादीनाम्' इति वर्ततेऽत आह-**त्यदादीनामिति** ॥ ४ अन्वादेशे तु-एनम् । एनौ । एनान् । एनेन । एनयोः २ । "एनं विद्धि हरेर्भक्तं विद्धयथैनं शिवार्चकम् । एतावेतान् वित्त शैवानेनावेनांस्तु वैष्णवान् ॥" ५ "युष्मदस्मद्भ्यां ङसः" इत्यतः 'युष्मदस्मद्भ्याम्' इति वर्तते । ङे इति लुप्तषष्ठ्यन्तम् पृथक् पदम् । 'प्रथमयोः' इति प्रथमाशब्दः प्रथमाद्वितीयाविभक्ति-

थयोश्चामादेशः॥ **त्वाहौ सौ** ७।२।९४॥ अनयोर्मपर्यन्तस्य त्वाऽहौ आदेशौ स्तः ॥ **शेषे लोपः** ७।२।९२ ॥ एतयोष्टिलोपः । त्वम् । अहम् ॥ **युवावौ द्विवचने** ७।२।९०॥ द्वयोरुक्तावनयोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ ॥ **प्रथमायाश्च द्विवचने भाषायाम्** ७।२।८८॥औङ्येतयोरात्वं लोके। युवाम्। आवाम् ॥ **यूयवयौ जसि** ७।२।९३॥ अनयोर्मपर्यन्तस्य । यूयम् । वयम् ॥ **त्वमावेकवचने** ७।२।९७॥ एकस्योक्तावनयोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ ॥

---

-पर इत्याह-**युष्मदस्मद्भ्यामित्यादि** ॥ १ "युष्मदस्मदोरनादेशे" इत्यतः 'युष्मदस्मदोः' इति वर्तते, "मपर्यन्तस्य" इति चाधिक्रियतेऽत आह-**अनयोर्मपर्यन्तस्यैति** ॥ २ "युष्मदस्मदोः" "मपर्यन्तस्य" इति पञ्चमीविपरिणतमनुवर्तते । 'शेषे' इति षष्ठ्या विपरिणम्यते । तथा च 'अनयोर्मपर्यन्ताच्छेषस्य लोपः' इत्यर्थफलितमाह-**टिलोप** इति ॥ ३ "युष्मदस्मदोः" "मपर्यन्तस्य" इति वर्तते, "अष्टन आ-" इत्यतो विभक्ताविति च ॥ द्विवचनशब्देन औभ्यामादि न गृह्यते, युवामावां वातिक्रांतेन अतियुवया इत्वादावेकवचनविभक्तौ परतो युवावादेशानुपपत्तेः । अतो 'द्विवचने' इति विभक्तिविपरिणामेन युष्मदस्मदोर्विशेषणम् । तथा च 'द्वित्ववाचिनोरनयोर्युवावौ'- इत्यर्थाङ्गीकारफलितमाह-**द्वयोरुक्तावित्यादि** ॥ ४ "अष्टन आ विभक्तौ" इत्यतः 'आ विभक्तौ' इति "युष्मदस्मदोः" इति च वर्ततेऽत आह-**एतयोरात्वमिति** ॥ ५ "युष्मदस्मदोः" "मपर्यन्तस्य" इति वर्ततेऽत आह-**अनयोरित्यादि** ॥ ६ एकवचनपदं युष्मदस्मदोरेव विशेषणम्, न विभक्तिविशेषणम् । तथा च 'त्वां मां वाऽतिक्रान्तौ-अतित्वाम्, अतिमाम्' इत्यादौ द्विवचनविभक्तावपि त्वमादेशोपपत्तिर्निर्बाधा । "युष्मदस्मदोः" "मपर्यन्तस्य" इति-

**द्वितीयायाञ्च ७।२।८७ ॥** अनयो[1]रात्स्यात् । त्वाम् । माम् । **शसो न ७।१।२८ ॥** आभ्यां[2] शसो न स्यात् । अमोऽपवादः ॥ आदेः परस्य । संयोगान्तलोपः । युष्मान् । अस्मान् ॥ **योऽचि ७।१।८९ ॥** अनयो[3]र्यकारादेशः स्यादनादेशेऽजादौ परतः । त्वया । मया ॥ **युष्मदस्मदोरनादेशे ७।२।८६ ॥** अनयो[4]रात्स्यादनादेशे हलादौ विभक्तौ । युवाभ्याम् । आवाभ्याम् । युष्माभिः । अस्माभिः ॥ **तुभ्यमह्यौ ङयि ७।२।९५ ॥** अनयो[5]र्मपर्यन्तस्य । टिलोपः । तुभ्यम् । मह्यम् ॥ **भ्यसोऽभ्यम् ७।१।३० ॥** आभ्यां[6] परस्य । युष्मभ्यम् । अस्मभ्यम् ॥ **एकवचनस्य च ७।१।३२ ॥** आभ्यां[7] ङसेरत् । त्वत् । मत् ॥ **पञ्चम्या अत् ७ । १ । ३१ ॥** आभ्यां[8] पञ्चम्या भ्यसोऽत्स्यात् । युष्मत् । अस्मत् ॥ **तवममौ ङसि ७।२।९६ ॥** अनयो[9]र्मपर्यन्तस्य तवममौ स्तो ङसि ॥ **युष्मदस्मद्भ्यां ङसोऽश् ७।१।२७ ॥** तव । मम । युवयोः । आवयोः ॥ **साम**

---

-वर्ततेऽत आह-**एकस्योक्तावित्यादि**॥ १ "अष्टनः-" इत्यतः 'आ विभक्तौ' इति "युष्मदस्मदोः" इति च वर्तते ॥ २ "युष्मदस्मद्भ्याम्" इति वर्ततेऽत आह-**आभ्यां शस** इति ॥ ३ "युष्मदस्मदोरनादेशे" इति वर्ततेऽत आह-**अनयोरित्यादि** ॥ ४ "अष्टनः-" इत्यतः 'आ विभक्तौ' इति, "रायो हलि" इत्यतो हलीति वर्तते । विशेषणे तदादिविधिरित्याह-**आदिति** ॥ ५ "युष्मदस्मदोः" "मपर्यन्तस्य" इति वर्ततेऽत आह-**अनयोरिति** ॥ ६ "युष्मदस्मद्भ्याम्" इति वर्ततेऽत आह-**आभ्यामिति** ॥ ७ युष्मदस्मद्भ्याम्" इति "पञ्चम्या अत्" इति च वर्तते । तत्फलितमाह-**आभ्यां ङसेरिति** ॥ ८ "युष्मदस्मद्भ्याम्" इति "भ्यसः-" इति च वर्ततेऽत आह-**आभ्यां पञ्चम्या** इति॥ ९ "युष्मदस्मदोः" "मपर्यन्तस्य"

**आकम् ७।१।३३ ॥** आभ्यां परस्य साम आकं स्यात् । युष्माकम् । अस्माकम् । त्वयि । मयि । युवयोः । आवयोः । युष्मासु । अस्मासु ॥ **युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ ८।१।२०॥** पदात्परयोरपादादौ स्थितयोः षष्ठ्यादिविशिष्टयोर्वां नौ इत्यादेशौ स्तः ॥ **बहुवचनस्य वस्नसौ ८।१।२१ ॥** उक्तविधयोरनयोः षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्तः॥ **तेमयावेकवचनस्य ८।१।२२ ॥** उक्तविधयोरनयोष्षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे एतौ स्तः॥**त्वामौ द्वितीयायाः ८।१।२३॥** द्वितीयैकवचनान्तयोस्त्वा मा इत्यादेशौ स्तः। "श्रीशस्त्वाऽवतु मापीह,

---

–इति वर्ततेऽत आह–**अनयोरिति** ॥१"युष्मदस्मद्भ्याम्"इति वर्तते ।"सामः" इति सकारः"गोतो णित्" इत्यत्र गकार इवाविवक्षितः। इत्यभिप्रेत्याह–**आभ्यामिति** ॥ २"पदस्य" "पदात्" "अनुदात्तं सर्वमपादादौ"इत्यधिक्रियन्तेऽत आह–**पदादिति** ॥ ३ "युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोः–" इति साधिकृतमनुवर्ततेऽत आह–**उक्तविधयोरिति** ॥ ४ "युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोः–" इति साधिकृतमनुवर्तते, तत्र द्वितीयैकवचने त्वामादेशाभ्यां तेमयादेशबाधनात्परिशेषादाह–**उक्तविधेति** ॥५"युष्मदस्मदोः" इति, "तेमयौ–" इत्यतः 'एकवचनस्य' इति वर्ततेऽत आह–**द्वितीयैकवचनेति** । 'उक्तविधयोरनयोः' इति तु कदापि न विस्मरणीयम् ॥ ६ विभक्तिक्रमक्लृप्तद्वितीयादिक्रमेणोदाहरति–**श्रीश** इति । त्वाम् , माम् , तुभ्यम्, मह्यम् , तव,मम, युवाम् , आवाम् , युवाभ्याम् आवाभ्याम् , युवयोः,आवयोः,युष्मान् , अस्मान् ,युष्मभ्यम् , अस्मभ्यम् , युष्माकम् , अस्माकम् , इति क्रमेणार्थः । पद्यान्तरं मुग्धबोधे–"दामोदरस्त्वावतु मापि मित्र !, ददातु ते मेऽपि मुदं मुकुन्दः । निहन्तु ते विष्णुरघानि मेऽपि, रक्षत्वसौ वामपि नौ मुरारिः ॥ ददातु वां नावपि शर्म कृष्णः करोतु वां श्री–

दद्यात्ते मेऽपि शर्म सः । स्वामी ते मेऽपि स हरिः, पातु वामपि नौ विभुः ॥ सुखं वां नौ ददात्वीशः, पतिर्वामपि नौ हरिः । सोऽव्याद्वो नः शिवं वो नो, दद्यात् सेव्योऽत्र वः स नः॥" (एकवाक्ये युष्मदस्मदादेशा वक्तव्याः) । ( एकतिङ् वाक्यम् ) ओदनं पच तव भविष्यति॥ (एते वान्नावादयोऽनन्वादेशे वा वक्तव्याः) । अन्वादेशे तु नित्यं स्युः। धाता ते भक्तोऽस्ति, धाता तव भक्तोऽस्ति वा । तस्मै ते नमं इत्येव ॥

---

–दयितो दयां नौ । पुष्णातु वो नोऽपि हरिर्धनं वो, ददातु नो हन्त्वशुभानि वो नः ॥" इति । पदादौ तु न, यथा–"तव ये शत्रवो राजन् ! मम तेऽप्यतिशात्रवः। तव मित्राणि यानि स्युर्मम मित्राणि तान्यपि ॥ रुद्रो विश्वेश्वरो देवो युष्माकं कुलदेवता । स एव नाथो भगवानस्माकं पापनाशनः॥"इति ॥१ निमित्तनिमित्तिनोरेकवाक्यस्थत्वे इत्यर्थकम् । **'एकवाक्ये'** इति प्रकृत्य विधेया इत्यर्थः॥ २ एकं तिङ् यस्मिन्निति बहुव्रीहिः । तिङ्पदं च तिङन्तार्थपरम् । तथाच एकतिङन्तार्थमुख्यविशेष्यकबोधजनकपदसमुदायो वाक्यमित्यर्थः । एवं च यत्र क्रियापदं न श्रूयते, तत्र "अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति" इति भाष्येण तिङन्तपदमध्याहार्यमेव । "पचादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्ति" इति भाष्यतः "पचति भवति" इत्यादावपि न वाक्यत्वव्याघातः । "ओदनं पच तव भविष्यति" इति वाक्ये तु "त्वत्कर्तृकम् ओदनकर्मकं प्रेरणाविषयः पचनम्" इति, "त्वत्स्वामिकम् ओदनकर्तृकं भवनम्" इति भिन्न एवार्थ इत्येकतिङन्तार्थमुख्यविशेष्यकबोधजनकत्वाभावान्नैकवाक्यत्वामेति तवेत्यस्य नादेशः।'शालीनाम्' इत्यस्य तु"शालिसम्बन्धि ओदनकर्मकं त्वत्सम्प्रदानकं मत्कर्तृकं दानम्" इत्येवम् एकतिङन्तार्थमुख्यविशेष्यकबोधजनकपदसमुदायत्वादेकवाक्यत्वमव्याहतमेवेति भावः ॥ ३ "यूयं वयं विनीतास्तत्, पातु वो नो महेश्वरः । यस्त्वं विश्वस्य जनकस्तस्मै ते विष्णवे नमः ॥" इति श्लोकोदाहरणं मुग्धबोधे ॥

सुपात्,सुपाद्।सुपादौ॥ **पादः पत्६।४।१३०॥** पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः। सुपदः। सुपदा। सुपाद्भ्याम्॥ अग्निमत्, अग्निमद्। अग्निमथौ। अग्निमथः॥ **अनिदितां हल उपधायाः क्ङिति६।४।२४॥** हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः किति ङिति। नुम्। संयोगान्तस्य लोपः। नस्य कुत्वेन ङः। प्राङ्। प्राञ्चौ। प्राञ्चः॥ **अचः६।४।१३८॥** लुप्तनकारस्याऽञ्चतेर्भस्याकारस्य लोपः॥ **चौ ६।३।१३८॥** लुप्ताकारनकारेऽञ्चतौ परे पूर्वस्याणो दीर्घः। प्राचः। प्राचा। प्राग्भ्याम्॥ प्रत्यङ्। प्रत्यञ्चौ। प्रतीचः। प्रत्यग्भ्याम्॥ उदङ्। उदञ्चौ॥ **उद ईत् ६।४।१३९॥** उच्छब्दात्परस्य लुप्तनकारस्याञ्चतेर्भस्याकारस्य ईत्। उदीचः। उदीचा।

---

१ "अङ्गस्य" "भस्य" इत्यधिक्रियेते। 'निर्दिश्यमानस्यादेशा भवन्ति' इति परिभाषालब्धमर्थमाह-**पाच्छब्दान्तमित्यादि**॥ २ "अङ्गस्य" इत्यधिक्रियते। "श्नान्नलोपः" इत्यतः 'नलोप' इति वर्तते, विशेषणे तदन्तविधिरत आह-**हलन्तानामित्यादि**॥ ३ इत्संज्ञेकारवद्भिन्नानामित्यर्थः॥ ४ अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽञ्चतिस्तस्याकारस्य लोपः, इति वास्तविकः सूत्रार्थः॥५"अङ्गस्य" "भस्य" इत्यधिक्रियेते। "अल्लोपोऽनः" इत्यतः 'अल्लोपः' इति वर्तते। अच्शब्देन लुप्तनकाराञ्चतेरेव ग्रहणं व्याख्यानादित्यभिप्रेत्याह-**लुप्तनकारेति**॥ ६ "ढ्रलोपे-" इत्यतः 'पूर्वस्य दीर्घोऽणः' इति वर्तते। चिशब्देन लुप्ताकारनकारस्याञ्चतेरेव ग्रहणं व्याख्यानादित्यभिप्रेत्याह-**लुप्ताकारनकारे** इति॥ ७ "भस्य" इत्यधिक्रियते। "अचः" इति वर्ततेऽत आह-**लुप्तनकारेति**॥

उदग्भ्याम् ॥ **समः समि** ६।३।९३ ॥ वप्रत्ययान्तेऽञ्चतौ[1] । सम्यङ् । सम्यञ्चौ ॥ समीचः। सम्यग्भ्याम् ॥ **सहस्य सध्रिः** ६।३।९५॥ तथा[2] । सध्र्यङ् ॥ **तिरसस्तिर्यलोपे** ६।३।९४ ॥ अलुप्ताकारेऽञ्चतौ[3] व-प्रत्ययान्ते तिरसस्तिर्यादेशः । तिर्यङ् । तिर्यञ्चौ । तिरश्चः । तिर्यग्भ्याम् ॥ **नाञ्चेः पूजायाम्** ६।३।३० ॥ पूजार्थस्याञ्चतेरुपधाया नस्य[4] लोपो न । प्राङ् । प्राञ्चौ । नलोपाभावादलोपो[5] न । प्राञ्चः । प्राङ्भ्याम् । प्राङ्क्षु[6] ॥ एवं पूजार्थे प्रत्यङ्ङादयः ॥ क्रुङ् । क्रुञ्चौ[7] । क्रुङ्भ्याम् ॥ पयोमुक्, पयोमुग् । पयोमुचौ । पयोमुग्भ्याम् ॥ उगित्त्वान्नुम् (मि)—**सान्त महतः संयोगस्य** ६ । ४ । १० ॥

---

१ "विष्वग्देवयोश्च टेरद्रि–" इत्यतः 'अञ्चतावप्रत्यये' इति वर्तते॒ऽत आह–**वप्रत्ययान्तेति** ॥ २ 'अञ्चतावप्रत्यये' इति वर्तते॒ऽत आह–**तथेति** ॥ ३ "तिर्यच्यपवर्गे" इति निर्देशाद्–लुप्यत इति लोपः । स चासावश्चेति लोपो लुप्ताकारः । न लोपो यस्मिन् सोऽलोपः–अलुप्ताकारः तस्मिन्नित्यर्थः ॥ इत्यभिप्रेत्याह–**अलुप्ताकार** इति ॥ ४ "अनिदितां हल उपधायाः–" इति वर्तते॒ऽत आह–**पूजार्थस्येति** ॥ ५ "अचः" इति लुप्तनकाराञ्चतेरेव ग्रहणे फलमाह–**अलोपो नेति** ॥ ६ 'ङ्णोः कुक्टुक्'–इति वा कुक् । 'चयो द्वितीयाः'–इति पक्षे खकारोऽपि बोध्यः ॥ ७ चकारसंनिधौ "चोः कुः" इति झल्निमित्तककुत्वमपि 'बाधकान्येव निपातनानि' इति न प्रवर्तते । पदान्तनिमित्तकं कुत्वं तु भवत्येव । "क्विन्प्रत्ययस्य–" इत्यस्य झल्निमित्तकत्वाभावेन बाधकविषयत्वाभावात् ॥ ८ 'वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च' इत्युणादिसूत्रे 'शतृवत्' इत्यतिदेशादिति भावः ॥

सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने । महान् । महान्तौ । महान्तः । हे महन् । महद्भ्याम् ॥
**अत्वसन्तस्य चाधातोः ६।४।१४ ॥** अत्वन्तस्योपधाया दीर्घो धातुभिन्नासन्तस्य चासंबुद्धौ सौ परे । उगित्त्वान्नुम् । **धीमान्** । धीमन्तौ । धीमन्तः । हे धीमन् । शसादौ महद्वत् । भातेर्डवतुः । डित्त्वसामर्थ्यादभस्यापि टेर्लोपः । भवान् । भवन्तौ । भवन्तः । शत्रन्तस्य भवन् ॥ **उभे अभ्यस्तम् ६ । १ । ५ ॥** षाष्ठद्वित्वप्रकरणे

---

१ "ढ्रलोपे–" इत्यतो 'दीर्घः' इति, "नोपधायाः" इति, "सर्वनामस्थाने चासम्बुद्धौ" इति वर्तन्ते । 'सान्त' इति लुप्तषष्ठ्यन्तं संयोगस्य विशेषणम् । महतः 'संयोगस्य' इति वैयधिकरण्येन । 'न' इति लुप्तषष्ठ्यन्तस्य विशेषणम् । तच्च 'उपधायाः' इत्यत्र वैयधिकरण्येन विशेषणमित्यभिप्रेत्याह–**सान्तसंयोगेति** ॥ २ तस्योपधायाः=तत्पूर्वस्येत्यर्थः । उपधाग्रहणं पूर्वत्वमात्रस्योपलक्षणम् । पारिभाषिकार्थस्येहासंभवादिति बोध्यम् ॥ ३ 'अतु' इति लुप्तषष्ठ्यन्तं पृथक् पदम् । 'अधातोः' इति च 'अनन्तरस्य प्रतिषेधः' इति परिभाषया 'असन्तस्य' इत्यस्यैव विशेषणम् । "सौ च" इत्यतः 'सौ' इति "सर्वनामस्थाने च–" इत्यतः 'असम्बुद्धौ' इति, "नोपधायाः" इत्यतः 'उपधायाः' इति, "ढ्रलोपे–" इत्यतः 'दीर्घः' इति वर्तन्तेऽत आह–**अत्वन्तस्योपधेति** ॥ नुमि कृते अत्वन्तोपधायामचोऽसम्भवात्सूत्रवैयर्थ्यापत्त्या पूर्वं दीर्घे नुम् भवतीति भावः ॥ ४ धात्ववयवभिन्नो योऽस् तदन्तस्येत्यर्थः। तेन 'उखास्रत्, पर्णध्वत्' इत्यादि सिद्धम् ॥ ५ ननु 'यचि भम्' इति प्रातिपदिकस्य भसंज्ञाविधानाद्धातोस्तदभावेन 'टेः' इति कथं प्रवर्तत इत्यत आह–**सामर्थ्यादिति** । सति गमके टेरिति भं विनापि प्रवर्तत इति भावः ।

ये द्वे विहिते ते[1] उभे समुदिते अभ्यस्तसंज्ञे स्तः ॥ **नाभ्यस्ताच्छतुः ७।१।७८ ॥** अभ्यस्तात्परस्य शतुर्नुम्[2] न । ददत्, ददद् । ददतौ । ददतः ॥ **जक्षित्यादयः षट् ६।१।६ ॥** षड्[3] धातवोऽन्ये जक्षितिश्च सप्तम एते अभ्यस्तसंज्ञाः[4] स्युः । जक्षत्, जक्षद् । जक्षतौ । जक्षतः ॥ एवं जाग्रत् । दरिद्रत् । शासत् । चकासत् । गुप्, गुब् । गुपौ । गुपः । गुब्भ्याम् ॥ **त्यदादिषु दृशोऽनालोचने कञ्च ३।२।६० ॥** त्यदादिषूपपदेष्वज्ञानार्थदृशेः कञ् चात्[5] क्विन् । **आ सर्वनाम्नः ६।३।९१ ॥** सर्वनाम्न आकारोऽन्तादेशः स्याद् दृग्[6]-दृशवतुषु । ताँदृक्, तादृग् । तादृशौ । तादृशः । तादृग्भ्याम् ॥ **व्रश्चेति** षः । जश्त्वचर्त्वे । विट्, विड् । विशौ । विशः । **विड्भ्याम्[7] ॥** **नशेर्वा ८।२।६३ ॥** नशेः कवर्गो[8]ऽन्तादेशो वा पदान्ते । **नक्[9]**, नग् । नट्, नड् । नशौ । नशः । नग्भ्याम्, नड्भ्याम् ॥ **स्पृशोऽ-**

---

१ "एकाचो द्वे प्रथमस्य" इत्यतः 'द्वे' इति वर्तमानेऽपि 'उभे' ग्रहणसामर्थ्यात् लब्धमर्थमाह-**ते उभे समुदिते** इति ॥ २ "इदितो नुम्-" इत्यतः 'नुम्' इति वर्तते‍ऽत आह-**नुम् नेति** ॥ ३ "उभे अभ्यस्तम्" इत्यतः 'अभ्यस्तम्' इति वर्तते । अतद्गुणसंविज्ञानबहुव्रीहिफलमाह-**षड् धातवोऽन्य** इति ॥ ४ "जक्षि-जागृ-दरिद्रा-शास्-दीधीङ्-वेवीङ्-चकास्तथा । अभ्यस्तसंज्ञा विज्ञेया धातवो मुनिभाषिताः॥" इति ॥ ५ "स्पृशोऽनुदके-" इत्यतः 'क्विन्' इति वर्तते‍ऽत आह-**चात् क्विन्निति** ॥ ६ "दृग्दृशवतुषु" इति वर्तते ॥ ७ कुत्वस्यासिद्धत्वाद् 'व्रश्च'-इति षः । तस्य जश्त्वेन डः । तस्य कुत्वेन गः । तस्य चर्त्वेन पक्षे कः ॥ ८ "पदस्य" इत्यधिक्रियते । "क्विन्प्रत्ययस्य-" इत्यतः 'कु' इति वर्तते‍ऽत आह-**कवर्ग** इति ॥ ९ षड्मकाः प्राग्वत् ॥

**नुदके क्विन् ३।२।५८** ॥ अनुदके सुप्युपपदे स्पृशेः क्विन् । घृतस्पृक्, घृतस्पृग् । घृतस्पृशौ । घृतस्पृशः ॥ दधृक्, दधृग् । दधृषौ । दधृग्भ्याम् ॥ रत्नमुषौ । रत्नमुड्भ्याम् ॥ षट्, षड् । षड्भिः। षड्भ्यः । षण्णाम्[1] । षट्सु[2] ॥ रुत्वं प्रति षत्वस्यासिद्धत्वात्ससजुषोरुरिति रुत्वम्॥

**र्वोरुपधाया दीर्घ इकः ८।२।७६** ॥ रेफवान्तयोर्धात्वोरुपधाया इको दीर्घः पदान्ते[3] । पिपठीः । पिपठिषौ । पिपठीर्भ्याम् ॥

**नुम्विसर्जनीयशर्व्यवायेऽपि ८।३।५८** ॥ एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य सस्य मूर्धन्यादेशः[4][5] । ष्टुत्वेन पूर्वस्य षः[6]। पिपठीष्षु, पिपठीःषु ॥ चिकीः । चिकीर्षौ । चिकीर्भ्याम् । चिकीर्षु[7]॥ विद्वान् । विद्वांसौ । हे विद्वन् ॥ **वसोः सम्प्रसारणम् ६।४।१३१**॥ वस्वन्तस्य भस्य[8] सम्प्रसारणं स्यात् । विदुषः । वसुस्रंस्विति दः ।

---

१ 'षट्चतुर्भ्यश्च' इति नुट् । 'अनाम्' इति पर्युदासान्न ष्टुत्वनिषेधः । 'यरोऽनुनासिके–' इति विकल्पं बाधित्वा 'प्रत्यये भाषायां नित्यम्' इति वचनान्नित्यमनुनासिकः ॥ २ अत्र 'ङः सि धुट्' इति धुड् बोध्यः ॥ ३ "पदस्य" इत्यधिकृतम् । "स्कोः संयोगाद्यो–" इत्यतः 'अन्ते' इति वर्तते । "सिपि धातोः" इत्यतः 'धातोः' इति च तद्विशेषणत्वेन तदन्तविधिरित्याह–**रेफवान्तयोरिति** ॥ ४ नुम्ग्रहणं नुम्स्थानिकानुस्वारोपलक्षणम् । तेनेह न–पुंसु । इदमधिकारसूत्रम्, आदेशविधायकं तु एतदेकवाक्यतया 'आदेशप्रत्यययोः' इति सूत्रमेव । तेन निंस्स्वेत्यत्र धातोः सस्य नानेन षत्वम् ॥ ५ "अपदान्तस्य मूर्धन्यः" 'इण्कोः' इति वर्तते "सहेः साडः सः" इत्यतः 'सः' इति चात आह–**इण्कुभ्यामिति** ॥ ६ सनोऽकारलोपं प्रति षत्वस्यासिद्धत्वेनाकारलोपे सस्य पदान्तत्वेन "अपदान्तस्य–"इति निषेधात्षत्वाप्राप्त्या 'ष्टुत्वेन' इत्यावश्यकम् ॥ ७ 'रोः सुपि' इति नियमान्न विसर्गः ॥ ८ "भस्य" इत्यधिक्रियते ॥

विद्वद्भ्याम् ॥ **पुंसोऽसुङ् ७।१।८९॥** सर्वनामस्थाने[1] विवक्षितेऽसुङ् स्यात्। पुमान्। हे पुंमन्[2]। पुमांसौ। पुंसः। पुम्भ्याम्। पुंसु[3] ॥ ऋदुशने-त्यनङ् । उशना। उशनसौ। (अस्य संबुद्धौ वानङ्, नलोपश्च वा वाच्यः)। हे उशन, हे उशनन्, हे उशनः। हे उशनसौ। उशनोभ्याम्। उश-नस्सु ॥ अनेहा। अनेहसौ। हे अनेहः ॥ वेधाः[4]। वेधसौ। हे वेधः। वेधोभ्याम् ॥ **अदस औ सुलोपश्च ७।२।१०७॥** अदस औत्स्यात्सौ[5] परे सुलोपश्च। तदोरिति सः। असौ । त्यदाद्यत्वम्। पररूपत्वम्। वृद्धिः। **अदसोऽसेर्दादु दो मः ८।२।८०॥** अदसोऽसान्तस्य दात्परस्य उदूतौ[6], दस्य मश्च। आन्तरतम्याद्[7]ध्रस्वस्य उः, दीर्घस्य ऊः। अमू। जसः शी। गुणः। **एत ईद्बहुवचने ८।२।८१॥** अदसो[8] दात्परस्यैत ईद्दस्य च मो बह्वर्थोक्तौ[9]। अमी।

---

१ "इतोऽत् सर्वनामस्थाने" इत्यतः 'सर्वनामस्थाने' इति वर्तते। तच्च विवक्षित-मेव ग्राह्यम्, न तु परत्वविशिष्टम्, व्याख्यानात् इत्याह-**सर्वनामस्थाने विव-क्षित इति** ॥ २ 'असम्बुद्धौ-'इत्युक्तेः 'सान्त'-इति न दीर्घः ॥ ३ संयोगान्त-लोपे 'मोऽनुस्वारः'। नुम्स्थानिकस्यैवानुस्वारस्योपलक्षणात् 'नुम् विसर्जनीय-' इति न षत्वम् । ४ "अत्वसन्तस्य-" इति असन्तत्वाद्दीर्घे रुत्वविसर्गौ ॥ ५ "तदोः सः सौ-" इत्यतः 'सौ' इति वर्तते ॥ ६ 'भाव्यमानोऽप्युकारः सवर्णा-न्गृह्णाति' इति परिभाषालभ्यमर्थमाह-**उदूताविति** ॥ ७ प्रमाणकृतसादृश्याद् ह्रस्वस्य ह्रस्व उकारो, दीर्घस्य दीर्घ ऊकार इत्यर्थः ॥ ८ "अदसोऽसेर्दादु दो मः" इति सूत्रम् उकाररहितमनुवर्ततेऽत आह-**अदसो दादिति** ॥ ९ बहुवचनशब्दो यौगिक इत्याह-**बह्वर्थेति**। परिभाषितस्य ग्रहणे तु अमीभिरित्यादावेव स्यात्। तत्पर-कत्वात्। न तु 'अमी' इत्यत्र एकादेशे कृते दात्परैकारस्य, बहुवचनपरत्वासम्भवात् ॥

पूर्वत्रासिद्धमिति विभक्तिकार्यं[1] प्राक् पश्चादुत्वमत्वे । अमुम् । अमू । अमून् । मुत्वे[2] कृते घिसंज्ञायां नाभावः ॥ **न मु ने[3] ८।२।३ ॥** नाभावे कर्तव्ये कृते च मुभावो नासिद्धः । अमुना । अमूभ्याम् ३ । अमीभिः । अमुष्मै । अमीभ्यः २ । अमुष्मात् । अमुष्य । अमुयोः २ । अमीषाम् । अमुष्मिन् । अमीषु ॥

इति हलन्तपुँल्लिङ्गाः ।

---

अथ हलन्तस्त्रीलिङ्गाः ।

**नहो धः ८।२।३४ ॥** नहो हस्य धः स्यात् झलि[4] पदान्ते च ॥ **नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ६।३।११६ ॥** क्विबन्तेषु पूर्वपदस्य दीर्घः[5] । उपानत्, उपानद् । उपानहौ । उपानत्सु ॥

---

१ विभक्तिनिमित्तकम् 'अमि पूर्वः' इत्यादिकमित्यर्थः ॥ २ **मु** च उत्वं चानयोः समाहारः । उत्वे मत्वे च कृते घिसंज्ञा भवति, तस्यां च सत्याम् आङो नेत्यर्थः । ननु मुत्वस्यासिद्धत्वात्कथं नाभाव इत्यत आह—**न मु ने** इति । कृते नेत्युक्तेर्मुत्वे 'सुपि च' इति दीर्घो न । सन्निपातपरिभाषया तु न दीर्घव्यावृत्तिः । 'सुपि च' इति दीर्घे कर्तव्ये सन्निपातपरिभाषाया अप्रवृत्तेरित्यन्यत्र विस्तरः ॥ ३ 'पूर्वत्रासिद्धमिति विभक्तिकार्यं प्राक् पश्चादुत्वमत्वे' इति पूर्वोक्तेन विरुद्धम् । 'मुत्वे कृते घिसंज्ञायां नाभावः' इति कथमुक्तम् ? अतो विरुद्धकथने प्रमाणमुपन्यस्यति—**न मु ने** इति ॥ ४ "झलो झलि" इत्यतः 'झलि' इति वर्तते, "स्कोः संयोगाद्योः—" इत्यतः 'अन्ते' इति च । तच्च 'पदस्य' इत्यधिकृतेऽन्वेति इत्याह—**झलि पदान्ते चेति** ॥ " हो ढः" इत्यस्यापवादोऽयम् ॥ ५ 'ढ्रलोपे—' इत्यतः 'पूर्वस्य दीर्घोऽणः' इति वर्तते । क्वौ इति तु विशेषणम् । अतो विशेषणे—

क्विन्नन्तत्वात् कुत्वेन घः। उष्णिक् ,उष्णिग् । उष्णिहौ ।उष्णिग्भ्याम्॥ द्यौः । दिवौ । दिवः । द्युभ्याम् ॥ गीः । गिरौ । गिरः ॥ एवं पूः ॥ चतस्रः । चतसृणाम् ॥ का । के । काः । सर्वावत् ॥ **यः सौ ७।२।११०॥** इदमो दस्य यः । इयम् । त्यदाद्यत्वम् । पररूपत्वम् । टाप् । दश्चेति मः । इमे । इमाः । इमाम् । अनया । हलि लोपः । आभ्याम् । आभिः । अस्यै । अस्याः । अनयोः । आसाम् । अस्याम् । आसु ॥ त्यदाद्यत्वम् । टाप् । स्या । त्ये । त्याः ॥ एवं तद् , एतद्॥ वाक्, वाग् । वाचौ । वाग्भ्याम् । वाक्षु ॥ अप्शब्दो नित्यं बहुवचनान्तः । अप्तृन्निति दीर्घः । आपः । अपः ॥ **अपो भि ७।४।४८॥** अपस्तकारो भादौ प्रत्यये । अद्भिः।अद्भ्यः । अद्भ्यः । अपाम् ।अप्सु ॥ दिक्, दिग् । दिशौ । दिशः । दिग्भ्याम् । त्यदादिष्विति दृशेः क्विन्विधानादन्यत्रापि कुत्वम् । दृक्, दृग् । दृशौ । दृग्भ्याम् । त्विट्,

---

–तदन्तविधिरित्याह–**क्विबन्तेष्वित्यादि** ॥ १ "दिव औत्" इत्यौत्त्वम् , यण् ॥ २ **चतस्र** इति । परत्वादामं बाधित्वा चतस्रादेशे सकृद्गतिन्यायात्पुनराम् नेति बोध्यम् ॥ ३ सर्वाशब्दवदित्यर्थः । शब्दपरनिर्देशेन संज्ञाभूतस्यैव सर्वार्थवाचकत्वाभावान्न सर्वनामसंज्ञेति । 'सर्वनाम्नो वृत्तिमात्रे'–इति पुंवत्त्वाभावः ॥ ४ "इदमो मः" इत्यतः 'इदमः' इति, "दश्च" इत्यतः 'दः' इति च वर्तते़ऽत आह–**इदम** इत्यादि ॥ ५ "आपस्तथाऽसवो वर्षाः सिकताश्च दाराः समाः । लाज–दार–गृह–प्राणाबहुत्वभागिनः सदा" ॥ ६ "अच उपसर्गात्तः" इति सूत्रात् 'तः' इति वर्तते, अङ्गाधिकारलब्धप्रत्ययविशेषणे तदादिविधिरत आह–**तकार** इत्यादि ॥ ७ क्विन्नन्तत्वात्कुत्वम् । षडगकाः प्रागुवत् ॥ ८ "क्विन्प्रत्ययस्य" इत्यत्र बहुव्रीहिस्वीकारफलमाह–**त्यदादिष्वितीति** ॥ ९ त्यदाद्युपपदत्वाभावे–

त्विड् । त्विषौ । त्विड्भ्याम् ॥ ससजुषोरुरिति रुत्वम् । सजूः । सजुषौ । सजूर्भ्याम् ॥ आशीः । आशिषौ । आशीर्भ्याम् ॥ असौ । उत्वमत्वे । अमू । अमूः । अमुया । अमूभ्याम् ३ । अमूभिः । अमुष्यै । अमूभ्यः २ । अमुष्याः । अमुयोः २ । अमूषाम् । अमुष्याम् । अमूषु ॥

इति हलन्तस्त्रीलिङ्गाः ।

---

## अथ हलन्तनपुंसकलिङ्गाः ।

स्वमोर्लुक् । दत्वम् । स्वनडुत्, स्वनडुद् । स्वनडुही । चतुरनडुहोरित्याम् । स्वनड्वांहि । पुनस्तद्वत् । शेषं पुंवत् ॥ वाः । वारी । वारि । वार्भ्याम् ॥ चत्वारि ॥ किम् । के । कानि ॥ इदम् । इमे । इमानि ॥ ( अन्वादेशे नपुंसके वा एनद्वक्तव्यः ) । एनत् । एने । एनानि । एनेन । एनयोः २ ॥ अहः । ( संबुद्धौ नपुंसकानां नलोपो वा वाच्यः) । हे अहन्, हे अहः । विभाषा ङिश्योः । अह्नी ।

---

–ऽपीत्यर्थः ॥ १ षत्वस्यासिद्धत्वाद्रुत्वम् ॥ २ त्यदाद्यत्वे टाप्, औङः शी । इत्यादिः । ३ अदन्तत्वाभावादेत्वाभावेन 'एत ईत्–' इत्यस्याभावे मूत्वमेव । ४ "वसुस्रंसु–" इत्यस्य पदाधिकारस्थत्वात्तदन्तेऽपि प्रवृत्तिरिति भावः ॥ ५ अझलन्तत्वान्न नुम् ॥ ६ न लुमतेति कादेशो न ॥ ७ इदंशब्दे "यः सौ" इति न ॥ ८ 'द्वितीयाटौस्सु' इति अत्र सम्बध्यते । अयं च सामर्थ्याल्लुका लुप्तेऽपि भवति । एनादेशोऽपि 'एनम्' इत्यादिसिद्ध्यर्थं वक्तव्यः । अत्र वदन्ति नपुंसकैकवचनार्थमेवेदं वार्तिकम् । अन्यत्रैनादेशेनैव सिद्धेरिति । अभियुक्ताश्चाहुः–"अन्वा–

अह्नी । अहानि ॥ **अहन् ८।२।६८ ॥** अहन्नित्यस्य रुः पदान्ते । अहोभ्याम् ॥ दण्डि । दण्डिनी । दण्डीनि । दण्डिना । दण्डिभ्याम् ॥ सुपथि । टेर्लोपः । सुपथी । सुपन्थानि ॥ ऊर्क्, ऊर्ग् । ऊर्जी । ऊर्न्जि । नरजानां संयोगः ॥ तत् । ते । तानि ॥ यत् । ये । यानि ॥ एतत् । एते । एतानि ॥ गवाक्, गवाग् । गोची । गवाञ्चि । पुनस्तद्वत् । गोचा । गवाग्भ्याम् । शकृत् । शकृती । शकृन्ति ॥ ददत् ॥ **वा नपुंसकस्य ७।१।७९ ॥** अभ्यस्तात्परो यः शता तदन्तस्य क्लीबस्य वा नुम् सर्वनामस्थाने । ददन्ति, ददति ॥ तुदत् ॥ **आच्छीनद्योर्नुम् ७।१।८० ॥** अवर्णान्तादङ्गात्परो यः

---

–देशे द्वितीयाटौस्–स्वेनः स्यादिदमेतदोः । एनद् वा स्याद् द्वितीयैकवचने तु नपुंसके ॥" इति ॥ १ "ससजुषोः–" इत्यतः 'रुः' इति वर्तते 'पदस्य' 'अन्ते' इति चात आह–**रुरित्यादि** ॥ २ आत्वं नपुंसके न भवति, 'न लुमता'–इति प्रत्ययलक्षणनिषेधात् । सम्बुद्धौ–हे सुपथिन् हे सुपथि । 'नलोपः सुप्स्वर–' इति नलोपस्यासिद्धत्वाद्ध्रस्वस्य गुणो न । ३ 'रात्सस्य' इति नियमान्न संयोगान्तलोपः । ४ श्चुत्वभ्रमं वारयति–**नरेति** । रेफेण व्यवधानान्न श्चुत्वप्रसक्तिरिति भावः ॥

५ "गवाक्शब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः ॥
असन्ध्यवङ्पूर्वरूपैर्नवाधिकशतं मतम् ॥ १ ॥
स्वमुसुप्सु नव षड् भादौ षट्के स्युस्त्रीणि जश्शसोः ॥
चत्वारि शेषे दशके रूपाणीति विभावय ॥ २ ॥"

६ "नाभ्यस्ताच्छतुः" इति वर्तते । तथा च "नाभ्यस्ताच्छतुः" इति निषेधः सर्वनामस्थाननिमित्तकस्य नुम एवेति तस्यैव निषेधस्य विकल्पे विधिविकल्प एव पर्यवस्यतीति फलितमाह–**वा नुमिति** ॥

शतुरवयवस्तदन्तस्य नुम् वा शीनद्योः । तुदन्ती, तुदती । तुदन्ति ॥ **शप्श्यनोर्नित्यम् ७ । १ । ८१ ॥** शप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य नित्यं नुम् शीनद्योः । पचन्ती । पचन्ति ॥ दीव्यत् । दीव्यन्ती । दीव्यन्ति ॥ धनुः । धनुषी । सान्तेति दीर्घः । नुम्विसर्जनीयेति षः । धनूंषि । धनुषा । धनुर्भ्याम् ॥ एवं चक्षुर्हविरादयः ॥ पयः । पयसी । पयांसि । पयसा । पयोभ्याम् ॥ सुपुम् । सुपुंसी ॥ सुपुमांसि ॥ अदः । विभक्तिकार्यम् । उत्वमत्वे । अमू । अमूनि । शेषं पुंवत् ॥

इति हलन्तनपुंसकलिङ्गाः ॥

---

## अथाव्ययानि ।

**स्वरादिनिपातमव्ययम् १।१।३७॥** स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः । स्वर् । अन्तर् । प्रातर् । पुनर् । सनुतर् । उच्चैस् । नीचैस् । शनैस् । ऋधक् । ऋते । युगपत् । आरात् । पृथक् । ह्यस् । श्वस् । दिवा । रात्रौ । सायम् । चिरम् । मनाक् ।

---

१ "नाभ्यस्ताद्" इत्यतः 'शतुः' इति वर्तते "वा नपुंसकस्य" इति चेत्याह–**शतुरवयव** इति ॥ २ "आच्छीनद्योर्नुम्" इति 'शतुः' इति च वर्ततेऽत आह–**आत परो यः शतुरवयव** इति ॥ परो यः शतेति नोक्तम् । तुदादेः शस्य शत्राकारेण सहैकादेशे कृते उभयत आश्रयणेऽन्तादिवद्भावाभावेन नुमभावापत्तेः ॥ ३ पचन्तीत्यादिबहुवचने 'नपुंसकस्य झलचः' इति नुम् ॥ ४ रेफान्तस्याधातुत्वाद् 'र्वोः'–इति दीर्घाभावः ॥ ५ सामान्यतः षड्विभागा अव्ययानाम्–( १ ) स्वरादिगणपठितः ( २ ) अद्रव्यार्थकनिपातः (३) उपसर्गः (४) तद्धितान्तः (५) कृदन्तः ( ६ ) अव्ययीभावसमासश्चेति ॥

ईषत् । जोषम् । तूष्णीम् । बहिस् । अवस् । अधस् । समया । निकषा । स्वयम् । वृथा । नक्तम् । न । नञ् । हेतौ । इद्धा । अद्धा । सामि । वत् । ब्राह्मणवत् । क्षत्रियवत्[1] ॥ सना । उपधा । सनत् । सनात् । तिरस् । अन्तरा । अन्तरेण । ज्योक् । कम् । शम् । सहसा । विना । नाना । स्वस्ति । स्वधा । अलम् । वषट् । श्रौषट् । वौषट् । अन्यत् । अस्ति । उपांशु । क्षमा । विहायसा । दोषा । मृषा । मिथ्या । मुधा । पुरा । मिथो । मिथस् । प्रायस् । मुहुस् । प्रवाहुकम् । प्रवाहिका । आर्यहलम् । अभीक्ष्णम् ॥ साकम् । सार्धम् । नमस् । हिरुक् । धिक् । अथ । अम् । आम् । प्रताम् । प्रशान् । मा । माङ् ॥ आकृतिगणोऽयम् ॥ च । वा । ह । अह । एव । एवम् । नूनम् । शश्वत् । युगपत् । भूयस् । कूपत् । सूपत् । कुवित् । नेत् । चेत् । चण् । यत्र । कच्चित् । नह । हन्त । माकीम् । नकीम् । नकिः । माङ् । नञ् । यावत् । तावत् । त्वै । न्वै । द्वै । रै । श्रौषट् । वौषट् । स्वाहा । स्वधा । वषट् । तुम् । तथाहि । खलु । किल । अथो । अथ । सुष्ठु । स्म । आदह । ( उपसर्गविभक्तिस्वरप्रतिरूपकाश्च[2] ) । अवदत्तम्[3] । अहंयुः[4] । अस्ति[5]-

---

१ वत्प्रत्ययान्तः स्वरादिगणसन्निविष्टो वेदितव्य इत्यर्थः ॥ २ प्रतिरूपकत्वं= सादृश्यम् । तच्च विनिगमनाविरहादर्थतः शब्दतश्च गृह्यते । शब्दत एव सादृश्य-विवक्षायां विप्रशब्दावयव 'प्र' शब्दस्याप्यव्ययत्वं स्यात् । अर्थत एव सादृश्यस्य ग्रहणे तु आराच्छब्दसमानार्थकस्य समीपशब्दस्यापि स्यादित्युभयोर्ग्रहणम् । स्वरांशे तु न, अर्थतोऽसम्भवात् ॥ ३ अवदत्तमिति ॥ इह 'अव' इत्यस्यानुपसर्गत्वात् 'अच उपसर्गात्तः' इति न भवति ॥ ४ अहंयुरिति ॥ अहमिति सुबन्तप्रतिरूपकमहंकारे सुबन्तत्वे तु मद्युरिति स्यात् ॥ ५ अस्तीति ॥ तिङन्तत्वे-

क्षीरा । अ । आ । इ । ई । उ । ऊ । ए । ऐ । ओ । औ । पशु । शुकम् । यथाकथाच । पाट् । प्याट् । अङ्ग । है । हे । भोः । अये । द्य । विषु । एकपदे । युत् । आतः ॥ चादिरप्याकृतिगणः ॥ तसिलादयः[2] प्राक् पाशपः । शस्प्रभृतयः[3] प्राक् समासान्तेभ्यः । अम् । आम् । कृत्वोऽर्थाः[4] । तसिवती । नानाञौ । एत-दन्तमप्यव्ययम् ॥ **कृन्मेजन्तः १ । १ । ३९ ॥** कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यात् । स्मारंस्मारम् । जीवसे । पिबध्यै ॥ **क्त्वातोसुन्कसुनः १ । १ । ४० ॥** एतदन्तमव्य-यम् । कृत्वा । उदेतोः । विसृपः ॥ **अव्ययीभावश्च[7] १।१।४१ ॥** अधिहरि ॥ **अव्ययादाप्सुपः २।४।८२ ॥** अव्ययाद्विहितस्यापः सुपश्च लुक्[8] । तत्र शालायाम् । "सदृशं त्रिषु लिङ्गेषु सर्वासु च विभ-क्तिषु ॥ वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ १ ॥ वष्टि

---

–नु बहुव्रीहिसमासो न स्यादिति भावः॥ १ स्वरप्रतिरूपकानाह–अ–इत्यादिना ॥ २ 'पञ्चम्यास्तसिल्' इति विहितो यस्तसिल् तदादयः 'याप्ये पाशप्' इति विहितपाशप्प्रत्ययपर्यन्ताः ॥ ३ 'बह्वल्पार्थात्–' इति विहितो यः 'शस्' तदादयः 'समासान्ताः' इति सूत्रपर्यन्ताः ॥ ४ 'संख्यायाः–' इति विहिताः कृत्वसुजादय-श्चयः ॥ ५ "स्वरादिनिपातम्–" इत्यतः 'अव्ययम्' इति वर्तते । केवलकृतः प्रयोगानर्हत्वात् 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं न' इति परिभाषा न प्रवर्तते इत्याह–**तदन्तमिति** ॥ ६ उक्तां रीतिमनुसृत्याह–**एतदन्तमिति** ॥ ७ "स्वरादिनिपातम्" इत्यतः 'अव्ययम्' इति वर्तते ॥ ८ "ण्यक्षत्रिया-र्षञितः" इत्यतो 'लुग्' इति वर्तते ॥ ९ यत् शब्दस्वरूपं न व्येति न व्ययं–

भागुरिरल्लोपमवाप्योरुपसर्गयोः ॥ आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥ २ ॥" वगाहः, अवगाहः । पिधानम्, अपिधानम् ॥

इत्यव्ययानि ॥

---

अथ तिङन्तम् । तत्रादौ भ्वादयः ।

लट् लिट् लुट् लृट् लेट् लोट् लङ् लिङ् लुङ् लृङ् । एषु पञ्चमो लकार श्छन्दोमात्रगोचरः॥ **लः कर्मणि च भावे चाकर्मकेभ्यः ३।४। ६९॥** लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युरकर्मकेभ्यो भावे कर्तरि च ॥ **वर्तमाने लट् ३।२।१२३॥** वर्तमानक्रियावृत्तेर्धातोर्लट् स्यात् ॥

---

–प्राप्नोति तदव्ययम् । कीदृश तत्, त्रिषु लिङ्गेषु सदृशम्=एकप्रकारम् । पुनः कीदृशम्, सर्वासु विभक्तिषु च सदृशम् । पुनः कीदृशम्, सर्वेषु वचनेषु सदृशम् । भागुरिराचार्योऽवाप्योरुपसर्गयोरल्लोपं वष्टि–वाञ्छति । च=पुनः हलन्तानां शब्दानामापं वष्टीत्यर्थः । आदिरेवाकारो लुप्यते, नान्त्यः, अपिना साहचर्यात् ॥ १ 'लः' इति 'न ब्राह्मणं हन्यात्' इतिवत् जातावेकवचनम् । 'कर्मणि च' इति चकारेण "कर्तरि कृत्" इति सूत्रस्थं 'कर्तरि' इत्यनुकृष्यते । एवमेव 'भावे चाकर्मकेभ्यः' इत्यत्रापि । तथा च 'भावे कर्तरि चाकर्मकेभ्यः' इति वाक्यस्याकर्मकविषयत्वेन परिशेषाद् 'कर्मणि कर्तरि च' इति वाक्यस्य सकर्मकविषयत्वमवसीयते इत्याह–**लकाराः सकर्मकेभ्य** इत्यादि ॥ २ "फलव्यापारयोरेकनिष्ठतायामकर्मकः । धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः ॥" तयोः=फलव्यापारयोः । धर्मी=आश्रयः । तथा च "फलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वम् । फलसमानाधिकरणव्यापारवाचकत्वमकर्मकत्वम् । किमित्याकांक्षारहितत्वमकर्मकत्वम्, इत्यादि सरलं लक्षणं बोध्यम् ॥ ३ क्रियायाः प्रारम्भतः समाप्तिपर्यन्तं–

अटावितौ। उच्चारणसामर्थ्याल्लस्य नेत्त्वम्। भू[३] सत्तायाम् ॥ १ ॥
कर्तृविवक्षायां भू ल् इति स्थिते–**तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ्** ३। ४। ७८ ॥

---

–प्रारम्भसमाप्ती अभिव्याप्य वृत्तिमान् कालो वर्तमानकालः। तथा च सिद्धान्तकौमुद्यध्ययनकाले द्वित्रिवर्षात्मकेऽपि 'अधीते' इत्येव प्रयोगः ॥
१ 'उपदेशेऽजनुनासिक इत्' 'हलन्त्यम्' इति सूत्राभ्यामित्संज्ञकावित्यर्थः। 'लशकु–' इति लकारस्यापि सा कुतो नेत्याशङ्कां शमयति–**उच्चारेति** ॥ अन्यथोच्चारणवैयर्थ्यादिति भावः ॥ २ अत्रेदमवधेयम्–"धातवो भ्वादयो ज्ञेयास्तेषु केचिदकर्मकाः। सकर्मकाश्च कतिचित् कतिचिच्च द्विकर्मकाः ॥" तथाहि–"सत्ता–लज्जा–स्थिति–जागरण, वृद्धि–क्षय–भय–जीवन–मरणे। नर्तन–निद्रा–रोदन–वासे, स्पर्धा–कम्पन–मोदन–हासे। शयन–क्रीडा–रुचि–दीप्त्याद्यर्थेऽकर्मकधातव उक्ताः॥" "गमने भक्षणे याने हनने भाषणे तथा। अर्जने तर्जने पाने रक्षणे करणे तथा ॥ परिधाने तथादाने श्रवणे क्षालने तथा। भजने नमने, त्यागे सेवने वहने तथा ॥ एवमादिषु वाच्येषु धातवः कर्मसंयुताः ॥" यत् क्रियते, यद् दृश्यते, यद् भुज्यते, यत् पीयते, यद् दीयते, यत् श्रूयते, यत् स्पृश्यते इत्यादिरूपं यत् तदेव कर्म। "दुहि–याचि–रुधि–प्रच्छि–भिक्षि–चिञो, ब्रुवि–शासि–जि–दण्डि–वृ–मन्थि–वदः। इति चोभयकर्म दुहादि विदुः, कृषि–नी–वहि–हृ–प्रभृतीति परम् ॥" अकर्मकधातुप्रयोगाः–"भवन्ति गुणिनो नम्रा मूर्खो न लज्जते कुतः। सन्तः सुखेन तिष्ठन्ति, कुपथ्यैर्वर्धते व्याधिः ॥" इत्यादि। स०–प्र०–"कुवाक्यं नैव भाषेत, गुरून्सदैव सेवेत, क्रोधं यत्नेन वर्जयेत्।" इत्यादि। द्वि० धा० प्र०–"धेनुं दोग्धि पयो गोपः, दीनोऽर्थं याचते नृपम्। रुरोध गां व्रजं कृष्णः, गुरुं धर्मं स पृच्छति ॥ चिन्वन्ति ते तरुं पुष्पम्" इत्यादि ॥ ३ सत्ता=भवनम्। अनुनासिकत्वप्रतिज्ञानाभावादूकारस्य नेत्त्वम्। एतन्मूलकमेवोक्तमभियुक्तैः–"दीधीवेव्योर्दरिद्रातेर्जागर्तेश्च विशेषतः। एकस्वराणामूर्णोतेर्नानु–

एतेऽष्टादश लादेशाः स्युः ॥ **लः परस्मैपदम् १ । ४ । ९९ ॥** लादेशाः परस्मैपदसंज्ञाः स्युः ॥ **तङानावात्मनेपदम् १।४।१००॥** तङ् प्रत्याहारः शानच्कानचौ चैतत्संज्ञाः स्युः । पूर्वसंज्ञाऽपवादः ॥ **अनुदात्तङित आत्मनेपदम् १ । ३ । १२ ॥** अनुदात्तेतो ङितश्च धातोरात्मनेपदं स्यात् ॥ **स्वरितञितः कर्त्रभिप्राये क्रियाफले १।३।७२ ॥** स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले ॥ **शेषात्कर्तरि परस्मैपदम् १।३।७८ ॥** आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि परस्मैपदं स्यात् ॥

---

-बन्धो विधीयते ॥" इति ॥ १ "लस्य" इत्यधिक्रियतेऽत आह-**लादेशा** इति । धातोर्विहितस्य लस्य स्थाने इत्यर्थः । तेन लुनातीत्यादौ न दोषः ॥ २ 'लः' इति जातावेकवचनम् । तत्र लकारस्य प्रयोगाभावात् षष्ठ्यर्थे प्रथमामाश्रित्याह-**लादेशाः परेति** ॥ ३ 'लः' इत्यनुवर्त्य 'लादेशौ तङानौ' इत्यर्थफलितमाह-**तङ्प्रत्याहारः शानच्कानचौ चेति** । चानश् तु न लकारादेश इति नात्मनेपदसंज्ञेति परस्मैपदिभ्योऽपि भवति ॥ ४ "ङित" इति ङिदन्तादित्यर्थः । तेन यङन्तादेरप्यात्मनेपदसिद्धिः । 'व्यपदेशिवदेकस्मिन्' इति परिभाषया शीङादिभ्योऽपि तङादिसिद्धिः । "भूवादयः-" इत्यतः 'धातव' इति वर्तते ॥ ५ "अनुदात्तङितः-" इत्यतः 'आत्मनेपदम्' इति वर्तते "भूवादयः-" इत्यतो 'धातवः' इति च पञ्चमीविपरिणतमित्याह-**धातोरिति** ॥ ६ **क्रियाफल** इति । 'यस्यार्थस्यैव सिद्ध्यर्थमारभ्यन्ते पचादयः । तत्प्रधानं फलं तेषां न लाभादि प्रयोजनम्' ॥ इति ॥ एतदुक्तं भवति-क्रियाफलं चात्र यदुद्देशेन क्रियाप्रवृत्तिरवगता तदेव न तु दक्षिणादिरूपम् इति । एवं च 'होता याज्यया यजति,' 'वेतनेन यज्ञदत्तभृतो देवदत्तः पचति' इत्यादौ नात्मनेपदम् । ७ "कर्तरि कर्म" इत्यतः 'कर्तरि' इति वर्तते तथा च 'कर्तरि कर्तरि'-

**तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः १।४।१०१ ॥** तिङ उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः स्युः ॥ **तान्येकवचनद्विवचनबहुवचनान्येकशः १।४।१०२॥** लब्धप्रथमादिसंज्ञानि तिङस्त्रीणित्रीणि प्रत्येकमेकवचनादिसंज्ञानि स्युः ॥ **युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः १।४।१०५ ॥** तिङ्वाच्यकारकवाचिनि युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने च मध्यमः ॥ **अस्मद्युत्तमः १।४।१०७ ॥** तथाभूतेऽस्मद्युत्तमः ॥ **शेषे प्रथमः १।४।१०८ ॥** मध्यमोत्तमयोरविषये प्रथमः स्यात् ॥ भू ति

---

–इति । न तु 'कर्मकर्तरि' इति फलितमाह–**कर्तरीति** ॥ १ "तिङस्त्रीणि त्रीणि–" इत्यनुवर्तते । तानीति तच्छब्दार्थमाह–**लब्धप्रथमादीति** ॥ २ लकारवाच्या यद्यपि भावकर्मकर्तारस्त्रय एव तथापि भावस्य कारकत्वाभावात् स परित्यज्यते परिशेषात् । लकारवाच्यं=कारकं कर्मकर्तृरूपं तद्वाचको युष्मद् यत्र शब्दत उपात्तः तत्र, यत्र प्रयोगमन्तरैव स्वार्थं बोधयति तत्र च मध्यम इति सरलार्थः ॥ ३ 'समानाधिकरणे' इत्यस्यार्थमाह–**तिङ्वाच्यकारकेति** ॥ ४ 'युष्मदि' इत्येतत्पदरहितं पूर्वसूत्रमनुवर्ततेऽत आह–**तथाभूत इति** ॥ ५ यत्र युष्मद् नामेति द्वयं तत्र युष्मदः क्रिया, युष्मद्विषये 'शेषे प्रथमः' इत्यस्याप्रवृत्तेः । यथा–स च त्वं च चन्द्रं पश्यथः । त्वं च स च पश्यथः । यत्र अस्मद् नामेति द्वयं तत्रास्मदः क्रिया, अस्मद् विषयेऽपि प्रथमपुरुषाप्रवृत्तेः । यथा–स च अहं च पश्यावः, अहं च स च पश्यावः । यत्र युष्मदस्मदी तत्रास्मदः क्रिया, 'युष्मद्युपपदे–' इति सूत्रापेक्षया 'अस्मद्युत्तमः' इति सूत्रस्य परत्वात् । यथा–त्वं च अहं च पश्यावः, अहं च त्वं च पश्यावः । यत्र चैतत् त्रयमेव तत्रापि अस्मद एव क्रिया भवति, युष्मदस्मदोर्विषयत्वेन प्रथमपुरुषस्याप्रवृत्तेः, उत्तमपुरुषस्य परतया मध्यमस्याप्य-

इति जाते । **तिङ्शित्सार्वधातुकम् ३ । ४ । ११३ ॥** तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः ॥ **कर्तरि शप् ३।१।६८॥** कर्त्रर्थे सार्वधातुके परे धातोः शप् ॥ **सार्वधातुकार्धधातुकयोः ७।३।८४ ॥** अनयोः परयोरिगन्ताङ्गस्य गुणः । अवादेशः । भवति । भवतः ॥ **झोऽन्तः ७ । १ । ३ ॥** प्रत्ययावयवस्य झस्यान्तादेशः । अतो गुणे । भवन्ति । भवसि । भवथः । भवथ ॥ **अतो दीर्घो यञि ७।३।१०१ ॥** अतोऽङ्गस्य दीर्घो यञादौ सार्वधातुके । भवामि । भवावः । भवामः । स भवति । तौ भवतः । ते भवन्ति । त्वं भवसि । युवां भवथः । यूयं भवथ । अहं भवामि । आवां

---

-प्रवृत्तेश्च । यथा-स च त्वं च अहं च पश्यामः, अहं च त्वं च स च पश्यामः। अत्र सर्वत्र समुदायसंख्यापेक्षया द्विवचनादि बोध्यम् । "अहं च भाष्यकारश्च कुशाग्रीयधिया-वुभौ । नैव शब्दाम्बुधेः पारं किमन्ये जडबुद्धयः ॥" अत्र 'ऐव' इति इण्धातो-र्लङि रूपम् । न गतवन्तावित्यर्थः । सेयं पुरुषव्यवस्था भारतविद्यार्थिभिरवश्य-मनुवादादिषु निध्यातव्या ॥ १ "धातोः" इत्यधिकृतमत आह-**धात्वधिका-रोक्ता** इति ॥ २ "धातोरेकाचः-" इत्यतः 'धातोः' इति 'सार्वधातुके' इति च वर्ततेऽत आह-**कर्त्रर्थे सार्वधातुके** इति ॥ ३ अङ्गस्य इत्यधिकृतम् । "मिदेः-" इत्यतः 'गुण' इति वर्तते । गुणपदेन इक्पदमुपतिष्ठते, विशे-षणत्वेन तदन्तविधिरित्यत आह-**इगन्ताङ्गस्येति ॥** ४ "आयनेयीनी-यियः-" इत्यतः 'प्रत्ययादीनाम्' इत्यनुवर्ततेऽत आह-**प्रत्ययावय-वस्येति ॥** तेन 'उज्झिता' इत्यत्र न दोषः ॥ ५ "अङ्गस्य" इत्यधिकृतम्; "तुरुस्तुशम्यमः" इत्यतः 'सार्वधातुके' इति वर्तते । विशेषणे तदादिविधिरित्यत आह-**यञादौ सार्वेति ॥**

भवावः । वयं भवामः ॥ **परोक्षे लिट् ३।२।११५॥** भूतानद्यतन-परोक्षार्थवृत्तेर्धातोर्लिट् स्यात् । लस्य तिबादयः ॥ **परस्मैपदानां णलतुसुस्थलथुसणल्वमाः । ३ । ४ । ८२ ॥** लिटस्तिबादीनां नवानां णलादयः स्युः । भू अ इति स्थिते—**भुवो वुग् लुङ्-लिटोः ६ । ४ । ८८ ॥** भुवो वुगागमः स्यात् लुङ्लिटो-रचि ॥ **लिटि धातोरनभ्यासस्य ६ । १ । ८ ॥** लिटि परे-ऽनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्त आदिभूतादचः परस्य

---

१ प्रयोक्तुरिन्द्रियागोचरत्वं परोक्षत्वम् । यथा—बलिर्बलवान् बभूव । रामो रावणं जघान । एतदुक्तं भवति—या खलु क्रिया वक्त्रा स्वयं न प्रत्यक्षी-कृता तादृश्यामेव भूतकालिकक्रियायां लिट्विभक्तेः प्रयोगः । उत्तमपुरुषे तु कर्ता स्वयमेव वक्ता भवतीति उत्तमपुरुषे लिटः प्रयोगः प्रामादिकः । तस्मात् "अहं जगाम, 'आवां जग्मिव' वयं जग्मिम" इत्यप्रयुक्त्वा तत्स्थाने "अहमगच्छम् आवामगच्छाव वयमगच्छाम" इत्याद्येव प्रयोक्तव्यम् । यत्र तु कर्तुरज्ञानावस्थायां क्रिया सम्पन्ना भवति,कर्त्रैव वा यां क्रियां स्वयं सर्वथा निषे-धति तत्रोत्तमप्रयोगेऽपि न क्षतिः । यथा—"सुप्तोऽहं किल रुरोद, न खल्वहं सुरां पपौ, नाहमयोध्यां जगाम" इत्यादि । सर्वथा विचार्यैव लिट उत्तमपुरुषस्य प्रयोगः कार्यो विद्यार्थिभिरिति दिक् ॥ २ "भूते" इत्यधिकृतम् । 'धातोः' इति च । "अनद्यतने लङ्" इत्यतः 'अनद्यतने' इति वर्ततेऽत आह—**भूतानद्य-तनेति** ॥ ३ मध्यमपुरुषबहुवचने 'अ—अ—' इत्येवमकारप्रश्लेषात् सर्वादेशः । इत्संज्ञायोग्यत्वमनुबन्धत्वम् इति नव्यमते णल्यपि 'ण-अल्—' इत्येवमकारप्रश्ले-षेणैव सर्वादेशो बोध्यः ॥ ४ "लिटस्तझयोः—" इत्यतः 'लिटः' इति वर्ततेऽत आह—**लिट** इत्यादि ॥ ५ "अचि श्नुधातु—" इत्यतः 'अचि' इति वर्ततेऽत आह—**अचि** इति ॥ ६ "एकाचो द्वे प्रथमस्य" "अजादेर्द्वितीयस्य" इति अधि-क्रियतेऽत आह—**लिटि परे** इति ॥

तु द्वितीयस्य । भूव् भूव् अ इति स्थिते ॥ **पूर्वोऽभ्यासः ६ । १ । ४** ॥ अत्र[1] ये द्वे विहिते[2] तयोः पूर्वोऽभ्याससंज्ञः स्यात् ॥ **हलादिः शेषः ७ । ४ । ६०** ॥ अभ्यासस्यादिर्हल्[3] शिष्यते अन्ये हलो लुप्यन्ते । इति वलोपः ॥ **ह्रस्वः ७।४।५९** ॥ अभ्या-सस्याचो[4] ह्रस्वः स्यात् ॥ **भवतेरः ७ । ४ । ७३** ॥ भवतेरभ्या-सोकारस्य[6] अः स्याल्लिटि ॥ **अभ्यासे चर्च ८ । ४ । ५४** ॥ अभ्यासे झलां चरः स्युर्जशश्च[7] । झशां[8] जशः खयां चर इति

---

१ "एकाचो द्वे प्रथमस्य" इत्यतः 'द्वे' इत्यनुवर्ततेऽत आह-**अत्र ये द्वे विहिते** इति ॥ २ उच्चारिते इत्यर्थः । "द्विष्प्रयोगो द्विर्वचनम् षाष्ठम्" इति सिद्धान्तात् ॥ ३ "अत्र लोपोऽभ्यासस्य" इत्यतः 'अभ्यासस्य' इति वर्तते । शेष इति कर्मणि घञ् । शेषशब्दश्चान्यनिवृत्तिपूर्वकावस्थानवाचीत्यभि-प्रेत्याह-**अभ्यासस्येत्यादि** ॥ शेषश्चादिभूतस्यैव सति सम्भवे । हलोऽभ्यासादि-भूतत्वासम्भवे तु 'आत' इत्यादौ द्वितीयहलो नैव शेषत्वम्, किं तु निवृत्तिरेव, तस्याभ्यासादित्वाभावात् इत्यभिप्रायः ॥ ४ "अत्र लोपः-" इत्यतोऽभ्यासस्येति वर्तते । ह्रस्वपदश्रुत्या षष्ठ्यन्तस्याच्पदस्योपस्थितिरित्यभिप्रेत्याह-**अभ्यासस्याच** इति ॥ ५ अभ्यासस्यावयवो योऽच् तस्येति वैयधिकरण्येन सम्बन्धः । तेन 'चच्छौ' इत्यत्र तुकि कृतेऽभ्यासस्याऽजन्तत्वाभावेऽपि ह्रस्वसिद्धिः ॥ ६ "अत्र लोपः-" इत्यतोऽभ्यासस्येति वर्तते "व्यथो लिटि" इत्यतः 'लिटि' इति च । अलोन्त्यपरिभाषाफलितमाह-**अभ्यासोकारस्येति** ॥ ७ "झलां जश् झशि" इत्यतः 'जश्' इति चकारेणानुकृष्यतेऽत आह-**जशश्चेति** ॥ ८ झलो हि चतुर्विंशतिः, तेषु श-ष-स-इति त्रयः 'शरः' इत्युच्यन्ते । तेषाम-भ्यासे 'शर्पूर्वाः' इति वक्ष्यमाणसूत्रेण लोपविधानात् हकारस्य च 'कुहोश्चुः' इति चुत्वविधानात् झलान्तर्गता विंशतिर्झय एव स्थानिनः शिष्यन्ते, तत्र कस्य चर् कस्य च जशिति जिज्ञासायामाह-**झशामिति** ॥ वर्गाणां ये तृतीयचतुर्था-

विवेकः । बभूव । बभूवतुः । बभूवुः ॥ **लिट् च ३।४।११५॥** लिडादेशस्तिङार्धधातुकसंज्ञः ॥ **आर्धधातुकस्येड्वलादेः ७।२।३५ ॥** वलादेरार्धधातुकस्येडागमः स्यात् । बभूविथ । बभूवथुः । बभूव । बभूव । बभूविव । बभूविम ॥ **अनद्यतने लुट् ३ । ३ । १५ ॥** भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् ॥ **स्यतासी लृलुटोः ३।१।३३॥** धातोः स्यतासी एतौ प्रत्ययौ स्तो लृलुटोः परतः । शबाद्यपवादः । लृ इति लृङ्लृटोर्ग्रहणम् ॥ **आर्धधातुकं शेषः ३।४।११४ ॥** तिङ्शिद्भ्योऽन्यो धातोरिति विहितः प्रत्यय एतत्संज्ञः स्यात् । इट् ॥ **लुटः प्रथमस्य डारौरसः २।४।८५ ॥** डित्त्वसामर्थ्यादभस्यापि

---

-झशस्तेषां स्थाने जबगडदा भवन्ति, घोषसंवारनादप्रयत्नसाम्यात्, ये च प्रथमाद्वितीयाः खयस्तेषां स्थाने च-ट-त-क-पा भवन्ति, श्वासाघोषविवारप्रयत्नसाम्यादित्यत्र विवेक इत्यर्थः ॥ १ **विवेक** इति । औपदेशिकजशां जश एव, औपदेशिकचरां चर एवेति विशेषः ॥ २ "आर्धधातुकं शेषः" इत्यतः 'आर्धधातुकम्' इति वर्तते, 'लिट्' इति प्रथमा षष्ठ्यर्थे इत्यभिप्रेत्याह-**लिडादेश इति** ॥ ३ वमयोः क्रादिनियमादिड् बोध्यः, अन्यथा 'श्र्युकः किति' इति निषेधः स्यात् ॥ ४ अतीतरात्रेः पश्चार्धेनागामिन्याः पूर्वार्धेन च सहितः कालोऽद्यतनस्तद्भिन्नोऽनद्यतनः ॥ ५ "भविष्यति गम्यादयः" इत्यतः 'भविष्यति' इति वर्ततेऽत आह-**भविष्यत्यनेति** ॥ ६ "धातोरेकाचः-" इत्यतः 'धातोः' इति वर्ततेऽत आह-**धातोरित्यादि** ॥ ७ "त्यक्तानुबन्धग्रहणे सामान्यस्य ग्रहणम्" इत्युक्तेः । यथासंख्यम् तु वाचकशब्दसाम्याद् वेद्यम् ॥ ८ 'तिङ्शित्' इत्यनुवर्तते पञ्चमीविपरिणतमित्याह-**तिङ्शिद्भ्योऽन्य** इति ॥ **धातोरितीति** ॥ हारिभ्यामित्यादौ गुणवारणाय 'धातोः' इत्यनुवर्तनीयमिति भावः ॥ ९ ननु भत्वाभावात् कथं टेरित्यस्य प्रवृत्तिरत आह-**डित्त्वेति** ॥ डित्करणं हि टिलोपार्थम्-

टेर्लोपः । भविता ॥ **तासस्त्योर्लोपः ७ । ४ । ५० ॥** तासे-रस्तेश्च सस्य लोपः स्यात्सादौ प्रत्यये परे ॥ **रि च ७ । ४ । ५१ ॥** रादौ प्रत्यये तथा । भवितारौ । भवितारः । भवितासि । भवितास्थः । भवितास्थ । भवितास्मि । भवितास्वः । भवितास्मः ॥ **लृट् शेषे च ३ । ३ । १३ ॥** भविष्यदर्थाद्धातोर्लृट् क्रियार्थायां क्रियायां सत्या-मसत्यां वा । स्यः । इट् । भविष्यति । भविष्यतः । भविष्यन्ति । भविष्यसि । भविष्यथः । भविष्यथ । भविष्यामि । भविष्यावः । भवि-ष्यामः ॥ **लोट् च ३ । ३ । १६२ ॥** विध्याद्यर्थेषु धातोर्लोट् ॥

---

–टिलोपश्च भत्वाभावान्नैव प्राप्नोतीति भत्वाभावेऽपि टिलोपं गमयति तदिति भावः। न च सर्वार्थमेव तत्किन्न स्यादिति वाच्यम् अनुबन्धान्तरेणापि तत्सिद्धेः । नव्य-मते 'डा आ' इत्येवं प्रश्लेषेणैव तस्य सम्पादनीयत्वाच्चेति दिक् ॥ १ "सः स्यार्ध–" इत्यत 'सः सि' इति वर्तते, तदादिविधिश्च विशेषणेऽत आह–**सस्येति** ॥ २ 'सः' इति "तासस्त्योर्लोपः" इति च वर्ततेऽत आह–**प्रत्यये तथेति** ॥ ३ "भविष्यति गम्यादयः" इत्यतः 'भविष्यति' इति "तुमुन्ण्वुलौ" इत्यतः 'क्रियार्थायाम् क्रियायाम्' इति वर्ततेऽत आह–**भविष्यदर्थादिति** ॥ द्विविधो हि भविष्यन् कालः–अनद्यतनो भविष्यन्, सामान्यो भविष्यंश्चेति । अद्य दिवसात् परवर्तिनि समीपे भविष्यति काले लुट्विभक्तेः प्रयोगः । यथा– "परेद्युस्तत्र गन्तास्मि, श्वो गन्तास्मि तवान्तिकम्। श्वो भविता राज्यभारः कुमार-स्य–" इत्यादि । यश्च सामान्यतोऽग्रे भावी तस्मिन् सामान्ये भविष्यति लृड्-विभक्तेः प्रयोगः । यथा–किं तत्र त्वं गमिष्यसि ? कल्की धर्मपालको भविष्यतीति । तत्र अनद्यतनो भविष्यत् 'आसन्नभविष्यन्' इति, सामान्यो भविष्यंश्च 'पूर्णभविष्यन्' इति नामान्तरेणाप्यभिधीयते, तदिदं विद्यार्थिभिरवश्यं ध्येयम् ॥ ४ क्रियार्थ-क्रियोदाहरणं तु 'धनीभविष्यामीति व्रजति' इत्यादि ज्ञेयम्। ५ " विधिनिमन्त्रणा–

**आशिषि लिङ्लोटौ** ३ । ३ । १७३ ॥ **एरुः** ३।४।८६ ॥ **लोट्** इकारस्य उः । भवतु ॥ **तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्** ७ । १ । ३५ ॥ आशिषि तुह्योस्तातङ् वा । परत्वात्सर्वादेशः । भवतात् ॥ **लोटो लङ्वत्** ३ । ४ । ८५ ॥ लोटस्तामादयस्सलोपश्च ॥ **तस्थस्थमिपां तान्तन्तामः** ३।४।१०१ ॥

---

–मन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु–" इति वर्ततेऽत आह–**विध्याद्यर्थेष्विति** ॥ १ आशिष्यपीत्यर्थः । आशीरिष्टप्रार्थनेच्छा । २ "लोटो लङ्वत्" इत्यतः 'लोटः' इति वर्तते "एः–" इति "आमेतः" इति सूत्रारम्भसामर्थ्यात् 'इ' शब्दस्यैव षष्ठी, न 'ए' शब्दस्य अत आह–**लोट** इति ॥ ३ सर्वादेशत्वमन्तरा प्रत्यये ङित्त्वस्याप्राप्त्या गुणवृद्धिप्रतिषेधाद्यर्थत्वाभावेन ङित्त्वस्य वैयर्थ्यापत्त्याऽनेकाल्सूत्रस्येहोत्सर्गत्वाभावेनेति भावः ॥ अयमत्राभिसन्धिः–अनन्यफलकङित्त्वे अनङादौ चरितार्थस्य 'ङिच्च' इति शास्त्रस्य गुणवृद्धिप्रतिषेधसंप्रसारणादिफलकतातङ्ङित्त्वे दुर्बलस्यैव प्राप्तौ परेण 'अनेकाल्' इत्यनेन बाधः । न ह्यनङादौ ङित्त्वस्यान्त्यादेशादृते किंचिदन्यत्फलमस्ति, नहि च यत्र कुत्र चरितार्थस्य विधेर्बाधकत्वम् दृष्टमस्ति । निरवकाशत्वरूपस्यापवादशास्त्रे बाधकत्वप्रयोजकस्याभावात् । "निरवकाशो ह्यपवाद उत्सर्गं बाधते" इति नियम इति । न च सति सर्वादेशे गुणवृद्धिप्रतिषेधसंप्रसारणाद्यर्थत्वम्, सति च गुणवृद्धिप्रतिषेधसंप्रसारणाद्यर्थत्वे सर्वादेशत्वं, इत्यन्योन्याश्रयेण सर्वादेशत्वालाभे अन्त्यादेशत्वमेव स्यादिति वाच्यम्, 'एरुः' इत्यस्यानन्तरम् 'तिह्योस्तादाशिष्यन्यतरस्याम्' इति न्यासेन इकारानुवृत्त्या 'तिह्योरिवर्णस्य तात्' इत्यर्थकेनान्त्यादेशत्वसिद्धौ ङित्त्वस्य सर्वादेशत्वविधानार्थकत्वकल्पनेनादोषात् । तथा चोक्तं भाष्ये–"एवं तर्ह्येतदेव ज्ञापयति न तातङन्त्यस्य स्थाने भवतीति–यदेतं ङितं करोति । इतरथा हि लोट एरुप्रकरण एव ब्रूयात्–तिह्योस्तादाशिष्यन्यतरस्यामिति" ॥ ४ "तत्र तस्येव" इति सूत्रेण षष्ठ्यन्ताद्वतिप्रत्ययाङ्गीकारेण 'लङ इव' इत्यर्थेन लङ्स्थानिककार्याणामेवाति–

ङितश्चतुर्णां तामादयः क्रमात्स्युः । भवताम् । भवन्तु ॥ **सेर्ह्यपिच्च ३।४।८७॥** लोटः सेर्हिः सोऽपिच्च ॥ **अतो हेः ६।४।१०५॥** अतः परस्य हेर्लुक् । भव । भवतात् । भवतम् । भवत ॥ **मेर्निः ३।४।८९॥** लोटो मेर्निः स्यात् ॥ **आडुत्तमस्य पिच्च ३ । ४ । ९२ ॥** लोडुत्तमस्याट् स्यात् स पिच्च । भवानि ॥ हिन्योरुत्वं न इकारोच्चारणसामर्थ्यात् ॥ **ते प्राग्धातोः १।४।८०॥** ते गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोक्तव्याः ॥ **आनि लोट् ८ । ४ । १६ ॥** उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्यानीत्यस्य नस्य णः स्यात् । प्रभवाणि । ( दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः ) ।

---

-देशः, न तु लङ्निमित्तककार्याणामित्यभिप्रेत्याह-**तामादय** इति ॥ १ "नित्यं ङितः" इत्यतः 'ङितः' इति वर्ततेऽत आह-**ङित** इत्यादि ॥ २ "लोटो लङ्वत्" इत्यतः 'लोटः' इति वर्ततेऽत आह-**लोट** इति ॥ ३ "चिणो लुक्" इत्यतः 'लुक्' इति वर्ततेऽत आह-**लुगिति** ॥ ४ "लोटो लङ्वत्" इति सूत्रात् 'लोटः' इति वर्ततेऽत आह-**लोट** इति ॥ ५ "लोटो लङ्वत्" इत्यतः 'लोटः' इति वर्ततेऽत आह-**लोडिति** ॥ ६ यस्याडागमः स पिच्चेत्यर्थः । आट एव पित्त्वे तु समुदायस्य पिद्व्यपदेशो न स्यात् । एवंच 'भवाव, भवाम' इत्यत्र वकारमकाराकारयोरनुदात्तत्वं न स्यात् ॥ ७ **सामर्थ्यादिति** ॥ उत्वादेशस्येष्टत्वे 'हु नु' इत्येव वदेदिति भावः ॥ ८ तच्छब्दस्य पूर्वप्रक्रान्तपरामर्शकत्वेन गत्युपसर्गसंज्ञकपरामर्शकत्वमित्याह-**गत्युपसर्गसंज्ञका** इति ॥ ९ "उपसर्गादसमासेऽपि" इत्यतः 'उपसर्गाद्' इति तत्स्थपदं वर्तते "रषाभ्यां नो णः-" इति च । 'लोट' इति लुप्तषष्ठ्यन्तम् इति सकलमभिप्रेत्याह-**उपसर्गस्थादिति** ॥ १० ननु प्रभवाणीतिवत् दुर्भवानीत्यत्रापि णत्वेन भाव्यमत आह-**दुर** इति । यत्र षत्वं णत्वं च कर्तव्यमस्ति तत्र-

दुःस्थितिः । दुर्भवानि । ( अन्तरशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम् ) । अन्तर्भवाणि ॥ **नित्यं ङितः ३।४।९९॥** सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः । अलोऽन्त्यस्येति सलोपः । भवाव । भवाम ॥ **अनद्यतने लङ् ३।२।१११॥** अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् स्यात् ॥ **लुङ्लङ्लृङ्क्ष्वडुदात्तः ६।४।७१॥** एष्वङ्गस्याट् ॥ **इतश्च ३।४।१०० ॥** ङितो लस्य परस्मैपदमिकारान्तं यत्तदन्तस्य लोपः । अभवत् । अभवताम् । अभवन् । अभवः । अभवतम् । अभवत । अभवम् । अभवाव । अभवाम ॥ **विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ३ । ३ । १६१ ॥** एष्वर्थेषु

---

—'दुर' इत्यस्य उपसर्गत्वं नाङ्गीक्रियत इत्यर्थः॥१ **दुःस्थितिरिति** । दुर उपसर्गत्वाभावात् 'उपसर्गात्सुनोति—' इति षत्वाभावः ॥ २ ननु 'अन्तर्' इत्यस्य प्रादिषु पाठाभावेन उपसर्गत्वाभावात् 'अन्तर्भवाणि' इति णत्वं न स्यादत आह— **अन्तःशब्देति** ॥ अङ्विधौ किविधौ णत्वे च कार्ये अन्तर् इत्यस्य उपसर्गत्वमङ्गीक्रियते इत्यर्थः । अङ्=अन्तर्धा 'आतश्चोपसर्गे' किः=अन्तर्धिः 'उपसर्गे घोः किः' ॥ ३ "इतश्च लोपः—" इत्यतः 'लोप' इति 'स उत्तमस्य' इति च वर्तते विशेषणे तदन्तविधिरित्याह—**सकारान्तस्येति** ॥ ४ 'धातोः' 'भूते' इत्यधिकृते ॥ अनन्तरगतागामिनिशीथान्तरालकालोऽद्यतनः तद्भिन्नोऽनद्यतन इत्यभिप्रेत्याह—**अनद्यतनभूतेति** ॥ ५ "अङ्गस्य" इत्यधिक्रियते ॥ ६ "इतश्च लोपः" परस्मैपदेषु इत्यतः 'लोपः' इति "नित्यं ङितः" इति "लस्य" इति च वर्तन्तेऽत आह—**ङितो लस्येति** ॥ ७ विधिः प्रेरणम् । निमन्त्रणं नियोगकरणम् । आमन्त्रणं कामचारानुज्ञा । अधीष्ट सत्कारपूर्वको व्यापारः । संप्रश्नः=विचारः तद्वा कर्तव्यमेतद्वेत्यादिरूपः । इत्यग्रे वक्ष्यते ॥ ८ प्रवर्तनायां लिङित्येव सुवचम् ॥

धातोर्लिङ्[1] ॥ **यासुट् परस्मैपदेषूदात्तो ङिच्च ३।४।१०३ ॥** लिङः[2] परस्मैपदानां यासुडागमो ङिच्च ॥ **लिङःसलोपोऽनन्त्यस्य ७।२।७९॥** सार्वधातुकलिङोऽनन्त्यस्य[3] सस्य लोपः । इति प्राप्ते । **अतो येयः ७।२।८० ॥** अतः परस्य सार्वधातुकावयवस्य यास् इत्यस्य[4] इय् । गुणः ॥ **लोपो व्योर्वलि ६।१।६६ ॥** भवेत् । भवेताम् ॥ **झेर्जुस् ३।४।१०८ ॥** लिङो[5] झेर्जुस् स्यात् । भवेयुः । भवेः । भवेतम् । भवेत । भवेयम् । भवेव । भवेम ॥ **लिङाशिषि ३।४।११६ ॥** आशिषि लिङस्तिङार्धधातुकसंज्ञः[6] स्यात् ॥ **किदाशिषि ३।४।१०४ ॥** आशिषि लिङो[7] यासुट् कित् । स्कोः संयोगाद्योरिति सलोपः ॥ **क्ङिति च १ । १ । ५ ॥** गित्क्ङिन्निमित्ते इग्लक्षणे[8] गुणवृद्धी न स्तः । भूयात् । भूयास्ताम् । भूयासुः । भूयाः । भूयास्तम् । भूयास्त । भूयासम् । भूयास्व । भूयास्म ॥ **लुङ् ३।२।११०॥** भूतार्थे[9] धातोर्लुङ् स्यात् ॥ **माङि लुङ् ३।३।१७५ ॥**

---

१ "धातोः" इत्यधिक्रियते ॥ २ "लिङः सीयुट्" इत्यतः 'लिङ' इति वर्ततेऽत आह—**लिङ** इति ॥ ३ "रुदादिभ्यः—" इत्यतः 'सार्वधातुके' इति वर्ततेऽत आह—**सार्वेति** ॥ ४ 'यास्' इति लुप्तषष्ठ्यन्तम् । संधिरार्षः । "रुदादिभ्यः—" इत्यतः 'सार्वधातुके' इति वर्ततेऽत आह—**सार्वेति** ॥ ५ "लिङः सीयुट्" इत्यतो 'लिङः' इति वर्ततेऽत आह—**लिङ** इति ॥ ६ "आर्धधातुकं शेषः" इत्यतः 'आर्धधातुकम्' इति वर्तते 'लिङ्' षष्ठ्यर्थे प्रथमेत्याह—**लिङस्तिङिति** ॥ ७ "यासुट् परस्मैपदेषु—" इत्यतः 'यासुट्' इति वर्ततेऽत आह—**लिङो यासुट्** इति ॥ ८ "इको गुणवृद्धी" इति "न धातुलोप—" इत्यतो 'न' इति च वर्ततेऽत आह—**गित्किदिति** ॥ ९ 'धातोः'—

सर्वलकारापवादः ॥ **स्मोत्तरे लङ् च ३।३।१७६॥** स्मोत्तरे माङि लङ् स्याच्चाल्लुङ् ॥ **च्लि लुङि ३।१।४३॥** शबाद्यपवादः । **च्लेः सिच् ३।१।४४॥** इचावितौ ॥ **गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु २।४।७७॥** एभ्यः सिचो लुक् स्यात् । गापाविहेणादेशपिबती गृह्येते ॥ **भूसुवोस्तिङि ७।३।८८॥** भूसू एतयोः

---

–'भूते' इत्यधिक्रियेते अत आह–**भूतार्थे** इति । भूतकालस्त्रिधा–परोक्षभूतः, अनद्यतनभूतः, सामान्यभूतश्चेति । तत्र यः स्वनेत्राभ्यां नाध्यक्षीकृतः किन्तु केवलं श्रुतिपरम्परया कर्णपथमवतरति स परोक्षभूतः, तत्र लिट्विभक्तेः प्रयोगः । यथा–"पुरा कश्चिद्रामो दाशरथिर्बभूव" । यश्च अद्य दिवसात् प्राक्तने समीपकाले जातः सोऽनद्यतनभूत इति व्यपदिश्यते, तत्र लङ्विभक्तेः प्रयोगः । यथा–ह्यस्तत्रागच्छम् । ह्योऽभवत् त्वत्पुत्रः, गतपरेद्युस्तव गृहेऽगच्छम् । यश्च सामान्येन प्राग्भूतः अद्यतनो वा अनद्यतनो वा स सामान्यभूत इत्युच्यते । तत्र लुङ्विभक्तेः प्रयोगः । यथा–मत्तः पुरा तेऽभूवन् । अत्र अनतद्यनभूतस्य 'आसन्नभूत' इति, सामान्यभूतस्य च 'पूर्णभूत' इति नामान्तरमप्यूह्यम् ॥ १ ननु 'लुङ्' इति सूत्रेणैव सर्वत्राविशेषेण लुङि सिद्धे किमर्थमिदमत आह–**सर्वेति** । तेन यत्र माङुपपदं तत्र कालत्रयेऽपि लुङेव भवति, नान्ये लकारा इति सिद्धं भवति । 'मास्तु' इत्यादौ तु निषेधार्थो माशब्दो न माङिति न दोषः । तादृशस्थले तिङन्तप्रतिरूपकमव्ययमेव बोध्यमिति तु नव्याः । अयमत्र संग्रहः–"माङ्योगे सर्वकाले लुङ् मास्मयोगे च लुङ्लङौ । अडागमनिषेधश्च नित्यं तत्र तु जायते ॥" यथा–गर्वं मा कार्षीः, अनृतं मास्म वादीः, मा स्म वादः वा ॥ २ चकारेण 'लुङ्' इत्यनुवर्तते । 'स्मोत्तरे' इति बहुव्रीहिणाऽन्यपदार्थे 'माङि' इति लब्धमित्याह–**स्मोत्तरे** इत्यादि ॥ ३ "ण्यक्षत्रियार्ष–" इत्यतः 'लुक्' इति वर्ततेऽत आह–**लुगिति** ॥ ४ अतएव "गापोर्ग्रहणे इण्पिबत्योर्ग्रहणम्" इत्युक्तं भाष्ये ॥

सार्वधातुके तिङि परे गुणो न । अभूत । अभूताम् । अभूवन् अभूः । अभूतम् । अभूत । अभूवम् । अभूव । अभूम ॥ **न माङ्-योगे ६।४।७४॥** अडाटौ न स्तः । मा भवान् भूत् । मा स्म भवत् । मा स्म भूत् ॥ **लिङ्निमित्ते लृङ् क्रियातिपत्तौ ३।३।१३९॥** हेतुहेतुमद्भावादि लिङ्निमित्तं, तत्र भविष्यत्यर्थे लृङ् स्यात् क्रियाया अनिष्पत्तौ गम्यमानायाम् । अभविष्यत् । अभविष्यताम् । अभविष्यन् । अभविष्यः । अभविष्यतम् । अभविष्यत । अभविष्यम् । अभविष्याव । अभविष्याम । सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत् इत्यादि ज्ञेयम् ॥ अत सातत्यगमने ॥ २ ॥ अतति ॥ **अत आदेः**

---

१ "मिदेर्गुणः" इत्यतः 'गुणः' इति "नाभ्यस्तस्याचि पिति-" इत्यतः 'न सार्वधातुके' इति च वर्ततेऽत आह-**सार्वधातुके तिङीति** ॥ २ "लुङ्लङ्लृङ्क्षु-" इत्यतः 'अट्' इति "आडजादीनाम्" इति च वर्ततेऽत आह-**अडाटाविति** ॥ ३ "हेतुहेतुमतोर्लिङ्" इत्याद्युक्तेर्हेतुहेतुमद्भावादि लिङ्निमित्तं "भविष्यति मर्यादावचने-" इत्यतः 'भविष्यति' इति वर्ततेऽत आह-**हेतुहेतुमद्भावादीति** । हेतुः=कारणम्, हेतुमत्=कार्यम् । सुवृष्टिभवनं हेतुः सुभिक्षभवनं हेतुमत् । वह्निश्चेत्प्राज्वलिष्यत् ओदनमपक्ष्यत् इत्यादि ॥ ४ "अत्रेदमवधेयम्-"उपसर्गेण धात्वर्थो बलादन्यत्र नीयते । प्रहाराहारसंहारविहारपरिहारवत् ॥" यथा-प्र=भू=सामर्थ्ये-दाने प्रभवति । सम्=सम्भवे-यत्ने सिद्धिः सम्भवति । उद्=उत्पत्तौ-क्षेत्रे बीजमुद्भवति । अभि=अभिभवे, परि=तिरस्कारे, अनु=अनुभवे, धातुश्च सकर्मको भवति । यथा-बलवान् शत्रूनभिभवति, खलः साधुं परिभवति, उद्योगी सुखमनुभवति । अन्तर्=अन्तर्भावे, अन्तर्भवति । तिरस्=तिरोभावे-तिरोभवति । आविस्=आविर्भावे-आविर्भवति । तूष्णीम्=तूष्णीम्भावे-तूष्णीम्भवति । न्यक्=न्यग्भावे-न्यग्भवति । पुनर्=पुनर्भावे-पुनर्भवति । प्र=प्रकाशे,-

७।४।७०॥ अभ्यासस्यादेरतो दीर्घः स्यात् । आत । आततुः। आतुः। आतिथ । आतथुः । आत । आत । आतिव । आतिम । अतिता । अतिष्यति । अततु । **आडजादीनाम् ६।४।७२ ॥** अजादेरङ्गस्याट् लुङ्लङ्लृङ्क्षु । आतत् । अतेत् । अत्यात् । अत्यास्ताम् । लुङि सिचि इडागमे कृते ॥ **अस्तिसिचोऽपृक्ते ७।३।९६ ॥** विद्य-

---

–ऐश्वर्ये, सामर्थ्ये च । यथा–हिमवतो गङ्गा प्रभवति, प्राञ्चस्य प्रभवति, मल्लो मल्लाय प्रभवति । परा=पराभवे–बली परान् पराभवति । सम् उत्प्रेक्षायाम्=इदमेवं सम्भवति । वि=ऐश्वर्ये–विभवति । प्रति=भू=प्रतिभूत्वे सादृश्ये–प्रतिभवति इत्यादि । यद्यपि सर्वेऽप्यमी भूधातोरेवार्थाः, "उपसर्गाश्च निपाताश्च धातवश्चेति ते त्रयः । अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम् ॥ क्रियावाचित्वमाख्यातुं प्रसिद्धोऽर्थः प्रदर्शितः । प्रयोगतोऽन्ये मन्तव्या अनेकार्था हि धातवः ॥" इत्याद्युक्तेस्तथापि सत्येवोपसर्गसन्निधाने तेऽभिव्यज्यन्ते नान्यथाप्रकरणादिना वा तदभिव्यक्तिरिति ध्येयम् ॥ १ "अत्र लोपोऽभ्यासस्य" इत्यतः 'अभ्यासस्य' इति "दीर्घ इणः किति" इत्यतो 'दीर्घ' इति च वर्ततेऽत आह–**अभ्यासस्येति** ॥ २ "लुङ्लङ्लृङ्क्षु–"इत्यनुवर्तते, 'अङ्गस्य' इति चात आह–**अजादेरङ्गस्येति** ॥ ३ " अस्तिसिचः–" इति द्विसकारको निर्देशः । 'अस्तेः सकारान्तात्' इति भाष्येऽस्तिग्रहणं सिचोऽप्युपलक्षणम् । द्विपदं चानेकोपलक्षणम् "तस्माल्लुड् द्विहलः" इत्यत्रेव । नागेशोपदर्शिते "अस्तिस्सिचः–" इत्येवं पाठे तु वैदिकसम्प्रदायसिद्धतकारोत्तरवर्तिन इकारस्य संयोगपरत्वेन गुरुत्वापत्तिः । अस्मदुपदर्शितपाठे तु संयोगपरत्वेन गुरुत्वमकारस्य सर्वमतसाधारणं वर्तत एव । तथा च–'अस् स्' इति लुप्तपञ्चमीके पदे । ' स्ति ' इति सप्तम्यन्तम् । 'सिचः' इति पञ्चम्यन्तम् । 'स्' इति लुप्तपञ्चम्यन्तम् । ' अस ' इति लुप्तपञ्चम्यन्तस्य ' सिचः ' इति पञ्चम्यन्तस्य च विशेषणमिति तदन्तविधिरिति ' सकारान्तादस्तेः सिचश्च ' इत्यर्थे सकारान्तत्वविशेषणमविकृतसकारत्वबोधनार्थम् । तत्फलितमाह–**विद्य–**

मानात् सिचोऽस्तेश्च परस्यापृक्तस्य हले इडागमः ॥ **इट ईटि ८ । २ । २८ ॥** इटः परस्य सस्य लोपः स्यादीटि परे । ( सिज्लोप एकादेशे सिद्धो वाच्यः ) । आतीत् । आतिष्टाम् ॥ **सिजभ्यस्तविदिभ्यश्च ३ । ४ । १०९ ॥** सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्संबन्धिनो झेर्जुस् । आतिषुः । आतीः । आतिष्टम् । आतिष्ट । आतिषम् । आतिष्व । आतिष्म । आतिष्यत् ॥ षिधं-

---

**-मानादिति** ॥१"उतो वृद्धिः-" इत्यतो 'हलि' इति "ब्रुव ईट्" इत्यतः 'ईट्' इति च वर्तते । तदाह-**हल ईडागम** इति ॥२"सयोगान्तस्य-" इत्यतः 'लोपः' इति "रातसस्य" इत्यतः 'सस्य' इति च वर्ततेऽत आह-**सस्य लोप** इति ॥ ३ तेन सलोपस्यासिद्धत्वेन दीर्घप्रवृत्त्यभावो नेति भावः ॥ ४ "नित्यं ङितः" इत्यतः 'ङितः' इति "झेर्जुस्" इति च वर्तनेऽत आह-**ङित्सम्बन्धिन** इत्यादि॥ ५ ननु पाणिनिना कृतो यः षोपदेशत्वाषोपदेशत्वपाठः सोऽधुना लेखादिप्रमादेन परिभ्रष्टः । अद्यत्वे हि बहुषु स्थलेषु सकारस्थाने षकारस्य, षकारस्थाने च सकारस्य पाठ उपलभ्यते, इति कथमीदृश्यां दशायामधुनातनैः षोपदेशत्वाषोपदेशत्व-निर्णयः शक्यो विधातुमिति चेच्छृणु-"सेकृ सृप् सृ स्तृ सृज् स्तॄ स्त्याऽन्ये दन्त्या-जन्तसादयः । एकाचः षोपदेशाः ष्वष्क् स्विद् स्वद स्वञ्ज स्वप् स्मिङः ॥" सेकृ-प्रभृतीन् सप्त धातून् विहाय येऽन्ये दन्त्याजन्तसादय एकाचो धातवः ते षोपदेशा बोध्याः । ष्वष्कप्रभृतयः षड् धातवोऽपि षोपदेशा बोध्या इत्यर्थः । तत्र 'षिध-गत्याम्' इत्यादयः अजन्तसादित्वात् षोपदेशाः, 'ष्ठा गतिनिवृत्तौ' इत्यादयश्च दन्त्यान्तसादित्वात् षोपदेशाः । अत्र 'दन्त्याजन्त'-इत्युक्तेः 'स्कुदि आप्रवणे' इत्यादीनां न षोपदेशत्वम्, अत्र हि यः सकारः नासौ दन्त्यान्तो नाप्यजन्तः । तेन 'चुस्कुन्दे' इत्यादौ न आदेश प्रत्यययोः' इति षत्वम् । 'एकाचः' इत्युक्तेश्च 'सूत्र वेष्टने' इत्यादीनां चुरादावदन्तत्वेन पठितानां न षोपदेशत्वम् । तेन 'सोसूत्र्यते' अत्र षत्वाभावः । एवं च 'साध संसिद्धौ' इत्यादीनां स्कारोपलम्भेऽपि षोपदेश-

गत्याम् ॥ ३ ॥ **ह्रस्वं लघु १।४।१०॥ संयोगे गुरु १।४।११॥** संयोगे परे ह्रस्वं गुरु स्यात् ॥ **दीर्घं च ७।४।१७ ॥** गुरु स्यात् ॥ **पुगन्तलघूपधस्य च ७।३।८६ ॥** पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः सार्वधातुकार्धधातुकयोः । धात्वादेरिति सः । सेधति । षत्वम् । सिषेध ॥ **असंयोगाल्लिट् कित् १।२।५ ॥** असंयोगात्परोऽपि लिट् कित् स्यात् । सिषिधतुः । सिषिधुः । सिषेधिथ । सिषिधथुः । सिषिध । सिषेध । सिषिधिव । सिषिधिम । सेधिता । सेधतु । असेधत् । सेधेत् । सिध्यात् । असेधीत् । असेधिष्यत् । एवम्—चिती संज्ञाने ॥ ४ ॥ शुच शोके ॥ ५ ॥ गद व्यक्तायां वाचि ॥ ६ ॥ गदति ॥ **नेर्गदनदपतपदघुमास्यति**

---

—त्वमेव । दन्त्यशब्देन केवलदन्त्यो गृह्यते, इति 'स्वृ स्वाद' प्रभृतीनां सोपदेशत्वमेवेति दिक्॥१"ह्रस्वं लघु" इत्यतः'ह्रस्वम्' इति वर्तते ॥ २"संयोगे गुरु" इत्यतः 'गुरु' इति वर्तते ॥ ३ "अङ्गस्य" इत्यधिक्रियते । "मिदेर्गुणः" इत्यतः 'गुणः' इति वर्तते "सार्वधातुकार्धधातुकयोः" इति च । गुणपदश्रुत्या च षष्ठ्यन्तम् इकः इति पदमुपतिष्ठते । इति सकलमभिप्रेत्याह—**अङ्गस्येक** इत्यादि ॥ ४ "सार्वधातुकमपित्" इत्यतः 'अपित्' इति वर्तते ॥ ५ यद्यपि परत्वाद् गुणो न्याय्यः, तथापि कृतेऽपि गुणे, अकृतेऽपि गुणे कित्त्वं प्राप्नोत्येवेति कृताकृतप्रसंगित्वेन नित्यत्वात्परमपि गुणं बाधित्वा कित्त्वमेव भवति । जाते च कित्त्वे "क्ङिति च"इति गुणनिषेधः॥६ उपसर्गयोगे—नि—प्रति—षिध=वारणे। यथा—शिष्यमकार्यात् प्रतिषेधति । प्र=प्रसिद्धे । यथा—प्रसिद्धः ॥ ७ संज्ञानं=चैतन्यम्—मूर्च्छाद्युत्तरकालिकं ज्ञानम् । ईकारः 'श्वीदितो निष्ठायाम्' इति निष्ठायामिण्निषेधार्थः । चित्तम् ॥ ८ स्मृत्वा क्लेशः शोकः ॥ ९ अत्र 'अट्कुप्वाङ्—' इति सूत्रस्थम् अङ्—

**हन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ७ । ४ । १७ ॥** उपसर्गस्थान्निमित्तात्परस्य नेर्णो गदादिषु परेषु । प्रणिगदति ॥ **कुहोश्चुः ७ । ४ । ६२ ॥** अभ्यासकवर्गहकारयोश्चवर्गादेशः॥ **अत उपधायाः ७।२।११६॥** उपधाया अतो वृद्धिः स्यात् । ञिति णिति च प्रत्यये परे । जगाद ॥ जगदतुः । जगदुः । जगदिथ । जगदथुः । जगद ॥ **णलुत्तमो वा ७।१।९१ ॥** उत्तमो णल् वा णित्स्यात् । जगाद, जगद । जगदिव । जगदिम । गदिता । गदिष्यति । गदतु । अगदत् । गदेत् । गद्यात् ॥ **अतो हलादेर्लघोः ७ । २ । ७ ॥** हलादेर्लघोरकारस्य वृद्धिर्वेडादौ परस्मैपदे सिचि । अगादीत्, अगदीत् । अगदिष्यत् ॥

---

-ग्रहणं व्यवायेऽपीतिपदं चानुवर्तते । तेन अकारादिव्यवधानेऽपि णत्वम् । प्रण्यगदत्, प्रण्यागदत् । एवं च "नेर्गदादिष्वड्व्यवाय उपसंख्यानं कर्तव्यम् । आडा चेति वक्तव्यम् ।" इति वार्तिकद्वय न कर्तव्यं भवति। यद्यपि तत्र सूत्रे रेफषकारयोर्निमित्तयोर्निमित्तिनश्च नकारस्य अडादिव्यवाय आश्रितस्तथापि यत्र यन्निमित्तं निमित्ती च तयोरप्यडादिव्यवाये णत्वम् । अस्ति चात्र गदादेर्निमित्तत्वं नेर्निमित्तित्वमिति स्पष्टं भाष्यकैयटयोः ॥ १ "रषाभ्यां नो णः-" इति वर्तते "उपसर्गादसमासेऽपि" इत्यतः 'उपसर्गात्' इति चात आह-**उपसर्गस्थादिति** ॥ २ "अत्र लोपोऽभ्यासस्य" इत्यतः 'अभ्यासस्य' इति वर्तते ॥ ३ बाह्यप्रयत्नसाम्यात् कस्य चः, खस्य छः, गस्य जः, घस्य झः, नासिकास्थानसाम्यात् ङस्य ञः, बाह्यप्रयत्नसाम्यादेव च हस्य झ इति बोध्यम् ॥ ४ "मृजेर्वृद्धिः" इत्यतः 'वृद्धिः' इति "अचो ञ्णिति" इत्यतो 'ञ्णिति' इति च वर्ततेऽत आह-**वृद्धिरित्यादि** ॥ ५ "गोतो णित्" इत्यतो 'णित्' इति वर्तते ॥ ६ "सिचि वृद्धिः परस्मैपदेषु" इति "नेटि" इत्यतः 'इटि' इति "ऊर्णोते-"-

णद अव्यक्ते शब्दे ॥ ७ ॥ **णो[2] नः ६ । १ । ६५** ॥ धात्वादेर्णस्य नः । णोपदेशास्त्वनर्द्नाटिनाथ्नाध्नन्दनक्कनॄनृतः ॥ **उपसर्गादसमासेऽपि णोपदेशस्य ८ । ४ । १४** ॥ उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः समासेऽसमासेऽपि । प्रणदति । प्रणिनदति । नदति । ननाद ॥ **अत एकहल्मध्येऽनादेशादेर्लिटि ६ । ४ । १२०** ॥ लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्यस्यात एत्त्वमभ्यासलोपश्च किति लिटि । नेदतुः । नेदुः ॥ **थलि च सेटि ६ । ४ । १२१** ॥ प्रागुक्तं स्यात् । नेदिथ । नेदथुः । नेद । ननाद, ननद । नेदिव । नेदिम । नदिता । नदिष्यति । नदतु । अनदत् । नदेत् । नद्यात् । अनादीत्, अनदीत् । अनदिष्यत् ॥ टुनदि समृद्धौ ॥ ८ ॥ **आदि-**

---

–इत्यतः 'विभाषा' इति च वर्ततेऽत आह–**वृद्धीत्यादि** ॥ १ अव्यक्तः शब्दो घण्टानद्यादीनाम् । २ अत्र 'उपदेश' इत्यनुवर्तते, तेन 'णकारीयति' इत्यादिणकारादिनामधातौ न दोषः ॥ ३ "धात्वादेः षः सः" इत्यतः 'धात्वादेः' इति वर्तते ॥ ४ ननु पाणिनिना कृतो णोपदेशपाठः सम्प्रति लेखादिप्रमादेन परिभ्रष्टः, बहुषु स्थलेषु णकारस्थाने नकारस्य, नकारस्थाने णकारस्योपलम्भादिति इदानीन्तनैरयं धातुर्णोपदेशः अयं च नोपदेश इति कथं विज्ञेयमिति जिज्ञासायां व्यवस्थामाह–**णोपदेशास्त्विति** ॥ एभ्योऽष्टाभ्यो भिन्ना णोपदेशाः, इमे त्वष्टौ नोपदेशा इति निर्णेतव्यमिति भावः ॥ ५ "रषाभ्यां नो णः–" इति वर्तते ॥ ६ समासोदाहरणं–'प्रणाम' इत्यादि ॥ ७ "घ्वसोरेत्–" इत्यत 'एद् अभ्यासलोपश्च' इति वर्तते, "गमहनजनखनघसाम्–" इत्यतः 'क्ङिति' इति च । तत्र लिटो ङित्त्वस्यासम्भवात् 'किति' इत्येवान्वेतीत्याह–**एत्त्वमिति** ॥ ८ 'टु' शब्दः–

**ञिटुडवः १।३।५ ॥** उपदेशे धातोराद्या एते इतः स्युः ॥ **इदितो नुम् धातोः ७।१।५८ ॥** नन्दति । ननन्द । नन्दिता । नन्दिष्यति । नन्दतु । अनन्दत् । नन्देत् । नन्द्यात् । अनन्दीत् । अनन्दिष्यत् ॥ अर्च पूजायाम् ॥९॥ अर्चति ॥ **तस्मान्नुड् द्विहलः ७।४।७१ ॥** द्विहलो धातोर्दीर्घीभूतात्परस्य नुट् स्यात् । आनर्च । आनर्चतुः । अर्चिता । अर्चिष्यति । अर्चतु । आर्चत् । अर्चेत् । अर्च्यात् । आर्चीत् । आर्चिष्यत् ॥ व्रज गतौ ॥१०॥ व्रजति । वव्राज । व्रजिता । व्रजिष्यति । व्रजतु । अव्रजत् । व्रजेत् । व्रज्यात् ॥ **वदव्रजहलन्तस्याचः ७।२।३ ॥** एषामचो वृद्धिः सिचि परस्मैपदेषु । अव्राजीत् । अव्रजिष्यत् ॥ कटे वर्षावरणयोः ॥ ११ ॥ कटति । चकाट । चकटतुः । कटिता । कटिष्यति । कटतु । अकटत् । कटेत् । कट्यात् । **ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ७।२।५॥** हमयान्तस्य

---

—'ट्वितोऽथुच्' इत्यथुजर्थः । नन्दथुः ॥ १ "भूवादयः—" इत्यस्माद् 'धातु' पदम्, "उपदेशेऽज्—" इत्यतः 'उपदेशे इत्' इति चानुवर्ततेऽत आह—**उपदेशे** इत्यादि ॥ २ "इदिदन्तस्य नुम् धातोरन्त इत्यनुवर्तनात् । स्कुन्दते वन्दते सर्वं चक्षिङादौ न दूषणम् ॥" तेन 'ञिकारीयति' इत्यादौ न दोषः ॥ ३ 'तस्मात्' इति तच्छब्देन "अत आदेः" इति सूत्रविहितदीर्घादेशो गृह्यतेऽत आह—**दीर्घीभूतादिति** ॥ अत्र द्विपदमनेकोपलक्षणम् । तेन ऋच्छधातोर्गुणादेशे कृते रेफचकारच्छकाररूपव्यञ्जनत्रयवत्त्वेऽपि 'आनर्च्छ' इत्यादौ नुट्सिद्धिः । ४ "सिचि वृद्धिः परस्मैपदेषु" इति वर्ततेऽत आह—**वृद्धिरित्यादि** ॥ ५ 'वृषु सेचने' इति स्मरणात् वर्षणं वर्ष=सेचनानुकूलो व्यापार इत्यर्थः । आवरणम्=आच्छादनानुकूलो व्यापारः । एकारो वृद्धिनिषेधार्थः ॥ ६ 'अकट् इस्-

क्षणा देर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्नेडादौ सिचि । अकटीत् । अकटिष्यत् ॥ गुपू रक्षणे ॥ १२ ॥ **गुपूधूपविच्छिपणिपनिभ्य आयः ३।१।२८ ॥** एभ्य आयः प्रत्ययः स्यात् स्वार्थे ॥ **सनाद्यन्ता धातवः ३।१।३२ ॥** सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञकाः । धातुत्वाल्लडादयः । गोपायति ॥ **आयादय आर्धधातुके वा ३।१।३१ ॥** आर्धधातुकविवक्षायामायादयो वा स्युः । ( कास्यनेकाच आम् वक्तव्यः ) । लिटि आस्कासोराम्विधानान्मस्य नेत्त्वम् ॥ **अतो लोपः ६।४।४८ ॥** आर्धधातुकोपदेशे यददन्तं तस्यातो लोप आर्धधातुके ॥ **आमः २।**

---

–ईत् ' इति स्थिते हलन्तलक्षणाया 'नित्यवृद्धेः 'नेटि' इति निषेधं बाधित्वा 'अतो हलादेः–' इति वैकल्पिकवृद्धौ प्राप्तायां सूत्रम्–**ह्रम्यन्तेति** ॥ १ "सिचि वृद्धिः परस्मैपदेषु" इति "नेटि" इति चात आह–**वृद्धिर्नेत्यादि** ॥ २ "प्रत्ययः" इत्यधिक्रियते । 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति' ॥ ३ सनादयो द्वादश । "सन्क्यच्काम्यच्क्यङ्क्यषोऽथाचारक्विब्णिज्यङौ तथा । यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः ॥" इत्युक्तेः । ४ स्यतास्याद्यन्तानां धातुत्ववारणाय "भूवादयो धातवः" इत्युत्तरम् "सनाद्यन्ताः–" इति सूत्रमकृत्वा "कमेर्णिङ्" इत्युत्तरमेवेदं सूत्रं कृतमित्याह–**कमेर्णिङन्ता** इति ॥ अत्र'भूवादयश्च' इत्यस्य करणे "अनुदात्तङितः–" इत्यादौ धातुपदोच्चारणं कर्तव्यं स्यात् ॥ ५ 'कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थम्' इति वार्तिकस्य 'प्रत्ययग्रहणमपनीयानेकाज्ग्रहणं कर्तव्यम्' इत्यर्थे भट्टोजिदीक्षितोक्ते स्वस्यानास्थां सूचयितुं तदनुक्त्वा गुरुलिखितां वार्तिकानुपूर्वीं लिखति–**कास्यनेकेति** ॥ ६ मकारस्येत्संज्ञायाम् आकारद्वयस्य सवर्णदीर्घे सत्याम्विधानं व्यर्थमेव स्यादिति भावः॥वस्तुतस्तु'आमोऽमित्त्वमदन्तत्वात्'इत्येव वरम् ॥७"आर्धधातुके" इत्यधिकृतम् । "अङ्गस्य" इति च । तद्विशेषणत्वेन तदन्तविधिरित्याह–

४।८१ ॥ आमः परस्य लुक्[1] ॥ **कृञ् चानुप्रयुज्यते लिटि ३।१।४०** ॥ आमन्ताल्लिट्पराः[2] कृभ्वस्तयोऽनुप्रयुज्यन्ते । तेषां द्वित्वादि ॥ **उरत् ७।४।६६** ॥ अभ्यासऋवर्णस्यात् प्रत्यये[3] । रपरः । हलादिः शेषः । वृद्धिः । गोपायाञ्चकार । द्वित्वात्परत्वाद्यणि प्राप्ते–। **द्विर्वचनेऽचि १ । १ । ५९** ॥ द्वित्वनिमित्तेऽचि अच आदेशो न द्वित्वे कर्तव्ये । गोपायाञ्चक्रतुः ॥ **एकाच उपदेशे-**

---

**–अदन्तमिति** ॥ अलोन्त्यपरिभाषालब्धमर्थमाह–**तस्यात** इति ॥ १ "ण्यक्षत्रियार्ष–" इत्यतः 'लुक्' इति वर्तते ॥ २ "कास्प्रत्ययात्–" इत्यतः '**आम्**' इति पञ्चमीविपरिणतं वर्तते । अत्र 'कृञ्' पदं न धातुपरम् । "आम्प्रत्ययवत्–" इति सूत्रे कृञ्ग्रहणसामर्थ्यात्, किंतु प्रत्याहारपरमेवेति, प्रत्याहारघटकाश्च **कृभ्वस्तय** एव । अनुप्रग्रहणं व्यवहितविपर्यस्तप्रयोगनिवृत्त्यर्थमिति **वार्तिकमतम्** । भाष्यकारस्तु व्यवहितप्रयोगमपीच्छति ॥ तन्मते 'उक्षां प्रचक्रुर्नगरस्य मार्गान्' 'बिभयां प्रचकारासौ' इति भट्टिप्रयोगः 'प्रभ्रंशयां यो नहुष चकार' 'तं पातयां प्रथममास' इत्यादिप्रयोगा अपि साधव एवेति बोध्यम् । इति सकलमभिप्रेत्याह–**आमन्तादिति** ॥ ३ "अत्र लोपः–" इत्यतः 'अभ्यासस्य' इति वर्तते । "अङ्गस्य" इत्यधिक्रियते । तस्य प्रत्ययाक्षेपकत्वमित्याह–**अभ्यासेति** ॥ ४ **यणीति** वृद्धेरप्युपलक्षणम् ॥ ५ "स्थानिवत्–" इत्यतः आदेशः इति "अचः परस्मिन्–" इत्यतः 'अचः' इति "न पदान्त–" इत्यतः 'न' इति वर्तते । द्विर्वचनशब्दे च तन्त्रमावृत्तिर्वा इत्याह–**द्वित्वेति** ॥ ननु अत्रातुसो द्वित्वनिमित्तत्वेऽपि अकारस्य तत्त्वाभावेन यण् स्यादेव । सूत्रं तु 'चक्रे' इत्यादौ सार्थकमिति चेन्नैवम् । इह निमित्तशब्देन साक्षात् समुदायघटकतया वा द्वित्वप्रयोजकस्य सर्वस्यापि ग्रहणात् । तदुक्तमत्र भाष्ये–"तद्भावभावितमात्रेणेह निमित्तत्वम्" इति । तस्य भावस्तद्भावः=तदीयसत्ता । तद्भावे सति भवति तच्छीलस्तद्भावभावी तस्य भावस्तद्भावभावितेत्यर्थः ॥

ऽनुदात्तात् ७ । २ । १० ॥ उपदेशे[1] यो धातुरेकाजनुदात्तश्च तत आर्धधातुकस्येण्न । ऊदॄदन्तैर्यौतिरुक्ष्णुशीस्नुनुक्षुश्विडीङ्श्रिभिः । वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः[2] ॥ कान्तेषु शक्लेकः । चान्तेषु पच्मुच्रिच्वच्विच्सिचः षट् । छान्तेषु प्रच्छेकः । जान्तेषु त्यज्निजिर्भज्भञ्ज्भुज्भ्रस्ज्मस्ज्यज्युज्रुज्रञ्ज्विजिर्स्वञ्ज्सञ्ज्सृजः पञ्चदश । दान्तेषु अद् क्षुद् खिद् छिद् तुद् नुद् पद्यभिद्विद्यतिर्विनद्विन्द्शद्सद्स्विद्यस्कन्द्हदः षोडश । धान्तेषु क्रुध्क्षुध्बुध्यबन्ध्युध्रुध्राध्व्यध्साध्शुध्सिध्या एकादश । नान्तेषु मन्यहनौ द्वौ । पान्तेषु आप्छुप्क्षिप्तप्तिप्तृप्यदृप्यलिप्लुप्वप्शप्स्वप्सृपस्त्रयोदश । भान्तेषु यभ्रभ्लभस्त्रयः । मान्तेषु गम्नम्यम्रमश्चत्वारः । शान्तेषु क्रुश्दंश्दिश्दृश्मृश्रिश्रुश्लिश्विश्स्पृशो दश । षान्तेषु कृष्त्विष्तुष्द्विष्दुष्पुष्यपिष्विष्शिष्शुष्श्लिष्या एकादश ॥ सान्तेषु घस्वसती द्वौ । हान्तेषु दह्दिह्दुह्नह्मिह्रुह्लिह्वहोऽष्टौ । अनुदात्ता हल-

---

१ ‘उपदेशे’ इति देहलीदीपकन्यायेनोभयान्वयि पूर्वान्वयफलं **बिभित्सति चिकीर्षतीत्यादि** ; उत्तरान्वयफलं **कर्तुं गन्तुमित्यादि** । अत्र नित्स्वरेणाद्युदात्तत्वेऽपि निषेधसिद्धिः ॥ “नेड् वशि–” इत्यतः ‘न, इट्’ इति वर्तते । सोऽयं निषेधः ‘पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्’ इति न्यायेन “आर्धधातुकस्येड्वलादेः” इत्यस्यैव बाधकः, न तु “तीषसह–” इत्यादिविहितस्येटः इत्यभिप्रेत्याह–**उपदेश** इति ॥ २ ननु के धातवोऽनुदात्ता इति जिज्ञासायामजन्तेषु तावद्व्यवस्थामाह–**ऊदॄदन्तैरिति** ॥ अजन्तेषु धातुषु ये धातवः एकाचः ते निहताः=अनुदात्ताः स्मृताः=उक्ताः । नन्वेवं भूवृप्रभृतीनामप्यनुदात्तत्वापत्तिरत आह–**ऊदॄदन्तैर्विनेति** ॥ दीर्घोकारान्तान् दीर्घऋकारान्तांश्च–

न्तेषु धातवस्त्र्यधिकं शतम् ॥ गोपायाञ्चकर्थ । गोपायाञ्चक्रथुः । गोपायाञ्चक्र । गोपायाञ्चकार, गोपायाञ्चकर । गोपायाञ्चकृव । गोपायाञ्चकृम । गोपयाम्बभूव । गोपायामास । जुगोप । जुगुपतुः । जुगुपुः ॥ **स्वरतिसूतिसूयतिधूञूदितो वा ७ । २ । ४४ ॥** स्वरत्यादेरूदितश्च परस्य [३]वलादेरार्धधातुकस्येड् वा स्यात् । जुगोपिथ, जुगोप्थ । गोपायिता, गोपिता, गोप्ता । गोपायिष्यति, गोपिष्यति,

---

-वर्जयित्वेत्यर्थः । नन्वेवमपि युप्रभृतीनामनुदात्तत्वापत्तिस्तदवस्थैवेत्यत आह-**यौत्यादिभिर्विनेति** ॥ ननु तर्हि वृङ्वृञोरनुदात्तत्वं न वारितमत आह-**वृङ्वृञ्भ्यां विनेति** ॥ एवं च कारिकोक्तधातून् विहाय सर्वे एव तदतिरिक्ता एकाचो धातवोऽनुदात्ता इति फलति । हलन्तेषु तामाह-**कान्तेष्वित्यादिना** ॥ १ **धातवस्त्र्यधिकमिति** ॥ विन्दतेरपि ग्रहणादिति भावः । अत्रेदं बोध्यम्-"तुदादौ मतभेदेन स्थितौ यौ च चुरादिषु । तृप्-दृपी, तौ वारयितुं श्यना निर्देश आदृतः ॥ स्विद्यपद्यौ सिध्यबुध्यौ मन्यपुष्यश्लिषः श्यना । वसिः शपा,लुका यौतिर्निर्दिष्टोऽन्यनिवृत्तये ॥"इति ॥ २"भवन्ति संख्यया नूनं शेषाः सेटः स्मृता बुधैः॥" इत्युत्तरार्धं पूरयितव्यम् । अत्रेदमवधेयम्-'एक' संख्यामारभ्य अष्टादश संख्यापर्यन्तं सर्वाः संख्याः संख्येये(संख्यापरिच्छेद्ये द्रव्ये) वर्तन्ते इति सामानाधिकरण्येनैव तासां वृत्तिर्न वैयधिकरण्येन । यथा-एको विप्रः, दश विप्रा इत्येवमेव प्रयोगा भवन्ति नतु 'एको विप्रः' 'दश विप्राणाम्' इत्यादिप्रकारेण । ऊनविंशत्यादिकास्तु सर्वाः संख्याः संख्येये संख्यायां च वर्तन्ते । तत्र दशाद्या नित्यबहुवचनान्ता विशेष्यलिङ्गाश्च भवन्ति । विंशत्याद्या नवनवत्यन्तास्तु संख्याः सदैकवचनान्ता नित्यस्त्रीलिगाश्च भवन्ति । शतसहस्रादयस्तु सदैकवचनान्ता नित्यनपुंसकलिङ्गाश्च भवन्ति । तथा चोक्तम्-"अष्टादशभ्य एकाद्याः संख्याः संख्येयगोचराः । ऊनविंशत्यादिकास्तु सर्वाः संख्येयसंख्ययोः ॥ विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः ॥" इत्यादि ॥ ३ "आर्धधातुकस्येड्वलादेः" इति वर्ततेऽत आह-

गोप्स्यति । गोपायतु । अगोपायत् । गोपायेत् । गोपाय्यात गुप्यात् । अगोपायीत् ॥ **नेटि** ७।२।३ ॥ इडादौ सिचि[1] हलन्तस्य वृद्धिर्न । अगोपीत्, अगौप्सीत् ॥ **झलो झलि** ८।२।२६ ॥ झलः परस्य सस्य[2] लोपो झलि । अगौप्ताम् । अगौप्सुः । अगौप्सीः । अगौप्तम् । अगौप्त । अगौप्सम् । अगौप्स्व । अगौप्स्म । अगोपायिष्यत्, अगोपिष्यत्, अगोप्स्यत् ॥ क्षि क्षये ॥ १३ ॥ क्षयति । चिक्षाय । चिक्षियतुः । चिक्षियुः । एकाच इति निषेधे प्राप्ते-। **कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि** ७।२।१३ ॥ क्रादिभ्य[3] एव लिट इण्न स्यादन्यस्मादनिटोऽपि[4] स्यात् ॥ **अचस्तास्वत्थल्यनिटो नित्यम्** ७।२।६१ ॥ उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततस्थल इण्[5] न ॥ **उपदेशेऽत्वतः** ७।२।६२ ॥ उपदेशे[6]ऽकारवत-

---

-**वलादेरिति** ॥ १ "सिचि वृद्धिः परस्मैपदेषु" इति "वदव्रज-" इत्यतः 'हलन्तस्याचः' इति वर्ततेऽत आह-**सिचीत्यादि** ॥ २ "संयोगान्तस्य-" इत्यतः 'लोपः' इति "रात्सस्य" इत्यतः 'सस्य' इति वर्ततेऽत आह-**सस्येत्यादि** ॥ ३ " यः प्रकृत्याश्रयो ह्यत्र प्रत्ययाश्रय इत्यपि । लिटि चेत्तर्हि क्रादिभ्य एवान्यत्र तु नेष्यते ॥" इति बोध्यम् । ४ " नेड् वशि-" इत्यतः ' न इट् ' इति वर्तते । अष्टानामप्येषामनुदात्तत्वादेवेड्निषेधे सिद्धे पुनरिड्निषेधविधानं नियमार्थमेवेति नियमफलमन्यव्यावृत्तिरेवेति तां दर्शयति-**अन्यस्मादिति** ॥ ५ "न वृद्भ्यः-" इत्यतः ' न ' इति, "गमेरिट्-" इत्यतः 'इट्' इति वर्तते । 'तास्वत्' सप्तम्यन्ताद् वतिः । "एकाच उपदेशे-" इति निषेधस्य "कृसृभृवृ-" इति नियमेन बाधात् इट्प्राप्तौ निषेधविध्यर्थमिदमित्याह-**थल इण् नेति** ॥ ६ "अचस्तास्वत्-" इत्यतः ' तास्वत्थल्यनिटो नित्यम् ' इति वर्ततेऽत आह-

स्तासौ नित्यानिटः परस्य थल इण् न स्यात् ॥ **ऋतो भारद्वाजस्य ७।२।६३ ॥** तासौ नित्यानिट ऋदन्तादेव थलो नेट् भारद्वाजस्य मते । तेन[1] अन्यस्य स्यादेव । अयमत्र[2] संग्रहः—"अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम् । ऋदन्त ईदृङ्नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत् ॥" चिक्षयिथ, चिक्षेथ । चिक्षियथुः । चिक्षिय । चिक्षाय, चिक्षय । चिक्षियिव । चिक्षियिम । क्षेता । क्षेष्यति । क्षयतु । अक्षयत् ॥ क्षयेत् । **अकृत्सार्वधातुकयोर्दीर्घः ७।४।२५ ॥** अजन्ताङ्गस्य[3] दीर्घो यादौ प्रत्यये न तु कृत्सार्वधातुकयोः । क्षीयात् ॥ **सिचि वृद्धिः परस्मैपदेषु ७।२।१॥** इगन्ताङ्गस्य वृद्धिः स्यात् परस्मैपदे सिचि । अक्षैषीत् । अक्षेष्यत् ॥ तप संतापे ॥ १४ ॥ तपति । तताप । तेपतुः । तेपुः । तेपिथ, ततप्थ । तेपिव । तेपिम । तप्ता । तप्स्यति । तपतु । अतपत् । तपेत् । तप्यात् । अताप्सीत् । अताप्ताम् । अतप्स्यत् ॥ क्रमु पादविक्षेपे ॥ १५ ॥ **वा**

---

**–तासौ नित्येत्यादि** ॥ १ "अचस्तास्वत्–" इत्यतः 'तास्वत्थल्यनिटो नित्यम्' इति वर्तते । ऋदन्तस्याजन्तत्वाव्यभिचारादेव सिद्धौ नियमार्थमिदमिति नियमफलं त्वन्यव्यावृत्तिरित्याह–**तेनान्यस्य स्यादेवेति** ॥ २ चतुर्णां सूत्राणामर्थस्य संग्रह इत्यर्थः । संग्रहश्लोकार्थस्तु "लिटि क्राद्यन्यः सेड् भवेत् । तासि अनिड् यः अजन्तः अथवा अकारवान् अयं थलि वेट् । ईदृक् तासि अनिट् ऋदन्तः थलि नित्यानिट्" इति बोध्यः॥३ "अङ्गस्य" इत्यधिक्रियते । तेन 'प्रत्यये' इति लभ्यते । दीर्घपदश्रुत्या 'अच' इति च । "अयङ् यि" इत्यतः 'यि' इति वर्तते । तथा च विशेषणत्वात् तदन्ततदादिविधी इत्याह–**अजन्ताङ्गस्येति** ॥ ४ "अङ्गस्य" इत्यधिक्रियते । वृद्धिपदेन च 'इकः' इद्दि षष्ठ्यन्तं पदमुपतिष्ठते । विशेषणे तदन्त-

**भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ३।१।७०॥** एभ्यः श्यन्वा कर्त्रर्थे सार्वधातुके परे । पक्षे शप् ॥ **क्रमः परस्मैपदेषु ७।३।७८॥** क्रमो दीर्घः परस्मैपदे शिति । क्राम्यति, क्रामति । चक्राम । क्रमिता । क्रमिष्यति । क्राम्यतु, क्रामतु । अक्राम्यत्, अक्रामत् । क्राम्येत्, क्रामेत् । क्रम्यात् । अक्रमीत् । अक्रमिष्यत् ॥ पा पाने ॥ १६ ॥ **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशद-सदां पिबजिघ्रधमतिष्ठमनयच्छपश्यच्छेधौशीयसीदाः ७।३।७८॥** पादीनां पिबादयः स्युरित्संज्ञकशकारादौ प्रत्यये परे । पिबादेशोऽदन्तस्तेन न गुणः । पिबति ॥ **आत औ णलः ७।१।३४॥** आदन्ताद्धातोर्णल औकारादेशः स्यात् । पपौ ॥ **आतो**

---

–विधिरित्याह–**इगन्ताङ्गस्येति** ॥ १ "सार्वधातुके यक्" इत्यतः 'सार्वधातुके' इति, "कर्तरि शप्" इत्यतः 'कर्तरि' इति, "दिवादिभ्य–" इत्यतः 'श्यन्' इति वर्ततेऽत आह–**श्यन्वेति** ॥ २ "शमामष्टानाम्–" इत्यतः 'दीर्घः' इति "ष्ठिवुक्लमुचमाम्–" इत्यतः 'शिति' इति वर्ततेऽत आह–**दीर्घ** इत्यादि ॥ ३ मान्तत्वान्न वृद्धिः । उपसर्गयोगे–आ=आक्रमणे, अति=अतिक्रमणे । यथा–शत्रुमाक्रामति, धर्ममतिक्रामति अतिक्रमते वा । सम्=सहगमने, निस्=निष्क्रमणे, धातुश्चाकर्मकः । यथा–मित्रैः संक्रामति, गृहान्निष्क्रामति । परा=पराक्रमे, प्र=उप=आरम्भे, उत्साहे वर्तते, आत्मनेपदी च भवति । यथा–युद्धे शूरा पराक्रमन्ते, ग्रन्थस्य प्रक्रमते उपक्रमते वा । अध्ययनाय प्रक्रमते उपक्रमते वा । एवम्–अनु=गमने, अभि=जये, अप=बहिर्गमने, परि=भ्रमणे–पर्यटने, इत्यादि ॥ ४ पानम्=द्रवद्रव्यस्य गलबिलाधःसंयोगानुकूलो व्यापारः ॥ ५ "ष्ठिवुक्लमु–" इति सूत्रात् 'शिति' इति वर्तते, तत्र च कर्मधारय एव तत्त्व । अङ्गाक्षिप्तप्रत्ययस्य विशेषणत्वेन तदादिपरमित्याह–**इत्संज्ञकशकारादाविति** ॥ ६ लघूपधगुण–

**लोप इटि च ६।४।६४ ॥** अजाद्योरार्धधातुकयोः क्किदिटोः परयोरातो लोपः । पपतुः । पपुः । पपिथ, पपाथ । पपथुः । पप । पपौ । पपिव । पपिम । पाता । पास्यति । पिबतु । अपिबत् । पिबेत् ॥ **एर्लिङि ६।४।६७ ॥** घुसंज्ञकानां मास्थादीनां च एत्वं स्यादार्धधातुके किति लिङि । पेयात् । गातिस्थेति सिचो लुक् । अपात् ॥ अपाताम् ॥ **आतः ३।४।११० ॥** सिज्लुकि आदन्तादेव झेर्जुस् ॥ **उस्यपदान्तात् ६।१।९६ ॥** अपदान्तादकारादुसि पररूपमेकादेशः । अपुः । अपास्यत् ॥ ग्लै हर्षक्षये ॥ १७ ॥ ग्लायति ॥ **आदेच उपदेशेऽशिति ६।१।४५ ॥** उपदेशे एजन्तस्य धातोरात्त्वं न तु शिति । जग्लौ । ग्लाता । ग्लास्यति । ग्लायतु । अग्ला-

---

–माशङ्क्य समाधत्ते–**अदन्त** इति ॥ अङ्गवृत्तपरिभाषा तु न लक्ष्यसंस्कारिकेति स्पष्टं भाष्ये ॥ १ "आर्धधातुके" इत्यधिक्रियते, "दीङो युट्–" इत्यतः 'अचि क्ङिति' इति वर्तते, विशेषणे तदादिविधिफलितमाह–**अजाद्योरिति** ॥ अजादौ क्ङिति आर्धधातुके, आर्धधातुके इटि चेत्यर्थः । इट आर्धधातुकत्वं तदवयवत्वाद् बोध्यम् ॥ २ द्वित्वात्परत्वाल्लोपे प्राप्ते 'द्विर्वचनेऽचि' इति निषेधः । द्वित्वे कृते आलोपः । थलि भारद्वाजनियमाद् वेट् । वमयोः क्रादिनियमादिट् ॥ ३ "आर्धधातुके इत्यधिक्रियते । "घुमास्थागापाजहातिसाम्–" इति वर्ततेऽत आह–**घुसंज्ञकानामित्यादि** ॥ ४ " झेर्जुस् " इति वर्तते । " सिजभ्यस्त–" इत्यनेनैव सिज्लुकि प्रत्ययलक्षणेन झेर्जुसि सिद्धे 'आत' इति सूत्रं व्यर्थं सत् नियमार्थमित्याह–**सिज्लुकीत्यादि** ॥ ५ "आद् गुणः" इत्यतः 'आत्' इति वर्तते, "एङि पररूपम्" इत्यतः 'पररूपम्' इति, "एकः पूर्वपरयोः" इति चात आह–**अकारादिति** ॥ ६ हर्षक्षयः=धातुक्षयः । ७ **शितीति** । इत्संज्ञकशकारादावित्यर्थः । तेन सेङः प्रणिमसे नैङः तत्रे इत्यादौ नैवात्त्वस्याप्रवृत्तिरिति भावः । 'शिति' इति–

यत् । ग्लायत् ॥ **वाऽन्यस्य संयोगादेः ६।४।६८ ॥** घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वार्धधातुके किति लिङि । ग्लेयात् ॥ ग्लायात् ॥ **यमरमनमातां सक् च ७।२।७३ ॥** एषां[२] सक् स्यादेभ्यः सिच इट् स्यात्परस्मैपदेषु । अग्लासीत् । अग्लास्यत् ॥ ह्वृ कौटिल्ये ॥ १८ ॥ ह्वरति ॥ **ऋतश्च संयोगादेर्गुणः ७।४।१० ॥** ऋदन्तस्य संयोगादेरङ्गस्य गुणो लिटि । उपधायां वृद्धिः । जह्वार । जह्वरतुः । जह्वरुः । जह्वर्थ[६] । जह्वरथुः । जह्वर । जह्वार, जह्वर । जह्वरिव । जह्वरिम । ह्वर्ता ॥ **ऋद्धनोः स्ये ७।२।७० ॥** ऋतो हन्तेश्च स्यस्येट्[७] । ह्वरिष्यति । ह्वरतु । अह्वरत् । ह्वरेत् ॥ **गुणोऽर्तिसंयोगाद्योः ७।४।२९ ॥** अर्तेः संयोगादेर्ऋदन्तस्य

---

—विषयसप्तमी, तेन ग्लायतीत्यादौ शबाद्युत्पत्तेः प्रागपि नात्त्वमित्यपि बोध्यम् ॥ १ "घुमास्थागापाजहातिसां हलि" इत्यतः 'घुमास्थागापाजहातिसाम्' इति "एर्लिङि" इति च वर्तते । अन्यस्य च गृह्यमाणघुमास्थादेरेवोपस्थितत्वात् इत्याह—**घुमास्थादेरिति** ॥ २ अग्ला स् ईत् इति स्थिते सूत्रम्—**यमेति** ॥ सकि ककार इत्, अकार उच्चारणार्थः, कित्त्वादन्त्यावयवः ॥ ३ इडत्त्यर्ति—" इत्यतः 'इट्' इति, "अञ्जेः सिचि" इत्यतः 'सिचि' इति, "स्तुसुधूञ्भ्यः" इत्यतः 'परस्मैपदेषु' इति वर्ततेऽत आह—**एषामित्यादि** ॥ ४ "अङ्गस्य" इत्यधिक्रियते । "दयतेर्दिगि—" इत्यतः 'लिटि' इति वर्तते, विशेषणे तदन्तविधिरित्यत आह—**ऋदन्तस्येत्यादि** ॥ ५ किदर्थमपीदम् 'अचो ञ्णिति' इति वृद्ध्यपेक्षया परत्वाण्णल्यपि भवतीति भावः ॥ ६ क्रादिनियमप्राप्तस्येटः 'अचस्तास्वत्—' इति 'ऋतो भारद्वाजस्य' इति च निषेधः । वमयोः क्रादिनियमादिट् ॥ ७ "इडत्त्यार्तिव्ययतीनाम्" इत्यतः 'इट्' इति वर्ततेऽत आह—**स्यस्येडिति** ॥

च गुणः स्याद्यकि यादावार्धधातुके लिङि च । ह्र्यात् । अह्वा-र्षीत् । अह्वरिष्यत् ॥ श्रु श्रवणे ॥ १९ ॥ **श्रुवः शृ च ३ । १ । ७४ ॥** श्रुवः शृ इत्यादेशः स्यात् श्नुप्रत्ययश्च । शृणोति ॥ **सार्व-धातुकमपित् १ । २ । ४ ॥** अपित्सार्वधातुकं ङिद्वत् । शृणुतः ॥ **हुश्नुवोः सार्वधातुके ६ । ४ । ८७ ॥** हुश्नुवोरनेकाचोऽसंयोग-पूर्वस्योवर्णस्य यण् स्यादचि सार्वधातुके । शृण्वन्ति । शृणोषि । शृणुथः । शृणुथ । शृणोमि ॥ **लोपश्चास्यान्यतरस्यां म्वोः ६।४।१०७॥** असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा म्वोः परयोः। शृण्वः । शृणुवः । शृण्मः, शृणुमः । शुश्राव । शुश्रुवतुः । शुश्रुवुः । शुश्रोथ । शुश्रुवथुः । शुश्रुव । शुश्राव, शुश्रव । शुश्रुव । शुश्रुम । श्रोता । श्रोष्यति । शृणोतु, शृणुतात् । शृणुताम् । शृण्वन्तु ॥

---

१ "रीङ् ऋतः" इत्यतः 'ऋत' इति "रिङ् शयग्लिङ्क्षु" इत्यतः 'शयक्-लिङ्क्षु' इति वर्ततेऽत आह-**यकीत्यादि** ॥ शप्रत्ययस्य त्वसम्भवान्नानुवृत्ति-रिति भावः ॥ २ "स्वादिभ्यः-" इत्यतः 'श्नुः' इति वर्ततेऽत आह-**श्नुप्रत्यय-श्चेति** ॥ ३ "गाङ्कुटादिभ्योऽञ्णिन्ङित्" इत्यतः 'ङित्' इति वर्ततेऽत आह-**ङिद्वदिति** ॥ ४ श्नोर्ङित्त्वाद् धातोर्न गुण इति भावः ॥ ५ 'शृणु+अन्ति' इति स्थिते अन्तेर्ङित्त्वात् श्नोर्गुणनिषेधे सति उवङि प्राप्ते सूत्रम्-**हुश्नुवोरिति** । हुधातोः श्नुप्रत्ययान्तस्यानेकाचोऽङ्गस्य चेत्यर्थः ॥ ६ "अचि श्नुधातु-" इत्यतः 'अचि' इति "इणो यण्" इत्यतः 'यण्' इति "एरनेकाचः-" इत्यतः 'अनेकाचो-ऽसंयोगपूर्वस्य' इति वर्ततेऽत आह-**अनेकाचोऽसंयोगेति** ॥ ७ वकारस्य ( वस्-प्रत्ययस्य) प्राथमिकत्वात्तदुच्चारणे "लोपो व्योः-" इति लोपापत्त्या सन्देहः स्यादिति विपरीतोच्चारणम् ॥ ८ "उतश्च प्रत्ययादसंयोगपूर्वात्" इति 'अस्य' इत्यनेन गृह्यतेऽत आह-**असंयोगपूर्वस्येति** ॥ ९ थलि वमयोश्च क्रादित्वान्नेट् ॥

**उतश्च प्रत्ययादसंयोगपूर्वात् ६।४।१०६॥** असंयोगपूर्वात्प्रत्ययोतो हेर्लुक्[1] । शृणु, शृणुतात् । शृणुतम् । शृणुत । गुणावादेशौ । शृणवानि । शृणवाव । शृणवाम । अशृणोत् । अशृणुताम् । अशृण्वन् । अशृणोः । अशृणुतम् । अशृणुत । अशृणवम् । अशृण्व, अशृणुव । अशृण्म, अशृणुम । शृणुयात् । शृणुयाताम् । शृणुयुः[3] । शृणुयाः । शृणुयातम् । शृणुयात । शृणुयाम् । शृणुयाव । शृणुयाम । श्रूयात् । अश्रौषीत् । अश्रोष्यत्[4] ॥ गम्लृ गतौ ॥ २० ॥ **इषुगमियमां छः ७ । ३ । ७७ ॥** एषां छः स्यात् शिति[6] । गच्छति[5] ॥ जगाम ॥ **गमहनजनखनघसां लोपः क्ङित्यनङि ६।४।९८॥** एषामुपधाया लोपोऽजादौ क्ङिति

---

१ "अतो हेः" "चिणो लुक्" इत्याभ्यां 'हेः, लुक्' इति वर्ततेऽत आह–**हेर्लुगिति** ॥ २ नित्यत्वादुकारलोपात्पूर्वम् आट्, इत्यपि बोध्यम् ॥ ३ "उस्यपदान्तात्" ॥ ४ उपसर्गयोगे-प्रति=आ=सम्–अङ्गीकारे, 'सम्' योगे धातुरकर्मकः आत्मनेपदी च भवति । यथा–पितुरादेशं प्रतिशृणोति, आशृणोति वा । वाचा संशृणुते । वि=प्रख्यातौ, विश्रुतः, प्रख्यात इति गम्यते ॥ ५ अत्र सूत्रे 'क्सस्याचि' इति सूत्रान्मण्डूकप्लुत्या 'अचि' इति सम्बध्यते । 'अजूरूपे शिति' इत्यर्थः । तेन इष्णातीष्यत्योर्नातिप्रसङ्गः । एवं च "इषेश्छत्वमहलि" इति वार्तिकं न कार्यमिति स्पष्टं भाष्ये । ततश्चात्र सूत्रे तुदादौ चोदित्पाठोऽनार्ष इति बोध्यम् ॥ ६ "ष्ठिवुक्लमुचमाम्–" इत्यतः 'शिति' इति वर्ततेऽत आह–**शितीति** ॥ ७ 'छे च' इति तुक् । ८ "अचि श्नुधातु–" इत्यतः 'अचि' इति वर्ततेऽत आह–**अजादाविति** ॥

न त्वङि ॥ जग्मतुः । जग्मुः । जगमिथ, जगन्थ । जग्मथुः । जग्म ॥ जगाम, जगम । जग्मिव । जग्मिम । गन्ता । **गमेरिट् परस्मैपदेषु ७।२।५८॥** गमेः परस्य सादेरार्धधातुकस्येट् स्यात् परस्मैपदेषु ॥ गमिष्यति । गच्छतु । अगच्छत् । गच्छेत् । गम्यात् ॥ **पुषादिद्युताद्यॢदितः परस्मैपदेषु ३।१।५५॥** श्यन्विकरणपुषादेर्द्युतादेर्ऌदितश्च परस्य च्लेरङ् परस्मैपदेषु ॥ अगमत् । अगमिष्यत् ॥

इति परस्मैपदिनः ॥

---

एध वृद्धौ ॥ १ ॥ **टित आत्मनेपदानां टेरे ३।४।७९॥** टितो लस्यात्मनेपदानां टेरेत्वम् । एधते ॥ **आतो ङितः ७।२।८१॥** अतः परस्य ङितामाकारस्य इय् स्यात् ॥ एधेते ।

---

१ "सेऽसिचि कृत-" इत्यतः 'से' इति, "आर्धधातुकस्येड्-" इत्यतः 'आर्धधातुकस्य' इति वर्ततेऽत आह- **सादेरार्धधातुकस्येत्यादि** ॥ अत्र परस्मैपदमात्मनेपदाभावे लाक्षणिकम् । 'न वृद्भ्यः-' इति सूत्रवत् । तेन सन्नन्तात् तृचि 'सञ्जिगमिषिता' इत्यत्रेट्सिद्धिः ॥ २ "च्लेः सिच्" इत्यतः 'च्लेः' इति, "अस्यतिवक्ति-" इत्यतः 'अङ्' इति वर्ततेऽत आह-**च्लेरिति** ॥ ३ उपसर्गयोगे-आ=गम्=आगमने, अधि=प्राप्तौ, सम्=सङ्गतौ, अनु=पश्चाद्गमने । अध्यनुयोगे सकर्मक एव, परम् आसम्योगे धातुरकर्मको भवति, सम्योगे आत्मनेपदी च । यथा-विद्यामधिगच्छति । गुरुमनुगच्छति । ग्रामादागच्छति । सभायां संगच्छते । एवम्-अव+गम्+ज्ञाने, उप+समीपगमने, निर्+बहिर्गमने, प्रत्या+प्रत्यागमने, पर्युद्+ऊर्ध्वोत्थाने, इत्यादि ज्ञेयम् ॥ ४ "लस्य" इत्यधिक्रियते ॥ ५ "अतो येयः" इत्यतः 'अतः' 'इय' इति वर्ततेऽत आह-**अतः परस्येति** ॥

एधन्ते ॥ **थासः से ३।४।८०॥** टितो[1] लस्य थासः से स्यात् ॥ एधसे । एधेथे । एधध्वे । अतो गुणे । एधे । एधावहे । एधामहे ॥ **इजादेश्च गुरुमतोऽनृच्छः ३।१।३६॥** इजादिर्यो धातुर्गुरुमाननृच्छत्यन्यस्तत आम्[2] स्याल्लिटि ॥ **आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य १।३।६३॥** आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो[3] बहुव्रीहिः । आम्प्रकृत्यर्[4] तुल्यमनुप्रयुज्यमानात् कृञोऽप्यात्मनेपदम् ॥ **लिटस्तझयोरेशिरेच् ३।४।८१॥** लिडादेशयोस्तझयोरेश् इरेजेतौ स्तः । एधाञ्चक्रे[5] । एधाञ्चक्राते । एधाञ्चक्रिरे । **एधाञ्चकृषे** । एधाञ्चक्राथे ॥ **इणः षीध्वंलुङ्लिटां धोऽङ्गात् ८।३।७८॥**

---

१ "टित आत्मनेपदानाम्—" इति वर्ततेऽत आह—**टितो लस्येति** ॥
२ "कास्प्रत्ययाद्—" इत्यतः 'आम्' 'लिटि' इति वर्ततेऽत आह—**आमित्यादि** ॥
३ बहुव्रीहिसमासो द्विधा—तद्गुणसंविज्ञानोऽतद्गुणसंविज्ञानश्च । यत्रान्यपदार्थीयवर्तिपदार्थरूपविशेषणानां क्रियान्वयितया सम्यग्ज्ञानं स तद्गुणसंविज्ञानः । अयं च प्रायस्तत्रैव भवति यत्र संयोगसमवायान्यतरसम्बन्धेन अन्यपदार्थे वर्तिपदार्थस्यान्वयः । यथा—लम्बकर्णमानयेत्यादि । यत्र हि अन्यपदार्थीयवर्तिपदार्थरूपविशेषणानां क्रियान्वयितया ज्ञानं न सोऽतद्गुणसंविज्ञानः । यथा—चित्रगुमानय । अत्रान्यपदार्थरूपस्य पुरुषस्यैव क्रिययान्वयो न पुनश्चित्राणां गवामपि । अतो नायं तद्गुणसंविज्ञानः किंतु अतद्गुणसंविज्ञानोऽयम् । प्रकृतेऽपि 'आम्प्रत्यय' शब्देन एधादिरेव गृह्यते न पुनरामपि इति भावः ॥ ४ "अनुदात्तङित:—" इत्यतः 'आत्मनेपदम्' इति वर्तते । बहुव्रीहिफलमाह—**आम्प्रकृत्येति** ॥ अयं भावः—आम्प्रकृतेरात्मनेपदित्वे आमन्तादात्मनेपदम् । उभयपदित्वे उभयपदित्वम्, परस्मैपदित्वे परस्मैपदमेवेति रीत्या आम्प्रकृत्या तुल्यमेव नतु तद्विपरीतमिति ॥
५ 'एधां कृ ए' इति स्थिते द्वित्वात्परत्वाद्यणि प्राप्ते 'द्विर्वचनेऽचि—' इत्यादि पूर्ववत् ॥

इण्णन्तादङ्गात्परेषां षीध्वंलुङ्लिटां धस्य ढः[1] स्यात् । एधाञ्चक्रे । एधाञ्चकृवहे । एधाञ्चकृमहे । एधाम्बभूव । एधामास । एधिता । एधितारौ । एधितारः । एधितासे । एधितासाथे ॥ **धि च ८ । २ । २५ ॥** धादौ प्रत्यये परे सस्य[2] लोपः ॥ एधिताध्वे ॥ **ह एति ७।४।५२ ॥** तासस्त्योः[3] सस्य हः स्यादेति परे ॥ एधिताहे । एधितास्वहे । एधितास्महे । एधिष्यते । एधिष्येते । एधिष्यन्ते । एधिष्यसे । एधिष्येथे । एधिष्यध्वे । एधिष्ये । एधिष्यावहे । एधिष्यामहे ॥ **आमेतः ३।४।९० ॥** लोटः[4] एकारस्याम् स्यात् । एधताम् । एधेताम् । एधन्ताम् ॥ **सवाभ्यां वामौ ३ । ४ । ९१ ॥** सवाभ्यां परस्य लोडेतः[5] क्रमाद्वामौ स्तः ॥ एधस्व । एधेथाम् । एधध्वम् । **एत ऐ ३।४।९३॥** लोडुत्तमस्य[6] एत ऐ स्यात् ॥ एधै[7] । एधावहै । एधामहै । आटश्च । ऐधत । ऐधेताम् । ऐधन्त । ऐधथाः । ऐधेथाम् । ऐधध्वम् । ऐधे । ऐधावहि । ऐधामहि ॥ **लिङः[8] सीयुट् ३ । ४ । १०२ ॥** सलोपः[9] । एधेत ।

---

–योज्यम् ॥ १ "अपदान्तस्य मूर्धन्यः" इत्यधिक्रियतेऽत आह–**ढ** इति ॥ २ "संयोगान्तस्य लोपः" "रात्सस्य" इत्यतः 'सस्य लोपः' इति वर्ततेऽत आह–**सस्य लोप** इति ॥ ३ "सः स्यार्धे–" इत्यतः 'सः' इति, "तासस्त्योः–" इति च वर्ततेऽत आह–**तासस्त्योरित्यादि** ॥ ४ "लोटो लङ्वत्" इत्यतः 'लोटः' इति वर्ततेऽत आह–**लोट** इति ॥ ५ "लोटो लङ्वत्" इत्यतः 'लोटः' इति "आमेतः" इत्यतः 'एतः' इति वर्ततेऽत आह–**लोडेत** इति ॥ ६ "लोटो लङ्वत्" "आडुत्तमस्य–" इत्यतः 'लोटः' 'उत्तमस्य' इति वर्ततेऽत आह–**लोडुत्तमस्येति** ॥ ७ आडुत्तमस्य पिच्च । आटश्च । वृद्धिरेचि ॥ ८ 'लिङादेशस्यात्मनेपदस्य सीयुडागमः स्यात् ।' टकार इत् । उकार उच्चारणार्थः ॥ ९ "लिङः सलोपोऽनन्त्यस्य" इत्यनेन सीयुट इति शेषः।–

एधेयाताम् ॥ **झस्य रन् ३।४।१०५॥** लिङो झस्य रन् स्यात्। एधेरन्[2]। एधेथाः। एधेयाथाम्। एधेध्वम् ॥ **इटोऽत् ३।४।१०६॥** लिङादेशस्य[3] इटोऽत्स्यात्॥ एधेय । एधेवहि । एधेमहि ॥ **सुट्-तिथोः ३।४।१०७॥** लिङस्तथोः सुट् ॥ यलोपः। आर्धधातुकत्वात्सलोपो न। ऐधिषीष्ट। एधिषीयास्ताम्। एधिषीरन्। एधिषीष्ठाः। एधिषीयास्थाम्। एधिषीध्वम्[6]। एधिषीय । एधिषीवहि। एधिषीमहि। ऐधिष्ट। ऐधिषाताम् ॥ **आत्मनेपदेष्वनतः ७।१।५॥** अनकारात्परस्यात्मनेपदेषु झस्य अदित्यादेशः स्यात्॥ ऐधिषत। ऐधिष्ठाः। ऐधिषाथाम्। ऐधिढ्वम्। ऐधिषि। ऐधिष्वहि। ऐधिष्महि। ऐधिष्यत। ऐधिष्येताम्। ऐधिष्यन्त। ऐधिष्यथाः। ऐधिष्येथाम्। ऐधिष्यध्वम्। ऐधिष्ये। ऐधिष्यावहि। ऐधिष्यामहि ॥ कमु कान्तौ ॥२॥ **कमेर्णिङ् ३।१।३०॥** स्वार्थे ॥ ङित्त्वात्तङ्। कामयते ॥ **अयामन्ताल्वा-**

---

-आद्गुणः यलोप इत्यपि बोध्यम् ॥ १ "लिङः सीयुट्" इत्यतो 'लिङः' इति वर्तते॥ २सीयुट्, सलोपः, आद्गुणः, यलोपः॥३"लिङः सीयुट्" इत्यतो 'लिङः' इति वर्तते ॥ ४ "लिङः सीयुट्" इत्यतो 'लिङः' इति वर्तते ॥ ५ सीयुट्-सुटोः प्रत्ययावयवत्वात् षत्वम् ॥ ६ इणः परत्वेऽपि इण्णन्तादङ्गात्परत्वं नास्ति । इटः प्रत्ययभक्तत्वात्। अतः 'इणः षीध्वम्–' इति ढत्वमत्र न भवति । लुङि ध्वमि तु इटो ध्वमसिज्भक्ततया सिजन्ताङ्गान्तर्भूतत्वेन इडन्तस्य इण्णन्ताङ्गत्वाद् भवत्येव ढत्वमिति बोध्यम् ॥ ७ "झोऽन्तः" "अदभ्यस्तात्" इत्याभ्यां 'झः' 'अद्' इत्यनुवर्तते ॥ ८ षष्ठ्यर्थे सप्तमी। आत्मनेपदावयवस्येत्यर्थः ॥ ९ कान्तिरिच्छा। उकारः क्त्वायामिड्विकल्पार्थः । कमित्वा, कान्त्वा । क्तक्तवतोस्तु 'यस्य विभाषा' इति निषेधात्–कान्तः, कान्तवान् ॥

**ल्येत्न्विष्णुषु ६।४।५५ ॥** आम् अन्त आलु आय्य इत्नु इष्णु एषु णेरयादेशः[1] स्यात् ॥ कामयाञ्चक्रे । अयादय इति णिङ् वा । चकमे चकमाते । चकमिरे । चकमिषे । चकमाथे । चकमिध्वे । चकमे । चकमिवहे । चकमिमहे । कामयिता । कामयितासे । कमिता । कामयिष्यते, कमिष्यते । कामयताम् । अकामयत । कामयेत । कामयिषीष्ट ॥ **विभाषेटः ८ । ३ । ७९ ॥** इणः[2] परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा ढः ॥ कामयिषीढ्वम् । कामयिषीध्वम् । कमिषीष्ट । कमिषीध्वम्[3] ॥ **णिश्रिद्रुस्रुभ्यः कर्तरि चङ् । ३।१।४८ ॥** ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ्[4] स्यात् कर्त्रर्थे लुङि परे ॥ अकामि अत् इति स्थिते—। **णेरनिटि ६।४।५१ ॥** अनिडादावार्धधातुके[5] परे णेर्लोपः स्यात् ॥ **णौ चङ्युपधाया ह्रस्वः ७।४।१॥** चङ्परे[6] णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात् ॥ **चङि ६।१।११ ॥** चङि परे अनभ्यासस्य[7] धात्ववयवस्यैकाचः प्रथमस्य द्वे स्तोऽजादेर्द्वितीयस्य ॥ **सन्वल्लघुनि चङ्परेऽनग्लोपे ।**

---

१ " णेरनिटि " इत्यतः ' णेः ' इति वर्ततेऽत आह—**णेरयादेश** इति ॥ २ "इणः षीध्वंलुङ्लिटां धोऽङ्गात्" इति वर्ततेऽत आह—**इण** इत्यादि ॥ ३ 'एधिषीध्वम्' इतिवत् न ढत्वम् । ४ "च्लेः सिच्" इत्यतः 'च्लेः' इति वर्ततेऽत आह—**च्लेरिति** ॥५ "आर्धधातुके" इत्यधिकृतम् । "अतो लोपः" इत्यतो 'लोपः' इति वर्ततेऽत आह—**आर्धधातुके** इत्यादि ॥ ६ " अङ्गस्य " इत्यधिकृतम् । णिपरकचङोऽसम्भवादाह—**चङ्पर** इत्यादि ॥ ७ " एकाचो द्वे प्रथमस्य " " अजादेर्द्वितीयस्य " " लिटि धातोः"— इत्यतः ' अनभ्यासस्य ' इति वर्तन्तेऽत आह—**अनभ्यासस्येति** ॥

७।४।९३ ॥ चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरः तस्य सनीव कार्यं स्याण्णावग्लोपेऽसति ॥ **सन्यतः ७।४।७९ ॥** अभ्यासस्यात इत् स्यात् सनि ॥ **दीर्घो लघोः ७।४।९४ ॥** लघोरभ्यासस्य दीर्घः स्यात् सन्वद्भावविषये ॥ अचीकमत । णिङभाव-पक्षे—( कमेश्च्लेश्चङ् वाच्यः ) । अचकमत । अकामयिष्यत, अक-मिष्यत ॥ अय गतौ ॥३॥ अयते ॥ **उपसर्गस्यायतौ ८।२।१९॥** अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात् ॥ प्लायते । पला-यते ॥ **दयायासश्च ३।१।३७ ॥** दय् अय् आस् एभ्य आम् स्याल्लिटि ॥ अयाञ्चक्रे । अयिता । अयिष्यते । अयताम् । आयत ।

---

१"अङ्गस्य" इत्यधिकृतम् । 'चङ्परे' इति बहुव्रीहिणा लब्धं 'णौ' इत्यावर्तते, एकम् अङ्गपदेनान्वेति, द्वितीयम् 'अनग्लोपे' इत्यनेन । "अत्र लोपः–" इत्यतः 'अभ्यासस्य' इति वर्ततेऽत आह–**चङ्परे णाविति** ॥ २ "अत्र लोपः–"इत्यतः 'अभ्यासस्य' इति " भृञामित् " इत्यतः 'इत्' इति वर्ततेऽत आह–**अभ्यास-स्येति** ॥ ३ " अत्र लोपोऽभ्यासस्य " " सन्वल्लघुनि " इत्याभ्याम् 'अभ्यासस्य' 'सन्वत्' इति वर्ततेऽत आह–**अभ्यासस्येति** ॥ ४ " कृपो रो लः" इत्यतः 'रो लः' इति वर्तते । 'निर्दुरोः' इति विशेषग्रहणेनैव सिद्धे 'उपसर्गस्य' इति सामान्यग्रहणसामर्थ्याद् 'येन नाव्यवधानं तेन व्यवहितेऽपि' इति एकवर्ण-व्यवधाने 'प्रअयते, पराअयते, परिअयते' इत्यत्रैव लत्वम् नतु 'प्रतिअयते' इत्यत्रा-नेकवर्णव्यवहितस्य रेफस्य इति । 'अयतिपरस्योपसर्गरेफस्य' इत्यर्थाङ्गीकारे सकलेष्ट-सिद्धिं मनसि निधायापि गुरुभक्तिप्रदर्शनाय 'प्रतिअयते' इत्यस्यानाभिधानकल्पनया गुरुभूतमपि व्याख्यानं गुरूक्तमेवाह–**अयतिपरस्योपसर्गस्येति** ॥ ५ प्र–परा-योगे अयधातोः पलायनमर्थः ॥ ६ "कास्प्रत्ययादाम्" इत्यतः 'आम्' 'लिटि' इत्यनुवर्ततेऽत आह–**आम् स्याल्लिटीति** ॥

अयेत । अयिषीष्ट । विभाषेटः । अयिषीढ्वम्, अयिषीध्वम् । आयिष्ट आयिढ्वम्, आयिध्वम् । आयिष्यत ॥ द्युत दीप्तौ ॥ ४ ॥ द्योतते ॥ **द्युतिस्वाप्योः सम्प्रसारणम् ७ । ४ । ६७ ॥** अनयोरभ्यासस्य सम्प्रसारणं स्यात् । सम्प्रसारणाच्च । हलादिः शेषः । दिद्युते ॥ **द्युद्भ्यो लुङि ४ । ३ । ९१ ॥** द्युतादिभ्यो लुङः परस्मैपदं[1] वा स्यात् ॥ पुषादीत्यङ् । अद्युतत्, अद्योतिष्ट । अद्योतिष्यत ॥ एवम्-श्विता वर्णे ॥ ५ ॥ ञिमिदा स्नेहने ॥ ६ ॥ ञिष्विदा स्नेहनमोचनयोः ॥ ७ ॥ मोहनयोरित्येके । ञिक्ष्विदा चेत्येके ॥ रुच[2] दीप्तावभिप्रीतौ च ॥ ८ ॥ घुट परिवर्तने[3] ॥ ९ ॥ शुभ दीप्तौ ॥ १० ॥ क्षुभ संचलने ॥ ११ ॥ णभ तुभ हिंसायाम् ॥ १२ ॥ १३ ॥ स्रंसु भ्रंसु ध्वंसु अवस्रंसने ॥ १४ ॥ १५ ॥ १६ ॥ ध्वंसु गतौ च ॥ स्रम्भु विश्वासे ॥ १७ ॥ वृतु वर्तने[6] ॥ १८ ॥ वर्तते । (ऋदुपधेभ्यो लिटः कित्वं गुणात् पूर्वविप्रतिषेधेन)॥ ववृते । वर्तिता ॥ **वृद्भ्यः स्यसनोः १।३।९२ ॥** वृतादिभ्यः पञ्चभ्यो वा[7] परस्मैपदं स्यात्स्ये सनि च ॥

---

१ "शेषात् कर्तरि" इत्यतः 'परस्मैपदम्' इत्यनुवर्तितव्यं आह-**परस्मैपदमिति ॥** २ नलिनवनाय रोचते सूर्यः, प्रकाशत इत्यर्थः । हरये रोचते भक्तिः । हर्याश्रितप्रीतिविषयो भवतीत्यर्थः ॥ ३ इतस्ततो भ्रमणे । ४ प्रकृतिविपर्यासे, मन्थने च ॥ ५ अधःपतने । लुङि-अस्रसत्, अस्रंसिष्ट । **अङि नलोपः । एवम्** अध्वसत् अभ्रसत्, इत्यादि ज्ञेयम् ॥ ६ उपसर्गयोगे-अति=अतिक्रमणे, अनु=अनुवर्तने, नि=निवृत्तौ, निर्=निर्वृत्तौ-निष्पत्तौ, समाप्तौ च । वि=नि=प्रत्यागमने, वि=परि=मनोभ्रमे, अभि=सम्मुखागमने, आ=आवृत्तौ (चक्राकरेण भ्रमणे) । वि-आ=व्यावृत्तावित्यादि ॥ ७ "शेषात् कर्तरि" "वा क्यषः" इत्यतोऽनुवर्त्याह-

**न वृद्भ्यश्चतुर्भ्यः ७।२।५९ ॥** वृतुवृधुशृधुस्यन्दूभ्यः सकारादेरार्धधातुकस्येण् न स्यात् तङानयोरभावे ॥ वर्त्स्यति, वर्तिष्यते । वर्तताम् । अवर्तत । ववृते । वर्तेत । वर्तिषीष्ट । अवर्तिष्ट । अवर्त्स्यत्, अवर्तिष्यत ॥

दद दाने ॥ १९ ॥ ददते ॥ **न शसददवादिगुणानाम् ६।४।१२६ ॥** शसेर्ददेर्वकारादीनां गुणशब्देन विहितो योऽकारस्तस्य एत्वाभ्यासलोपौ न ॥ दददे । दददाते । दददिरे । ददिता । ददिष्यते । ददताम् । अददत । ददेत । ददिषीष्ट । अददिष्ट । अददिष्यत ॥

त्रपूष् लज्जायाम् ॥२०॥ त्रपते ॥ **तॄफलभजत्रपश्च ६।४।१२२॥** एषामत एत्वमभ्यासलोपश्च स्यात् किति लिटि सेटि थलि च ॥ त्रेपे । त्रपिता, त्रप्ता । त्रपिष्यते, त्रप्स्यते । त्रपताम् । अत्रपत । त्रपेत । त्रपिषीष्ट, त्रप्सीष्ट । अत्रपिष्ट, अत्रप्त । अत्रपिष्यत, अत्रप्स्यत ॥

इत्यात्मनेपदिनः ॥

---

श्रिञ् सेवायाम् ॥ १ ॥ श्रयति, श्रयते । शिश्राय, शिश्रिये । श्रयितासि, श्रयितासे । श्रयिष्यति, श्रयिष्यते । श्रयतु, श्रयताम् । अश्रयत्,

---

**–वा परस्मैपदमिति ॥** १ "सेऽसिचि कृत–" "गमेरिट्–" इत्याभ्यामनुवर्त्त्याह **सकारादेरिति ॥** २ "अत एकहल्मध्येऽनादेशादेर्लिटि" इत्यनुवर्त्त्याह–**एत्वाभ्यासेति ॥** ३ "अत एकहल्मध्ये" "घ्वसोरेद्धौ" इत्यतः 'अतः, एत्' 'अभ्यासलोपः' इति अनुवर्तन्ते । तरतेर्गुणत्वेन फलभजोरादेशादित्वेन त्रपेरनेकहल्मध्यस्थत्वेनाप्राप्तावेत्वाभ्यासलोपौ विधीयेते इत्याह–**एषामत** इति ॥ ४ 'स्वरित–' इति सूत्रेणात्मगामिनि क्रियाफले आत्मनेपदम्, परात्मगामिनि तु परस्मैपदम् इति सर्वत्र बोध्यम् । सेवात्र सेवानुकूलो वशीकरणादिरूपो व्यापारः ॥

अश्रयत । श्रयेत्, श्रयेत । श्रीयात्[1], श्रयिषीष्ट । चङ्[2] । अशिश्रियत्, अशिश्रियत । अश्रयिष्यत् । अश्रयिष्यत[3] ॥ भृञ् भरणे ॥ २ ॥ भरति, भरते । बभार । बभ्रतुः । बभ्रुः । बभर्थ[4] । बभृव । बभृम । बभ्रे । बभृषे । भर्तासि, भर्तासे । भरिष्यति[5], भरिष्यते । भरतु, भरताम् । अभरत्, अभरत । भरेत्, भरेत ॥ **रिङ् शयग्लिङ्क्षु ७।४।२८ ॥** शे यकि यादावार्धधातुके लिङि च ऋतो[6] रिङ् आदेशः स्यात् । रीङि प्रकृते रिङ्विधानसामर्थ्याद्दीर्घो[7] न ॥ भ्रियात् ॥ **उश्च १।२।१२ ॥** ऋवर्णात्परौ झलादी[8] लिङ्सिचौ कितौ स्तस्तङि ॥ भृषीष्ट । भृषीयास्ताम् । अभार्षीत् ॥ **ह्रस्वादङ्गात् ८।२।२७ ॥** सिचो[9] लोपो झलि ॥ अभृत । अभृषाताम् । अभरिष्यत्, अभरिष्यत ॥ हृञ् हरणे[10] ॥ ३ ॥ हरति, हरते । जहार । जहर्थ । जह्रिव । जह्रिम । जह्रे । जह्रिषे । हर्तासि, हर्तासे । हरिष्यति, हरिष्यते । हरतु,

---

१ 'अकृत्सार्व-' इति दीर्घः ॥ २ 'णिश्रि-' इत्यनेन ॥ ३ उपसर्गयोगे-आ=आश्रयणे,प्र=प्रश्रये-प्रणये-नम्रतायाम् । अधि=अधिश्रयणे-चुल्ल्याद्युपरिस्थापने,उद्=समुद्=उच्छ्राये, समूआ=समाश्रये,व्यपा=साष्टाङ्गनतौ विश्वासे चेत्यादि ॥ ४ क्रादित्वाल्लिटि नेट् । "इणः षीध्वम्-" बभृढ्वे ॥ ५ स्ये "ऋद्धनोः स्ये" इति इट् ॥ ६ "अयङ् यि क्ङिति" "रीङ् ऋतः" इत्याभ्यामनुवर्त्त्याह-**ऋत** इत्यादि ॥ ७ **दीर्घ** इति । "अकृत्सार्वधातुकयोः" इति **प्राप्त** इत्यादिः । दीर्घस्याभिप्रेतत्वे 'रीङ् ऋतः' इति पूर्वसूत्राद् रीङमेवानुवर्तयिष्यदिति भावः ॥ ८ "असंयोगाल्लिट्" "इको झल्" "लिङ्सिचावात्मनेपदेषु" इत्येभ्योऽनुवर्त्त्याह-**झलादी** इत्यादि ॥ ९ 'संयोगान्तस्य लोपः' "रात्सस्य" "झलो झलि" इत्येभ्योऽनुवर्त्त्याह-**सिचो लोपो झलीति** ॥ अङ्गात्परो झलि परे सकारः सिच एव सम्भवति, सिप् तु दृष्टानुविधिकश्छन्दोविषय इति भावः ॥ १० हरणं-प्रापणं स्वीकारः स्तेयं-

हरताम् । अहरत्, अहरत । हरेत्, हरेत । ह्रियात् । हृषीष्ट । हृषीयास्ताम् । अहार्षीत्, अहृत । अहरिष्यत्, अहरिष्यत ॥ धृञ् धारणे ॥ ४ ॥ धरति, धरते ॥ णीञ् प्रापणे ॥ ५ ॥ नयति, नयते ॥ डुपचष् पाके ॥ ६ ॥ पचति, पचते । पपाच । पेचिथ, पपक्थ । पेचे । पक्तासि, पक्तासे ॥ भज सेवायाम् ॥ ७ ॥ भजति, भजते । बभाज, भेजे । भक्तासि, भक्तासे । भक्ष्यति, भक्ष्यते । अभाक्षीत् । अभक्त । अभक्षाताम् ॥ यज देवपूजासङ्गतिकरणदानेषु ॥ ८ ॥ यजति, यजते ॥

**लिट्यभ्यासस्योभयेषाम् ६ । १ । २७ ॥** वच्यादीनां ग्रहा-

---

–नाशनं च । यथा–अंशं हरति=स्वीकरोति । भारं हरति=प्रापयति । परस्वं हरति=चोरयति । पापं हरति=नाशयतीत्यर्थः । कृदन्तत्वात्थलि नेट् । वमादौ क्रादिनियमादिट् । 'विभाषेटः' जह्रिढ्वे–जह्रिध्वे ॥ १ उपसर्गयोगे–प्र=प्रहारे, अप=दूरीकरणे, सम्=संहारे, वि=विहारे, क्रीडायाम् । आ=आहारे-भोजने । उद्=उद्धारे, उपसम्=उपसंहारे-समाप्तौ । विआ=व्याहारे, भाषणे । अभि अव=अभ्यवहारे-भोजने । विअति=व्यतिहारे-विपर्यये, अनु=अनुकरणे, विअव=व्यवहारे, उद् आ=उदाहरणे–उदाहरणपूर्वककथने, प्रति उद् आ=प्रत्युदाहरणे–तत्पूर्वककथने, सम् आ=समाहारे संग्रहे, उप=उपहारे, उपढौकने । परि=परिहारे–त्यागे, निर् आ=निराहारे, उपवासप्रति आ=प्रत्याहारे इन्द्रियदमनपूर्वकध्याने संक्षेपे च । सम् प्र=संप्रहारे-युद्धे इत्यादि । शत्रुं प्रहरति इत्यादि ॥ २ उपसर्गयोगे–अव, निर् इत्यनयोर्योगे निर्धारणे । निश्चये, उद्=उद्धारे इत्यादि ॥ ३ णीञ्–। लिटि निनाय, निन्यतुः, निनयिथ–निनेथ, निन्यिव–म । निन्यिढ्वे–निन्यिध्वे । उपसर्गयोगे–प्र=प्रणयने रचनायाम्, प्रणये–प्रीतौ च, अप=अपनयने दूरीकरणे, उप=उपनयने दीक्षायाम्, उद्=उन्नतौ उपरिक्षेपणे, उन्नयने च, परि=परिणये, विवाहे, अभि=अभिनये नाट्ये,–अनु=अनुनये नमने, आ=आनयने, प्रति आ=प्रत्यानयने, निर्=निर्णये निश्चये, दुर्=दुर्णीतौ, दुष्टनीतौ इत्यादि । यथा–ग्रन्थं प्रणयति । क्रोधमपनयति । शिष्यमुपन–

दीनां चाभ्यासस्य सम्प्रसारणं लिटि । इयाज * ॥ **वचिस्वपियजादीनां किति ६।१।१५॥** वचिस्वप्योर्यजादीनां च संप्रसारणं स्यात् किति ॥ ईजतुः । ईजुः । इयजिथ, इयष्ठ । ईजे यष्टा । षढोः कः सि । यक्ष्यति, यक्ष्यते । इज्यात्, यक्षीष्ट । अयाक्षीत्, अयष्ट ॥ वह प्रापणे ॥ ९ ॥ वहति, वहते । उवाह । ऊहतुः । ऊहुः । उवहिथ ॥ **झषस्तथोर्धोऽधः ८।२।४८॥** झषः परयोस्तथोर्धः स्यान्न तु दधातेः ॥ **ढो ढे लोपः ८।३।१३॥ सहिवहोरोदवर्णस्य ६।३।११२॥** अनयोरवर्णस्य ओत्स्यात् ढलोपे ॥ उवोढ । ऊहे । वोढा । वक्ष्यति । अवाक्षीत् । अवोढाम् । अवाक्षुः । अवाक्षीः । अवोढम् । अवोढ । अवाक्षम् । अवाक्ष्व । अवाक्ष्म । अवोढ । अवक्षाताम् । अवक्षत । अवोढाः । अवक्षाथाम् । अवोढ्वम् । अवक्षि । अवक्ष्वहि । अवक्ष्महि ॥

इति भ्वादयः ॥ १ ॥

---

-यते, सदाचारेणात्मानमुन्नयति । स्नातकः समावृत्तः सन् भार्यां परिणयति । नाटकमभिनयति । सुजनः विद्ययाऽऽत्मानमनुनयति, ते वा । घटमानयति इत्यादि ॥
१ "ष्यङः सम्प्रसारणम्" इत्यतः 'सप्रसारणम्' इत्यनुवर्त्त्याह-**सम्प्रसारणमिति** ॥ *अकिति द्वित्वेऽभ्यासस्य सम्प्रसारणम् । किति तु संप्रसारणे कृते द्वित्वमिति स्पष्टम् ॥ २ "यजिर्वपिर्वहिश्चैव वसिर्वेञ् व्येञ इत्यपि । ह्वेञ्वदी श्वयतिश्चैव यजाद्याः स्युरिमे नव ॥" ३ "ष्यङः संप्रसारणम्" इत्यतः 'संप्रसारणम्' इत्यनुवर्त्त्याह-**सम्प्रसारणमिति** ॥ ४ "ढ्रलोपे-" इत्यतः 'ढ्रलोपे' इति वर्तते । तत्र योग्यतयाह-**ढलोप** इति ॥ ५ ढत्वधत्वष्टुत्वढलोपौत्वानि ॥
६ उपसर्गयोगे-उद्=उद्वाहे विवाहे, निर्=निर्वाहे, प्र=प्रवाहे, वि=विवाहे.-

अथ अदादयः ।

अद भक्षणे ॥ १ ॥ **अदिप्रभृतिभ्यः शपः २ । ४ । ७२ ॥** लुक्[1] स्यात् ॥ अत्ति । अत्तः । अदन्ति । अत्सि । अत्थः । अत्थ । अद्मि । अद्वः । अद्मः ॥ **लिट्यन्यतरस्याम् २ । ४ । ४० ॥** अदो[2] घस्लृ वा स्याल्लिटि ॥ जघास । उपधालोपः[3] ॥ **शासिवसिघसीनां च ८ । ३ । ६० ॥** इण्कुभ्यां परस्यैषां[4] सस्य षः स्यात्[5] ॥ घस्य चर्त्वम् । जक्षतुः । जक्षुः । जघसिथ[6] । जक्षथुः । जक्ष जघास, जघस । जक्षिव । जक्षिम । आद । आदतुः आदुः **इडत्त्यर्तिव्ययतीनाम् ७ । २ । ६६ ॥** अद् ऋ व्येञ एभ्यस्थलो[8] नित्यमिट् स्यात् ॥ आदिथ । अत्ता । अत्स्यति । अत्तु । अत्तात् अत्ताम् । अदन्तु ॥ **हुझल्भ्यो हेर्धिः ६ । ४ । १०१ ॥** होर्झलन्तेभ्यश्च हेर्धिः स्यात् ॥ अद्धि[9] । अत्तात् । अत्तम् । अत्त । अदानि ।

---

–अति=समययापने इत्यादि । भार्यामुद्वहति, ते वा । इत्यादि ॥ यथा–
१ "ण्यक्षत्रियार्षञितः–" इति सूत्रादनुवर्त्याह–**लुगिति** ॥ २ "अदो जग्धिर्ल्यप्ति किति" "लुङ्सनोर्घस्लृ" इत्याभ्यामनुवर्त्याह–**अद** इत्यादि ॥ ३ 'गमहन–' इत्यनेन ॥ ४ आदेशप्रत्यययावयवत्वाभावादप्राप्ते विधिरयम् ॥ ५ "अपदान्तस्य मूर्धन्यः" "सहेः साडः सः" "इण्कोः" इत्यधिकृत्याह–**इणि**त्यादि ॥ ६ 'उपदेशेऽत्वतः' इति निषेधस्तु न, तस्य तासौ नित्यानिड्विषयकत्वात् । घस् तु तासौ न विद्यत एव कुतस्तस्य तासावनिट्कत्वम् । "यस्तासावस्ति अनिट् च" इति हि भाष्यम् । तस्मात् क्रादिनियमादिट् ॥ ७ भारद्वाजनियमाद्विकल्पे प्राप्ते विधिरयम् ॥ ८ "अचस्तास्वत्–" इत्यतः 'थलि' इति वर्ततेऽत आह–**थल** इति ॥ ९ निर्दिश्यमानपरिभाषया 'रुदिहि' इत्यादौ नेति बोध्यम् ॥

अदाव । अदाम ॥ **अदः सर्वेषाम्** ७ । ३ । १०० ॥ अदः परस्यापृक्तसार्वधातुकस्य अट् स्यात्सर्वमतेन ॥ आदत् । आत्ताम् । आदन् । आदः । आत्तम् । आत्त । आदम् । आद्व । आद्म । अद्यात् । अद्याताम् । अद्युः । अद्यात् । अद्यास्ताम् । अद्यासुः ॥ **लुङ्सनोर्घस्लृ** २ । ४ । ३७ ॥ अदो घस्लृ स्याल्लुङि सनि च ॥ लृदित्त्वादङ् । अघसत् । आत्स्यत् ॥ हन हिंसागत्योः ॥२॥ हन्ति ॥ **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** ६ । ४ । ३७ ॥ अनुनासिकान्तानामेषां वनतेश्च लोपः स्याज्झलादौ किति ङिति परे ॥ यमिरमिनमिगमिहनिमन्यतयोऽनुदात्तोपदेशाः । तनु क्षणु क्षिणु ऋणु तृणु घृणु वनु मनु तनोत्यादयः । हतः । घ्नन्ति । हंसि । हथः । हथ । हन्मि । हन्वः । हन्मः । जघान । जघ्नतुः । जघ्नुः ॥ **अभ्यासाच्च** ७ । ३ । ५५ ॥ अभ्या-

---

१ "अस्तिसिचः–" इत्यतः 'अपृक्ते' इति "तुरुस्तुशम्यमः–" इत्यतः 'सार्वधातुके' इति "अड् गार्ग्यगालवयोः" इत्यतः 'अट्' इति वर्तन्तेऽत आह–**अपृक्तसार्वेति** ॥ 'गार्ग्यगालवयोः' इत्यस्य त्वनुवृत्तिशङ्कां वारयितुं सर्वेषां ग्रहणम् ॥ २ "अदो जग्धिः–" इत्यतः 'अदः' इति वर्तते्ऽत आह–**अद** इति ॥ ३ 'अनुनासिक' इति लुप्तषष्ठ्यन्तं पृथक् पदम् । विशेषणत्वेन तदन्तविधिरित्याह–**अनुनासिकान्तानामिति** ॥ ४ ञिति णिति च परे हन्तेर्हकारः क्वाप्यव्यवहिते न मिलतीति 'येन नाव्यवधानम्–' इति न्यायादेकवर्णव्यवधानेऽपि तत्र 'हो हन्तेः–' इति कुत्वं भवति, नकारे तु परे अव्यवहित एव कुत्वमिति थलि कुत्वाप्राप्ते वचनम् । अन्यत्र 'हो हन्तेः–' इत्येव सिद्धेरिति बोध्यम् ॥

सात्परस्य हन्तेर्हस्य कुत्वं स्यात् ॥ जघनिथ, जघन्थ । जघ्नथुः । जघ्न । जघान, जघन । जघ्निव । जघ्निम । हन्ता । हनिष्यति[3] ॥ हन्तु, हतात् । हताम् । घ्नन्तु ॥ **हन्तेर्जः ६ । ४ । ३६ ॥** हौ[3] परे ॥ **असिद्धवदत्राभात् ६।४।२२॥** इत ऊर्ध्वमापादसमाप्तेराभीयम्, समानाश्रये तस्मिन्कर्तव्ये तदसिद्धम् । इति जस्यासिद्धत्वान्न हेर्लुक् । जहि, हतात् । हतम् । हत । हनानि । हनाव । हनाम । अहन् । अहताम् । अघ्नन् । अहन् । अहतम् । अहत । अहनम् । अहन्व । अहन्म ॥ हन्यात् । हन्याताम् । हन्युः ॥ **आर्धधातुके २।४।३५॥** इत्यधिकृत्य ॥ **हनो वध लिङि २ । ४ । ४२ ॥ लुङि च । २ । ४ । ४३ ॥** वधादेशोऽदन्तः । आर्धधातुके इति विषयसप्तमी तेन आर्धधातुकोपदेशे अकारान्तत्वादतो लोपः । वध्यात् । वध्यास्ताम् । आदेशस्यानेकाच्त्वादेकाच इतीड्निषेधाभावादिट् । अतो हलादेरिति वृद्धौ प्राप्तायाम्— ॥ **अचः परस्मिन् पूर्वविधौ ॥ १ । १ । ५७ ॥** परनिमित्तोऽजादेशः स्थानिवत्, स्थानिभूतादचः

---

१ "हो हन्तेः—" "चजोः कु—" इत्याभ्यामनुवर्त्याह—**हन्तेर्हस्येत्यादि ॥** २ "ऋद्धनोः स्ये" इतीट् ॥ ३ "शा हौ" इत्यतोऽनुवर्त्याह—**हौ पर** इति ॥ ४ समानाश्रये=तुल्यनिमित्तके तस्मिन्=आभीये तत्=कृतम् आभीयम् । असिद्धत्वाश्रयशास्त्रसम्बन्धिनिमित्तसमुदायान्यूनानतिरिक्ताश्रयकत्वं समानाश्रयत्वम् । ५ "स्थानिवदादेशः" इति वर्तते । परस्मिन्निति निमित्तसप्तमीत्याह—**परनिमित्त** इति ॥ ६ अच एवादेश इत्यर्थः, तेनाज्झलादेशो न स्थानिवत् । अत एव मरुतमाचष्टे 'मारयति' इत्यत्र टिलोपस्य स्थानिवत्त्वाभावादुपधावृद्धिः सिध्यतीति स्पष्टं भाष्ये ॥ ७ स्थानिनि सति यत्कार्यं भवति तत् कार्यम् आदेशे सत्यपि—

पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये ॥ इत्यल्लोपस्य स्थानिवत्त्वेनोपधात्वा भावान्न वृद्धिः ॥ अवधीत् । अहनिष्यत् ॥ यु मिश्रणामिश्रणयोः । ॥ २ ॥ **उतो वृद्धिर्लुकि हलि** ७ । ३ । ८९ ॥ लुग्विषये उतो वृद्धिः पिति हलादौ सार्वधातुके नत्वभ्यस्तस्य । यौति । युतः । युवन्ति । यौषि । युथः । युथ । यौमि । युवः । युमः । युयाव । यविता । यविष्यति । यौतु । युतात् । अयौत् । अयुताम् । अयुवन् । युयात् । इह उतो वृद्धिर्न, भाष्ये-"पिच्च ङिन्न, ङिच्च पिन्न" इति व्याख्यानात् । युयाताम् । युयुः । यूयात् । यूयास्ताम् । यूयासुः । अयावीत् । अयविष्यत् ॥ या प्रापणे[३] ॥ ४ ॥ याति । यातः । यान्ति । ययौ । याता । यास्यति । यातु । अयात् । अयाताम् ॥ **लङः शाकटायनस्यैव** ३ । ४ । १११ ॥ आदन्तात्परस्य लङो झेर्जुस् वा स्यात् ॥ अयुः, अयान् । यायात् ।

---

-स्यात् स्थानिनि सति यन्न भवति तदादेशेऽपि न स्यादित्येवमभावाभावयोरुभयोरप्यतिदेशोऽयम् । पूर्वत्वं चात्र व्यवहिताव्यवहितसाधारणम् ॥ १ प्रति=प्रतिघाते, अभि=आ=आघाते, वि-आ-व्याघाते । यथा-आहतः सन् शूरो रणे शत्रुं प्रतिहन्ति । रणे शूराः शत्रूनभिघ्नन्ति । आघ्नन्ति वा । मृषावादी स्वकथितमेव व्याहन्ति ॥ २ "नाभ्यस्तस्याचि-" इत्यतः 'नाभ्यस्तस्य पिति सार्वधातुके' इति वर्तते । 'हलि' इत्यस्य विशेषणत्वेन तदादिविधिरित्याह-**हलादौ सार्वधातुक** इति ॥ ३ प्रापणमिह गतिः । 'ग्रामं याति' इत्यादौ तथा दर्शनात् । आ=आगमने, धातुश्चाकर्मकः । ग्रामादायाति । अनु=अनुगमने, अभि=समीपगमने, निर्=बहिर्गमने, प्रति=कस्यचिदभिमुखगमने, प्रत्युद्=प्रत्युद्गमने, समा=आगमने इत्यादि ॥ ४ "झेर्जुस्" "अतः" इत्यनुवर्त्याह-**आदन्तादित्यादि** ॥

यायाताम् । यायुः । यायात् । यायास्ताम् । यायासुः । अयासीत् । आयास्यत् ॥ वा गतिगन्धनयोः[1] ॥ ५ ॥ भा दीप्तौ ॥ ६ ॥ स्ना शौचे ॥ ७ ॥ श्रा पाके ॥ ८ ॥ द्रा कुत्सायां गतौ ॥ ९ ॥ प्सा भक्षणे ॥ १० ॥ रा दाने ॥ ११ ॥ ला आदाने ॥ १२ ॥ दाप् लवने ॥ १३ ॥ पा रक्षणे ॥ १४ ॥ ख्या प्रकथने ॥ १५ ॥ अयं सार्वधातुके[2] एव प्रयोक्तव्यः[3] ॥ विद ज्ञाने ॥ १६ ॥ **विदो लटो वा ३ । ४ । ८३ ॥** वेत्तेर्लटः परस्मैपदानां[4] णलादयो वा स्युः ॥ वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म । पक्षे—वेत्ति । वित्तः । विदन्ति ॥ **उषविदजागृभ्योऽन्यतरस्याम् ३।१।३८॥** एभ्यो लिटि[5] आम्वा स्यात् ॥ विदेरदन्तत्वप्रतिज्ञानात्[6] आमि न गुणः । विदाञ्चकार, विवेद । वेदिता । वेदिष्यति ॥ **विदांकुर्वन्त्वित्यन्यतरस्याम् ३ । १ । ४१ ॥** वेत्तेर्लोटि आम्,

---

१ गन्धनं=हिंसा । अवुः—अवान् । एवम् अभुः—अभान् । “वान्यस्य संयोगादेः”—स्नेयात्—स्नायात् । श्रेयात्—श्रायात् । द्रेयात्—द्रायात् । नि=निद्रायाम् । प्सेयात्—प्सायात् । आदानं=ग्रहणम् । लवनं=छेदनम् । अघुत्वादेत्वसिज्लुकौ न । दायात्, अदासीत् ॥ २ **सर्वधातुक एवेति** ॥ एतन्मते “न ध्याख्या—” इति सूत्रे ख्याग्रहणं व्यर्थं स्यादिति बोध्यम् ॥ ३ ख्याधातोः सार्वधातुके एव प्रयोगो नत्वार्धधातुके इत्यर्थः । आ=वर्णने, प्रत्या=निराकरणे, व्या=विवरणकरणे, वि=ख्यातौ, सम्=गणने, अभि=शोभायाम् । ४ “ परस्मैपदानां णलतुस्—” इति सूत्रमेवानुवर्ततेऽत आह—**परस्मैपदानामित्यादि** ॥ ५ “कास्प्रत्ययाद्—” इत्यतः ‘आम्’ ‘लिटि’ इत्यनुवर्ततेऽत आह—**लिटीत्यादि** ॥ ६ आम्सन्निधौ निपातनादित्यर्थः । तेनाम्—सन्निधान एवातो लोपस्य स्थानिवद्भावेन न गुणः ॥ आमोऽसन्निधाने तु ‘वेदिता’ इत्यादौ गुणो भवत्येव ॥

गुणाभावो, लोटो लुक्, लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते॥ पुरु-षवचने विवक्षिते॥ **तनादिकृञ्भ्य उः ३ । १ । ७९ ॥** तनादेः कृञश्च उः प्रत्ययः स्यात् ॥ शपोऽपवादः । गुणौ । विदांकरोतु ॥ **अत उत्सार्वधातुके ६ । ४ । ११० ॥** उप्रत्ययान्तस्य कृञोऽत उत्सार्वधातुके क्ङिति ॥ विदांकुरुतात् । विदांकुरुताम् । विदांकुर्वन्तु । विदांकुरु । विदांकरवाणि । अवेत् । अवित्ताम् । अविदुः ॥ **दश्च ८ । २ । ७५ ॥** धातोर्दस्य पदान्तस्य सिपि रुर्वा ॥ अवेः, अवेत् । विद्यात् । विद्याताम् । विद्युः । विद्यात् । विद्यास्ताम् । अवेदीत् । अवेदिष्यत् ॥ अस भुवि॥१७॥अस्ति॥ **श्नसोरल्लोपः ६ । ४ । १११ ॥** श्नस्यास्तेश्चातो लोपः सार्वधातुके क्ङिति ॥ स्तः । सन्ति । असि ।

---

१ "ज्वलितिकसन्तेभ्यः-" इत्यत्रेवेतिशब्दस्य प्रकारार्थकत्वेन फलितमाह-**पुरुषेति ॥** अत्र सूत्रे 'इति' शब्दः प्रकारार्थः । 'विदांकुर्वन्तु-इत्येवंजातीयकाः प्रयोगा विकल्पेन भवन्ति' इति सूत्रार्थः । 'विदांकुर्वन्तु' इत्येकस्यैव निपातनस्येष्टत्वे तु 'इति' शब्दं नाकरिष्यदिति भावः ॥ २ "कर्तरि शप्" "सार्वधातुके यक्" इत्याभ्यां 'कर्तरि, सार्वधातुके' इत्यनुवृत्तिफलितमाह-**शपोऽपवाद** इति ॥ ३ ऋकारस्य गुण आर्धधातुकनिमित्तः । उकारस्य गुणः सार्वधातुकनिमित्तः ॥ ४ "गमहनजन-" इत्यतः 'क्ङिति' इति, "उतश्च प्रत्ययात्-" इति षष्ठीविपरिणतम्, "नित्यं करोतेः" इत्यतः 'करोतेः' इति च वर्ततेऽत आह-**उप्रत्ययान्तस्येति ॥** ५ 'उतश्च' इति हेर्लुक् । आभीयत्वेन लुकोऽसिद्धत्वादुत्त्वम् ॥ ६ 'सिजभ्यस्त-' इति झेर्जुस् ॥ ७ "पदस्य" "सिपि धातोरुर्वा" इति वर्ततेऽत आह-**धातोरिति ॥** ८ "गमहनजन-" इत्यतः 'क्ङिति' इति "अत उत्सार्वधातुके" इत्यतः "सार्वधातुके" इति वर्तते । 'श्नसोः' इति शकन्ध्वादिरित्याह-**श्नस्यास्तेश्चेति ॥** ९ 'तासस्त्योः-' इति सलोपः ॥

स्थः। स्थ। अस्मि। स्वः। स्मः॥ **उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ८।३।८७॥** उपसर्गेणः प्रादुसश्चास्तेः सस्य षो यकारेऽचि च परे॥ निष्यात्। प्रनिषन्ति। प्रादुःषन्ति। यच्परः किम्-अभिस्तः॥ **अस्तेर्भूः २।४।५२॥** आर्धधातुके॥ बभूव। भविता। भविष्यति। अस्तु, स्तात्। स्ताम्। सन्तु॥ **घ्वसोरेद्धावभ्यासलोपश्च ६।४।११९॥** घोरस्तेश्च एत्त्वं स्याद्धौ परे अभ्यासलोपश्च॥ एत्त्वस्यासिद्धत्वाद्धेर्धिः। श्नसोरित्यल्लोपः। तातङ्पक्षे एत्त्वं न। परेण तातङा बाधात्। एधि, स्तात्। स्तम्। स्त। असानि असाव। असाम॥ आसीत्। आस्ताम्। आसन्॥ स्यात्। स्याताम्। स्युः॥ भूयात्। अभूत्। अभविष्यत्॥ इण् गतौ॥ १८॥

---

१ "अपदान्तस्य मूर्धन्यः" "सहेः साडः सः" "इण्कोः" इत्येभ्यः सम्भवात् 'इणः सः मूर्धन्यः' इत्यनुवर्त्याह–**उपसर्गेण** इति॥ 'अस्तिः, यच्परः' इति षष्ठ्यर्थे प्रथमेति भावः॥ २ "आर्धधातुके" इत्यधिकृतम्॥ ३ "असिद्धवदत्राभात्" इत्यनेनासिद्धत्वाज्झलन्तत्वेन हेर्धिरित्यर्थः॥ ४ यद्यपि "अतो गुणे" इति पररूपेण सिद्धिः तथापि परत्वादाङ्गत्वाच्चाल्लोप एव न्याय्यः॥ ५ तातङि कृते तस्य स्थानिवद्भावेन 'पुनः प्रसङ्गविज्ञानात्सिद्धम्' इत्याश्रयणेन प्राप्नोत्येवैत्त्वमिति तु न वाच्यम्। लक्ष्यानुरोधेनात्र पुनः प्रसङ्गविज्ञानस्यानाश्रयणात्, 'सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव' इत्यस्यैवाश्रयणादिति बोध्यम्॥ ६ 'अस्तिसिचः–' इतीट्। ७ 'श्नसोः–' इत्यल्लोपस्याभीयत्वेनासिद्धत्वादाट्। एवमेव 'आयन्' इत्यत्र यण आभीयासिद्धत्वादाट् बोध्यः॥ ८ स्थानिवद्भावेनास्तित्वमादाय तिप ईडागमः "अस्तिसिचोऽपृक्ते" इत्यनेन प्राप्नोतीति न शङ्क्यम्। अत्रास्तेः सकारान्तत्वाभावादिति भावः॥ ९ अनु=अनुगमने–यूथपतिमन्वेति सेना। उप=समीपभवने–गुरुमुपैति शिष्यः। अभ्युप=स्वीकारे प्राप्तौ च–

एति । इतः ॥ **इणो यण् ६ । ४ । ८१ ॥** अजादौ प्रत्यये परे॥ यन्ति ॥ **अभ्यासस्यासवर्णे ६ । ४ । ७८ ॥** अभ्यासस्य इवर्णोवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि ॥ इयाय ॥ **दीर्घ इणः किति ७ । ४ । ६९ ॥** इणोऽभ्यासस्य दीर्घः स्यात् किति लिटि ॥ ईयतुः । ईयुः । इययिथ, इयेथ । एता । एष्यति । एतु । ऐत् । ऐताम् । आयन् । इयात् ॥ **एतेर्लिङि ७ । ४ । २४ ॥**

---

–धर्मादर्थमभ्युपैति । अधि=स्मरणे–मित्रमध्येति संकटे । अति=अतिक्रमणे–शठो मर्यादामत्येति । अभि=प्र=इच्छायाम्–हितमभिप्रैति जनः । परि=व्याप्तौ–विभुः सर्वान् पर्येति । अव=ज्ञाने–अवेहि मां किंकरमष्टमूर्तेः । अधुना ते उपसर्गाः प्रदर्श्यन्ते येषां योगे धातुरकर्मको भवति । प्र=परलोकगमने–सर्वं विहाय जीवः प्रैति । उद्=उदये–सूर्यः पूर्वस्यां दिश्युदेति । अभि=सम्मुखगमने–दीपस्याभ्येति शलभः अप=पृथग्भावे–धर्मादपैति मूर्खः । निर्=निष्क्रमणे–गृहान्निरेति विरक्तः । आ= आगमने–गुरुगृहादैति स्नातकः । वि=परि=प्रतीपभवने–विपत्तावनुकूलमपि सर्वं विपर्येति । प्रति=विश्वासे–स मयि न प्रत्येति इत्यादि ॥ १ अङ्गाधिकारेण प्रत्ययाक्षेपः । तद्विशेषणे । "अचि श्नु–" इत्यतोऽनुवृत्ते 'अचि' इत्यत्र तदादिविधिरित्याह–**अजादाविति** ॥ इयङोऽपवादः ॥ २ "अचि श्नुधातु–" इत्यतः 'य्वोः इयङुवङौ अचि' इत्यनुवर्त्त्याह–**इवर्णेत्यादि** ॥ ३ इ+इ+अ, इ+ऐ+अ, इ+आय्+अ, इय्+आय=इयाय । ४ "अत्र लोपः–" "व्यथो लिटि–" इत्याभ्याम् 'अभ्यासस्य' 'लिटि' इत्यनुवर्त्याह–**अभ्यासस्येति** ॥ ५ इ+इ+अतुस्, इ+यतुः=ईयतुः ॥ ६ इ+इ+इ+थ, इ+ए+इ+थ, इ+अय्+इ+थ, इय्+अय्+इ+थ=इययिथ । इ+ए+थ=इयेथ ॥ ७ "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इति द्विलकारनिर्देशेन लावस्थायामेवाडागमविधानेन यणादेशादन्तरङ्गत्वादाडागमे कृते यणादेश एव वृद्ध्यपेक्षया परत्वादाङ्गत्वाच्चेति भावः । एवमेव 'आसन्' इत्येतत्सिद्धिः ॥

उपसर्गात्परस्य[1] इणोऽणो ह्रस्व आर्धधातुके किति लिङि ॥ निरियात् । उभयत आश्रयणे नान्तादिवत्[2] । अभीयात् । अणः किम्—समेयात्[3] ॥ **इणो गा लुङि २ । ४ । ४५ ॥** गातिस्थेति सिचो लुक् ॥ अगात् । ऐष्यत् ॥ शीङ् स्वप्ने[4] ॥ १९ ॥ **शीङः सार्वधातुके गुणः ७ । ४ । २१ ॥** क्ङिति चेत्यस्यापवादः ॥ शेते । शयाते ॥ **शीङो रुट् ७ । १ । ६ ॥** शीङः परस्य झादेशस्यातो[5] रुडागमः स्यात् ॥ शेरते । शेषे । शयाथे । शेध्वे । शये । शेवहे शेमहे । शिश्ये । शिश्याते । शिश्यिरे । शयिता । शयिष्यते शेताम् । शयाताम् । अशेत । अशयाताम् । अशेरत । शयीत शयीयाताम् । शयीरन् । शयिषीष्ट[6] । अशयिष्ट । अशयिष्यत ॥ इङ् अध्ययने ॥ २० ॥ इङिकावध्युपसर्गतो न व्यभिचरतः । अधीते ॥ अधीयाते[7] । अधीयते ॥ **गाङ् लिटि २ । ४ । ४९ ॥** इङो[8] गाङ् स्याल्लिटि[9] ॥ अधिजगे । अधिजगाते । अधिजगिरे । अध्येता ।

---

१ "केऽणः" "उपसर्गाद्ध्रस्व ऊहतेः" इत्यतोऽनुवर्त्याह—**उपसर्गादिति** ॥ २ उपसर्गत्वस्य इण्धातुत्वस्योभयस्याश्रयणमत्राभीष्टमिति नान्तादिवदिति ह्रस्वो नेति भावः ॥ ३ 'आङ्' प्रश्लेषोऽत्र बोध्यः ॥ ४ स्वप्न आलस्यम् । उपसर्गयोगे अति=अतिशये, अतिशयितः । अधि=अधिष्ठाने—शय्यामधिशेते । अनु=अनुशये—द्वेषे—अनुशेते मन्दधीः । सम्=संशये—मन्दाः ईश्वरं प्रति संशेरते । इत्यादि ॥ ५ "झोऽन्तः" "अदभ्यस्तात्" इत्यतोऽनुवर्त्याह—**झादेशस्यात** इति ॥ ६ ध्वमि 'विभाषेटः'॥ ७ 'वार्णादाङ्गं बलीयः' इति पूर्वमियङादेशे कृते वार्णं दीर्घादीति भावः ॥ ८ "इङश्च" इत्यतोऽनुवर्त्याह—**इङ** इति ॥ ९ 'ल्लिटि' इति द्विलकारकनिर्देशात् 'लकारादौ लिटि' इत्यर्थस्वीकारेण नात्र 'द्विर्वचनेऽचि'—

अध्येष्यते । अधीताम् । अधीयाताम् । अधीयताम् । अधीष्व । अधीयाथाम् । अधीध्वम् । अध्ययै[1] । अध्ययावहै । अध्ययामहै । अध्यैत[2] । अध्यैयाताम्[3] । अध्यैयत । अध्यैथाः । अध्यैयाथाम् । अध्यैध्वम् । अध्यैयि । अध्यैवहि । अध्यैमहि । अधीयीत[4] । अधीयीयाताम् । अधीयीरन् । अध्येषीष्ट ॥ **विभाषा लुङ्लृङोः । २ । ४ । ५० ॥** इङो[5] गाङ् वा स्यात् ॥ **गाङ्कुटादिभ्योऽञ्णिन्ङित् १ । २ । १ ॥** गाङादेशात्कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्युः ॥ **घुमास्थागापाजहातिसां हलि ६ । ४ । ६६ ॥** एषामात[6] ईत्स्याद्धलादौ क्ङित्यार्धधातुके ॥ अध्यगीष्ट,अध्यैष्ट । अध्यगीष्यत, अध्यैष्यत ॥ दुह प्रपूरणे[7] ॥ २१ ॥ दोग्धि । दुग्धः । दुहन्ति । धोक्षि । दुग्धे । दुहाते । दुहते । धुक्षे । दुहाथे । धुग्ध्वे । दुहे । दुह्वहे । दुह्महे । दुदोह[8], दुदुहे[9] । दोग्धासि, दोग्धासे । धोक्ष्यति, धोक्ष्यते । दोग्धु, दुग्धात् । दुग्धाम् । दुहन्तु । दुग्धि, दुग्धात् । दुग्धम् । दुग्ध । दोहानि । दोहाव । दोहाम । दुग्धाम् । दुहाताम् ।

---

—इति निषेधः ॥ १ गुणायादेशयोः कृतयोरुपसर्गस्य यण् ॥ २ अधि+आ+इ+त इति स्थिते 'आटश्च' इति वृद्धिस्ततो यण् ॥ ३ परत्वादियङ् । तत आट्, वृद्धिः ॥ ४ अधि+इ+ई+त इति स्थिते धातुभूतस्य इकारस्य इयङि सवर्णदीर्घः ॥ ५ "इङश्च" "गाङ् लिटि" इत्याभ्यामनुवर्त्याह—**इङो गाङिति** ॥ ६ "आर्धधातुके" "दीङो युडचि क्ङिति" 'ईद्यति' 'आतो लोप इटि' इत्येभ्योऽनुवर्त्याह—**आत** इत्यादि ॥ ७ प्रपूरणम्=पूरणाभावः ऊधसः क्षारणम्, दोहनमिति यावत् । 'धात्वर्थं बाधते कश्चित्' इत्युक्तेरिति बोध्यम् ॥ ८ वधकषाः ॥ ९ अजन्ताकारवत्त्वाभावात् क्रादिनियमान्नित्यमिट्—'दुदोहिथ' ॥ १० आत्मनेपदे—

दुहताम् । धुक्ष्व । दुहाथाम् । धुग्ध्वम् । दोहै । दोहावहै । दोहामहै । अधोक्[1] । अदुग्धाम् । अदुहन् । अदोहम् । अदुग्ध । अदुहाताम् । अदुहत । अधुग्ध्वम् । दुह्यात्, दुहीत ॥ **लिङ्सिचावात्मनेपदेषु १ । २ । ११ ॥** इक्[2]समीपाद्धलः परौ झलादी लिङ्सिचौ कितौ स्तस्तङि । धुक्षीष्ट ॥ **शल इगुपधादनिटः क्सः ३ । १ । ४५ ॥** इगु[3]पधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः स्यात् ॥ अधुक्षत् ॥ **लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ७ । ३ । ७३ ॥** एषां क्स[4]स्य लुग्वा स्याद्दन्त्ये तङि ॥ अदुग्ध, अधुक्षत ॥ **क्सस्याचि ७ । ३ । ७२ ॥** अजादौ तङि क्सस्य लोपः ॥ अधुक्षाताम् । अधुक्षन्त । अदुग्धाः, अधुक्षथाः । अधुक्षाथाम् । अधुग्ध्वम्, अधुक्षध्वम् । अधुक्षि । अदु[6]ह्वहि, अधुक्षावहि । अधुक्षामहि । अधोक्ष्यत ॥

---

–'दुदुहिढ्वे–ध्वे' । विभाषेटः॥ १ हल्ङ्यादिलोपे पदान्तत्वाद् हस्य घः, भष्भावः, जश्त्वचर्त्वे । २ "इको झल्" "हलन्ताच्च" 'असंयोगाल्लिट्' इत्येभ्योऽनुवर्त्याह–**इक्समीपादिति** ॥ ३ 'च्लेः सिच्' इत्यतोऽनुवर्त्याह–**इगुपधो य** इत्यादि ॥ ४ "क्सस्याचि" इत्यतोऽनुवर्त्याह–**क्सस्येति** ॥ "घोर्लोपो लेटि वा" इत्यतो 'लोपः' इति वर्तमाने लुग्विधानसामर्थ्याल्लुक्श्लुलुपः सर्वादेशा भवन्ति इति ज्ञाप्यत इति भावः । 'क्सस्याचि' इति लोपस्तु अलोऽन्त्यपरिभाषयाऽन्त्यस्यैव भवतीति विज्ञेयम् ॥ ५ "घोर्लोपो लेटि–" इत्यतः 'लोपः' इत्यनुवर्त्य, "लुग्वा दुहदिह–" इत्यत 'आत्मनेपदे' इत्यपकृष्याह–तङि इत्यादि ॥ ६ 'दन्तोष्ठ्यो वः स्मृतो बुधैः' इति शिक्षा 'वकारो दन्तोष्ठोभयस्थानः' इति सूचयति, इति मन्यमानस्य कैयटस्यानुरोधेनेदम् ॥ 'उवोपोपध्मा ओष्ठे' इति कात्यायनप्रातिशाख्यानुरोधिनपदान्तसूत्रस्थमहाभाष्यानुसारेण वकारस्यौष्ठस्थानकत्वमेवेति मन्यमानानामस्माकं मते तु–

एवम्-दिह उपचये ॥२२॥ लिह आस्वादने ॥ २३ ॥ लेढि । लीढः[2] । लिहन्ति । लेक्षि । लीढे । लिहाते । लिहते । लिक्षे । लिहाथे । लीढ्वे । लिलेह, लिलिहे । लेढासि, लेढासे । लेक्ष्यति, लेक्ष्यते । लेढु । लीढाम् । लिहन्तु । लीढि । लेहानि । लीढाम् । अलेट्, अलेड् । अलिक्षत्, अलीढ, अलिक्षत । अलेक्ष्यत्, अलेक्ष्यत ॥ **ब्रूञ्** व्यक्तायां वाचि ॥ २४ ॥ **ब्रुवः पञ्चानामादित आहो ब्रुवः ३ । ४ । ८४ ॥** ब्रुवो लटस्तिबादीनां[3] पञ्चानां णलादयः पञ्च वा स्युः ब्रुवश्चाहादेशः ॥ आह । आहतुः । आहुः ॥ **आहस्थः ८ । २ । ३५ ॥** झलि परे[4] ॥ चर्त्वम् । आत्थ । आहथुः ॥ **ब्रुव ईट् ७ । ३ । ९३ ॥** ब्रुवः परस्य हलादेः पिति[5] ईट्[6] स्यात् ॥ ब्रवीति । ब्रूतः । ब्रुवन्ति । ब्रूते । ब्रुवाते । ब्रुवते ॥ **ब्रुवो वचिः २ । ४ । ५३ ॥** आर्धधातुके[7] ॥ उवाच । ऊचतुः । ऊचुः । उवचिथ, उवक्थ[8] । ऊचे । वक्तासि, वक्तासे ।

---

–न भवत्येवात्र लुगिति 'अदुह्वहि' इति प्रयोगो लङ्येव भवति । 'अगुह्वहि' इति प्रयोगो वैदिकः । लौकिकस्तु प्रामादिक एवेति बोध्यम् ॥ १ दिह–उपचयो वृद्धिः । सम्=सन्देहे ॥ २ **लीढ** इति । ढत्व–धत्व–ष्टुत्व–ढलोप–दीर्घाः ॥ ३ "परस्मैपदानां णलतुसुस्–" "विदोलटो वा" इत्याभ्यामनुवर्त्याह–**लटस्तिबादीनामित्यादि** ॥ ४ "झलो झलि" "हो ढः" इत्याभ्यां 'हः, झलि' इत्यनुवर्ततेऽत आह–**झलिपर** इति ॥ झलि परतस्थत्वविधानात् "ब्रुव ईट्" इति न भवति ॥ ५ "नाभ्यस्तस्याचि पिति सार्वधातुके" "उतो वृद्धिर्लुकि हलि" इत्याभ्यामनुवर्त्याह–**हलादेः पित** इति ॥ ६ 'सार्वधातुकस्य' इत्यपि पूरणीयम् । तेन 'उवक्थ' इत्यत्र नेट् ॥ ७ "आर्धधातुके" इत्यधिकृत्याह–**आर्धधातुक इति** ॥ ८ भारद्वाजनियमात् थलि वेट् । वमादौ तु क्रादिनियमान्नित्यमिट् ॥

वक्ष्यात वक्ष्यते । ब्रवीतु, ब्रूतात् । ब्रुवन्तु । ब्रूहि । ब्रवाणि । ब्रूताम् । ब्रवै । अब्रवीत्, अब्रूत । ब्रूयात्, ब्रुवीत । उच्यात्, वक्षीष्ट ॥ **अस्यतिवक्तिख्यातिभ्योऽङ् ३।१।५२॥** एभ्यश्च्लेरङ् स्यात् ॥ **वच उम् ७।४।२०॥** अङि परे ॥ अवोचत्, अवोचत । अवक्ष्यत्, अवक्ष्यत । **(ग०) (चर्करीतं च)** । चर्करीतमिति यङ्लुगन्तस्य संज्ञा, तददादौ बोध्यम् ॥ ऊर्णुञ् आच्छादने ॥ २५ ॥ **ऊर्णोतेर्विभाषा ७ । ३ । ९० ॥** वा वृद्धिः स्याद्धलादौ पिति सार्वधातुके ॥ ऊर्णौति, ऊर्णोति । ऊर्णुतः । ऊर्णुवन्ति । ऊर्णुते । ऊर्णुवाते । ऊर्णुवते ॥ ( ऊर्णोतेराम्नेति वाच्यम् ) ॥ **न न्द्राः संयोगादयः ६ । १ । ३ ॥** अचः पराः संयोगादयो नदरा द्विर्न भवन्ति ॥ नुशब्दस्य द्वित्वम् । ऊर्णुनाव । ऊर्णुनुवतुः । ऊर्णुनुवुः ॥ **विभाषोर्णोः १।२।३॥**

---

१ " च्लेः सिच् " इत्यतोऽनुवर्त्याह—**च्लेरिति** ॥ २ " ऋदृशोऽङि गुणः " इत्यतोऽनुवर्त्याह—**अङि परे** इति ॥ ३ " नाभ्यस्तस्याचि—" " उतो वृद्धिर्लुकि हलि " इत्याभ्यामनुवर्त्याह—**वृद्धिरित्यादि** ॥ ४ "एकाचो द्वे प्रथमस्य " " अजादेर्द्वितीयस्य " इत्यधिकृत्याह—**अचः परा** इति ॥ ५ ननु ऊर्णोतेर्लिटि णुशब्दस्य द्वित्वे उत्तरखण्डे णकारश्रवणं दुर्वारमत आह—**नुशब्दस्यैति** ॥ उपदेशे न एव नतु णः, स तु " रषाभ्याम्—" इत्यनेन भवति, तस्य द्वित्वदृष्ट्याऽसिद्धत्वान्नुशब्दस्यैव द्वित्वम् इति भावः । तथा चोक्तम्—"नकारजावनुस्वारपञ्चमौ झलि धातुषु । सकारजः शकारश्चेर्षाट्टवर्गस्तवर्गजः ॥" इति । एवं च यद्बुद्ध्या शास्त्रप्रवृत्तिस्तदीयद्वितीयप्रयोगस्यैव साधुत्वाख्यानान्नोत्तरखण्डे णकारश्रवणं पूर्वोच्चरितेन णकारेण व्यवधानाच्च न शास्त्रेण णत्वप्रसक्तिरिति तात्पर्यम् ॥

इडादिप्रत्ययो वा ङित्स्यात् । ऊर्णुनुविथ, ऊर्णुनविथ । ऊर्णुविता, ऊर्णविता । ऊर्णुविष्यति, ऊर्णविष्यति । ऊर्णौतु, ऊर्णोतु । ऊर्णवानि । ऊर्णवै ॥ **गुणोऽपृक्ते ७ । ३ । ९१** ॥ ऊर्णोतेर्गुणोऽपृक्ते हलादौ पिति सार्वधातुके । वृद्ध्यपवादः । और्णोत् । और्णोः । ऊर्णुयात् । ऊर्णुयाः । ऊर्णुवीत । ऊर्णूयात् । ऊर्णुविषीष्ट, ऊर्णविषीष्ट ॥ **ऊर्णोतेर्विभाषा ७ । २ । ६** ॥ इडादौ सिचि वा वृद्धिः परस्मैपदे परे । पक्षे गुणः । और्णावीत्, और्णुवीत्, और्णवीत् । और्णाविष्टाम्, और्णुविष्टाम्, और्णविष्टाम् । और्णुविष्ट, और्णविष्ट । और्णुविष्यत्, और्णविष्यत् । और्णुविष्यत, और्णविष्यत ॥

॥ इत्यदादयः ॥ २ ॥

अथ जुहोत्यादयः ।

हु दानादनयोः ॥ १ ॥ **जुहोत्यादिभ्यः श्लुः २।४।७५** ॥ शपः श्लुः स्यात् ॥ **श्लौ ६ । १ । १०** ॥ धातोर्द्वे स्तः । जुहोति ।

---

१ "विज इट्" "गाङ्कुटादिभ्यः-" इत्याभ्यामनुवर्त्याह-**इडादिप्रत्यय** इति ॥ २ "नाभ्यस्तस्याचि-" "उतो वृद्धिर्लुकि-" "ऊर्णोतेर्विभाषा" इत्येभ्योऽनुवर्त्याह-**ऊर्णोतेरित्यादि** ॥ ३ "सिचि वृद्धिः परस्मैपदेषु" "नेटि" इत्याभ्यामनुवर्त्याह-**इडादाविति** ॥ ४ दानमिह घृतादेरग्नौ प्रक्षेपः, हवनमिति यावत् । 'ब्राह्मणाय गां ददाति' इतिवत् 'ब्राह्मणाय गां जुहोति' इति प्रयोगादर्शनात् ॥ ५ "अदिप्रभृतिभ्यः-" इत्यतोऽनुवर्त्याह-**शप** इति ॥ ६ "एकाचो द्वे प्रथमस्य" "अजादेर्द्वितीयस्य" "लिटि धातोरनभ्यासस्य" इत्येभ्योऽनुवर्त्याह-**धातोरित्यादि** ॥ ७ कुहोश्चुः । अभ्यासे चर्च । 'सार्वधातुक-' इति पितिगुणः ॥

जुहुतः ॥ **अदभ्यस्तात् ७ । १ । ४ ॥** झस्यात्[1] स्यात् । हुश्नुवोरिति यण् । जुह्वति ॥ **भीह्रीभृहुवां श्लुवच्च ३ । १ । ३९ ॥** एभ्यो लिटि[2] आम् वा स्यादामि श्लाविव कार्यं च । जुहवाञ्चकार, जुहाव[3] । होता । होष्यति । जुहोतु, जुहुतात् । जुहुताम् । जुह्वतु । जुहुधि[4] । जुहवानि । अजुहोत् । अजुहुताम् ॥ **जुसि च ॥ ७ । ३ । ८३ ॥** इगन्ताङ्गस्य[5] गुणोऽजादौ[6] जुसि । अजुहवुः[7] । जुहुयात् । हूयात् । अहौषीत् । अहोष्यत् ॥ ञिभी भये ॥ २ ॥ बिभेति ॥ **भियोऽन्यतरस्याम् ६ । ४ । ११५ ॥** इकारो[8] वा स्याद्धलादौ क्ङिति सार्वधातुके । बिभितः, बिभीतः । बिभ्यति । बिभयाञ्चकार, बिभाय[9] । भेता । भेष्यति । बिभेतु, बिभितात्, बिभी-

---

१ "झोऽन्तः" इत्यतोऽनुवर्त्याह—**झस्येति** ॥ २ "कास्प्रत्ययादाम्—" इत्यतोऽनुवर्त्याह—**लिटि आमिति** ॥ ३ भारद्वाजनियमात्थलि वेट्, वमयोः क्रादिनियमादिट् । "णलुत्तमो वा" अजादौ क्ङित्युवङ्, अन्यत्र गुणवृद्धी ॥ ४ 'हुझल्भ्यः—' इति हेर्धिः । आटि 'हुश्नुवोः—' इति यणं बाधित्वा परत्वाद् गुणः॥ ५ "मिदेर्गुणः" इत्यतोऽनुवृत्तेन गुणपदेनोपस्थितस्य 'इकः' इत्येतस्य विशेषणत्वेन तदन्तविधिः"अङ्गस्य" इत्यधिक्रियते चेत्यत आह—**इगन्ताङ्गस्येति** ॥ ६ **अजादाविति** ॥ 'जागृयुः' शृणुयुः इत्यादौ गुणवारणाय "क्सस्याचि" इत्यतोऽनुवृत्तेऽच्पदे विशेषणत्वेन तदादिविधिरिति भावः ॥ ७ 'सिजभ्यस्त—' इति जुस्, 'हुश्नुवोः—' इति यणं बाधित्वा परत्वाद् 'जुसि च' इति गुणः । मिपि गुणः—अजुहवम् । सिचि वृद्धिः । ८ "गमहनजन—" इत्यतः 'क्ङिति' इति "ईहल्यघोः" इत्यतः 'हलि' इति "अत् उत् सार्वधातुके" इत्यतः 'सार्वधातुके' इति "इद्दरिद्रस्य" इत्यतः 'इत्' इति वर्तते इत्यत आह—**इकारो वेत्यादि** ॥ ९ अजादौ क्ङिति 'एरनेकाचः—' इति यण् अन्यत्र गुणवृद्धी ॥

तात् । अबिभेत् । बिभियात्, बिभीयात् । भीयात् । अभैषीत् । अभे-ष्यत् ॥ ह्री लज्जायाम् ॥ ३ ॥ जिह्रेति । जिह्रीतः । जिह्रियति । जिह्रयाञ्चकार, जिह्राय । ह्रेता । ह्रेष्यति । जिह्रेतु । अजिह्रेत् । जिह्री-यात् । ह्रीयात् । अह्रैषीत् । अह्रेष्यत् ॥ पॄ पालनपूरणयोः ॥ ४ ॥ **अर्तिपिपर्त्योश्च ७ । ४ । ७७ ॥** अभ्यासस्य[२] इकारोऽन्तादेशः स्यात् श्लौ । पिपर्ति ॥ **उदोष्ठ्यपूर्वस्य ७ । १ । १०२ ॥** अङ्गावयवौष्ठ्यपूर्वो य ॠत् तदन्तस्याङ्गस्य उत् स्यात् ॥[४] **हलि च ८ । २ । ७७ ॥** रेफवान्तस्य धातोरुपधाया इको दीर्घो हलि[५] । पिपूर्तः । पिपुरति । पपार ॥ **शॄदॄप्रां ह्रस्वो वा ७ । ४ । १२ ॥** एषां लिटि[६] ह्रस्वो वा स्यात् । पप्रतुः[७] ॥ **ऋच्छत्यॄताम् ७।४।११।** तौदादिकऋच्छेर्ऋधातोॠतां च गुणो लिटि । पपरतुः । पपरुः ॥ **[१०]वॄतो वा ७ । २ । ३८ ॥** वृङ्वृञ्भ्यामॄदन्ताच्चेटो[११] दीर्घो वा

---

१ संयोगपूर्वकत्वाद्यणभावादियङ् ॥ २ "अत्र लोपोऽभ्यासस्य" "निजां त्रयाणां गुणः-" "भृञामित्" इत्येभ्योऽनुवर्त्याह-**अभ्यासस्येत्यादि** ॥ ३ गुण-वृद्धी परत्वादिमं बाधेते ॥ ४ "ॠत इद्धातोः" इत्यतोऽनुवर्त्याह-**अङ्गावय-वौष्ठ्यपूर्व इति** ॥ ५ "र्वोरुपधाया दीर्घ इकः" इत्यतोऽनुवर्त्याह-**रेफवान्त-स्येति** ॥ ६ "दयतेर्दिगि-" इत्यतोऽनुवर्त्याह-**लिटीति** ॥ ७ ह्रस्वपक्षे यण् अन्यदा गुणः॥ ८ पिति ह्रस्वाह्रस्वयोर्गुणवृद्धिभ्यां फलाभावात् कित्येवह स्वमुदाहरति॥ ९ "दयतेर्दिगि-" "ऋतश्च संयोगादेर्गुणः" इत्याभ्यामनुवर्त्याह-**गुण** इत्यादि ॥ १० 'वॄ ॠत्' इतिच्छेदः । 'वॄ' शब्देन **वृङ्वृञोरुभयोर्ग्रहणम्** , 'त्यक्तानुबन्धग्रहणे सामान्यग्रहणम्' इति वचनात् , 'ॠत्' इत्यनेन च दीर्घ ॠकारान्तग्रहणम् ॥ ११ आर्धधातुकस्येट्-" "ग्रहोऽलिटि दीर्घः" इत्याभ्यामनुवर्त्याह-**इट** इत्यादि ॥

स्यान्न तु लिटि । परीता, परिता । परीष्यति, परिष्यति । पिपर्तु । अपिपः[1] । अपिपूर्ताम् । अपिपरुः । पिपूर्यात् । पूर्यात् । अपारीत् ॥ **सिचि च परस्मैपदेषु** ७ । २ । ४० ॥ अत्र[2] इटो न दीर्घः । अपारिष्टाम् । अपरीष्यत्, अपरिष्यत् ॥ ओहाक् त्यागे ॥ ९ ॥ जहाति ॥ **जहातेश्च** ६ । ४ । ११६ ॥ इद्वा[3] स्याद्धलादौ क्ङिति सार्वधातुके । जहितः ॥ **ई हल्यघोः** ६ । ४ । ११३ ॥ श्नाभ्य[4]-स्तयोरात ईत् स्यात् सार्वधातुके क्ङिति हलादौ, न तु घोः । जहीतः ॥ **श्नाभ्यस्तयोरातः** ६ । ४ । ११२ ॥ अनयोरातो लोपः[5] क्ङिति सार्वधातुके । जहति[6] । जहौ[7] । हाता । हास्यति । जहातु, जहितात्, जहीतात् ॥ **आ च हौ** ६ । ४ । ११७ ॥ जहातेर्हौ[8] परे आ स्याच्चादिदीतौ । जहाहि, जहिहि, जहीहि । अजहात् । अजहुः[9] ॥

---

१ गुणे हल्ङ्यादिना तिस्योर्लोपः । अपिपृत्—अपिपर्त्=अपिपर्= अपिपः । अभ्यस्तत्वाज्जुस् । उत्वात्परत्वात् 'जुसि च' इति गुणः ॥ २ "वॄतो वा" "न लिङि" इत्याभ्यामनुवर्त्याह—अत्रेत्यादि ॥ ३ "गमहनजन—" "अत उत्—" "इद्दरिद्रस्य" "भियोऽन्यतरस्याम्" इत्येभ्योऽनुवर्त्याह—इद्वेति ॥ ४ "गमहन—" "अत उत्—" "श्नाभ्यस्तयोरात" इत्येभ्योनुवर्त्याह—श्नाभ्यस्तयोरित्यादि ॥ ५ "गमहन—" "अत उत्—" "श्नसोरल्लोपः" इत्येभ्योऽनुवर्त्याह—लोप इत्यादि ॥ ६ अजादौ क्ङिति 'सार्वधातुके' 'श्नाभ्यस्तयोः—' इत्याल्लोपः, हलादौ त्विदीदितौ ॥ ७ 'आत औ णलः' आतो लोपः । इत्यादि पाधातुवत् । ८ "जहातेश्च" "इद्दरिद्रस्य" "ई हल्यघोः" इत्येभ्योऽनुवर्त्याह—जहातेरिति ॥ ९ "सिजभ्यस्त—' इति जुस् 'लङः शाकटायनस्य'—इति जुसूविकल्पस्तु न, परत्वात् 'श्नाभ्यस्तयोः—' इत्याल्लोपे अकारा—

भर्तासि । भरिष्यति, भरिष्यते । बिभर्तु । बिभराणि । बिभृताम् । अबिभः । अबिभृताम् । अबिभरुः । अबिभृत । बिभृयात्, बिभ्रीत । भ्रियात्, भृषीष्ट । अभार्षीत्, अभृत । अभरिष्यत्, अभरिष्यत ॥ डुदाञ् दाने ॥९॥ ददाति । दत्तः[2] । ददति । दत्ते । ददाते । ददते । ददौ, ददे । दातासि, दातासे । दास्यति, दास्यते । ददातु ॥ **दाधा घ्वदाप् १ । १ । २० ॥** दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाप्दैपौ विना ॥ घ्वसोरित्येत्त्वम् । देहि । दत्तम् । अददात्, अदत्त । दद्यात्, ददीत । देयात्, दासीष्ट । अदात् । अदाताम् । अदुः ॥ **स्थाघ्वोरिच्च १ । २ । १७ ॥** अनयोरिदन्तादेशः, सिच्च[3] कित्स्यादात्मनेपदे ॥ अदित । अदास्यत्, अदास्यत ॥ डुधाञ् धारणपोषणयोः ॥१०॥ दधाति ॥ **दधस्तथोश्च ८ । २ । ३८ ॥** द्विरु-

---

१ उपसर्गयोगे—आ=ग्रहणे धातुश्चात्मनपदी भवति—विद्यामादत्ते । व्या=व्यादाने—मुख व्यादाय स्वपिति । समा=प्रसन्नतापूर्वकं ग्रहणे ॥ २ 'श्नाभ्यस्तयोः—' इत्याल्लोपे चर्त्वम् । आशिषि 'एर्लिङि' लुङि 'गातिस्था—' "आतः" उस्यपदान्तात् ॥ ३ 'असंयोगात् लिट—' 'लिङ्सिचावात्मनेपदेषु' "हनःसिच्" इत्येभ्योऽनुवर्त्याह—**सिच्च किदिति** ॥ ४ उपसर्गयोगे—"विपूर्वो धाञ् करोत्यर्थे अभिपूर्वश्च भाषणे ।" यथा—सहसा विदधीत न क्रियाम् । सत्यमभिधेहि । सम्—सन्धौ—शत्रुणा नहि सन्दध्यात् । परि=परिधाने—वस्त्रं परिधत्स्व । अपि=पिधाने—'कर्णौ तत्र पिधातव्यौ निन्दा यत्र प्रवर्तते' । अव=ध्याने—क्षणमवधत्स्व । आ=स्थापने ग्रहणे च 'सरिन्मुखाभ्युच्चयमादधानम्' ( भट्टि—२—८ ) व्यव=व्यवधाने, समा=समाधाने, नि=निधाने स्थापने प्रणि=प्रणिधाने, प्रतिनि=प्रतिनिधौ, सन्नि—सन्निधाने, प्रतिवि=प्रतीकारे, अनुसम्=अनुसन्धाने अन्वेषणे । अन्तर्=अन्तर्धाने, अन्तर्हितः । अन्तर्दधे । तिरस्=तिरोधाने—

क्तस्य झषन्तस्य धाञो बशो भष् स्यात्तथोः स्ध्वोश्च परतः ॥ धत्तः । दधति । दधासि । धत्थः । धत्थ । धत्ते । दधाते । दधते । धत्से । धद्ध्वे । घ्वसोरेद्धावभ्यासलोपश्च । धेहि । अदधात्, अधत्त । दध्यात्, दधीत । धेयात्, धासीष्ट । अधात्, अधित । अधास्यत्, अधास्यत ॥

णिजिर् शौचपोषणयोः ॥ ११ ॥ (वा.) इर इत्संज्ञा वाच्या ॥

**निजां त्रयाणां गुणः श्लौ** ७ । ४ । ७५ ॥ णिज्विज्विषामभ्यासस्य गुणः स्यात् श्लौ ॥ नेनेक्ति । नेनिक्तः । नेनिजति । नेनिक्ते । निनेज, निनिजे । नेक्ता । नेक्ष्यति, नेक्ष्यते । नेनेक्तु । नेनिग्धि ॥

**नाभ्यस्तस्याचि पिति सार्वधातुके** ७ । ३ । ८७ ॥ लघूपधगुणो न स्यात् ॥ नेनिजानि । नेनिक्ताम् । अनेनेक्-ग् । अनेनिक्ताम् । अनेनिजुः । अनेनिजम् । अनेनिक्त । नेनिज्यात् । नेनिजीत निज्यात्, निक्षीष्ट ॥ **इरितो वा** ३ । १ । ५७ ॥ इरितो धातोश्च्लेरङ् वा परस्मैपदेषु । अनिजत्, अनैक्षीत्, अनिक्त । अनेक्ष्यत्, अनेक्ष्यत ॥

॥ इति जुहोत्यादयः ॥ ३ ॥

---

-कृष्णमेघस्तिरोदधे । श्रत्=श्रद्धायाम् । श्रद्धधाति । पुरस्=पुरस्करणे-पुरोधाय, अग्रे कृत्वा इत्यर्थः । पुरोहितः इत्यादि ॥ १ "एकाचो बशो भष् झषन्तस्य स्ध्वोः" इत्यतोऽनुवर्त्याह-**झषन्तस्येति** ॥ २ उपसर्गयोगे-अव=अवनेजने, प्रक्षालने, श्राद्धे पिण्डदानाय वेदिकायां स्थापितकुशेषु जलसेचने, निर्=निर्णेजने-शोधने । चेलनिर्णेजकः । अद्भिर्निर्णिक्तम् (मनु ५-१२७) ॥ ३ "अत्र लोपोऽभ्यासस्य" इत्यतोऽनुवर्त्याह-**अभ्यासस्येति** ॥ ४ "मिदेर्गुणः" "पुगन्तलघूपधस्य-" इत्याभ्यामनुवर्त्याह-**लघूपधगुण** इति ॥ ५ "च्लेः-

अथ दिवादयः ।

दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु ॥ ॥ १ ॥ **दिवादिभ्यः श्यन् ३ । १ । ६९ ॥** शपोऽपवादः ॥ हलि चेति दीर्घः । दीव्यति । दिदेव । देविता । देविष्यति । दीव्यतु । अदीव्यत् । दीव्येत् । दीव्यात् । अदेवीत् । अदेविष्यत् ॥ एवम्-षिवु तन्तुसन्ताने ॥ २ ॥ नृती गात्रविक्षेपे ॥ ३ ॥ नृत्यति । ननर्त । नर्तिता ॥ **सेऽसिचि कृतचृतच्छृदतृदनृतः ७ । २ । ५७ ॥** एभ्यः परस्य सिज्भिन्नस्य सादेरार्धधातुकस्येड्वा ॥ नर्तिष्यति, नर्त्स्यति । नृत्यतु । अनृत्यत् । नृत्येत् । नृत्यात् । अनर्तीत् । अनर्तिष्यत्, अनर्त्स्यत् ॥ त्रसी उद्वेगे ॥ ४ ॥ वा भ्राशेति श्यन्वा । त्रस्यति, त्रसति । तत्रास ॥ **वा जॄभ्रमुत्रसाम् ६ । ४ । १२४ ॥** एषां किति लिटि सेटि थलि च एत्वाभ्यासलोपौ वा ॥ त्रेसतुः, तत्रसतुः ।

---

-सिच् " " अस्यतिवक्तिख्यातिभ्योऽङ् " " पुषादिद्युताद्य्लृदितः-" इत्येभ्योऽनुवर्त्याह-**च्लेरङित्यादि** ॥ १ क्रीडा=खेलनम् । विजिगीषा=जेतुमिच्छा । व्यवहारः=क्रयादिः । कान्तिरिच्छा, द्युतेः पृथग् ग्रहणात् । शेषाः प्रतीतार्थाः । प्रसिद्धिस्तु क्रीडार्थस्यैव द्युत्यर्थस्य चेति बोध्यम् ॥ २ " सार्वधातुके यक् " " कर्तरि शप् " इत्याभ्यामनुवर्त्य फलितमाह-**शपोऽपवाद** इति ॥ ३ श्यनि शकारनकारौ 'लशकु-' 'हलन्त्यम्' इत्याभ्यामित्संज्ञौ । 'तिङ्शित्-' इति सार्वधातुकत्वेन 'सार्वधातुकमपित्' इति ङित्वात् नैव गुण इति भावः ॥ ४ सूच्या वस्त्रसेवने ॥ ५ नर्तने ॥ ६ " वसतिक्षुधोरिट् " "उदितो वा" इत्याभ्यानुवर्त्याह-**इड्वेति** ॥ ७ त्रासे-भये ॥ ८ जॄधातोर्गुणत्वेन भ्रमुधातो-

त्रेसिथ, तत्रसिथ । त्रसिता ॥ शो तनूकरणे ॥ ५ ॥ **ओतः श्यनि ७ । ३ । ७१ ॥** लोपः स्यात् ॥ श्यति । श्यतः । श्यन्ति शशौ । शशतुः । शाता । शास्यति ॥ **विभाषा घ्राधेट्शाच्छासः २ । ४ । ७८ ॥** एभ्यस्सिचो लुग्वा स्यात् परस्मैपदे परे ॥ अशात् अशाताम् । अशुः ॥ इट्सकौ । अशासीत् । अशासिष्टाम् ॥ छो छेदने ॥ ६ ॥ छ्यति ॥ षोऽन्तकर्मणि ॥ ७ ॥ स्यति । ससौ दोऽवखण्डने ॥ ८ ॥ द्यति । ददौ । देयात् । अदात् ॥ व्यध ताडने ॥ ९ ॥ **ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ६ । १ । १६ ॥** एषां सम्प्रसारणं स्यात्किति ङिति च ॥ विध्यति । विव्याध । विविधतुः । विविधुः विव्यधिथ, विव्यद्ध । व्यद्धा । व्यत्स्यति । विध्येत् । विध्यात् अव्यात्सीत् ॥ पुष पुष्टौ ॥ १० ॥ पुष्यति । पुपोष । पुपोषिथ

---

-रादेशादित्वेनानेकहल्मध्यस्थत्वेन च त्रस्धातोरनेकहल्मध्यस्थत्वेनाप्राप्तौ एत्वाभ्यासलोपौ विकल्प्येते इत्याह-**किति लिटीति** ॥ १ तीक्ष्णीकरणे, सूक्ष्मीकरणे च । २ "घोर्लोपो लेटि" इत्यतोऽनुवृत्तमाह-**लोप** इति ॥ ३ 'आदेचः-' इत्यात्वे द्विर्वचनम् । आत औ णलः । किति इटि च ।'आतो लोप इटि च'। थलि भारद्वाजनियमाद् वेट् । वमयोस्तु क्रादिनियमादिट् ॥ ४ " ण्यक्षत्रियार्षञितः-" - " गातिस्थाघुपाभूभ्यः-" इत्याभ्यामनुवर्त्याह-**सिच** इति ॥ ५ अन्तकर्म=नाशः । " राघव ! स्य शरैर्घोरैर्घोरं रावणमाहवे " इति भट्टिः । अत्र राघवेति सम्बोधनम् । स्येति लोटो मध्यमपुरुषैकवचनम् । नाशयेत्यर्थः ॥ ६ "ष्यङः संप्रसारणम् " इत्यतोऽनुवर्त्याह-**संप्रसारणमिति** ॥ ७ 'सार्वधातुकमपित्' इति श्यनो ङित्त्वात् गुणो न ॥ ८ अकिति लिटि द्वित्वे 'लिटयभ्यास-

पोष्टा । पोक्ष्यति । पुषादीत्यङ् । अपुषत् ॥ शुष शोषणे ॥ ११ ॥ शुष्यति । शुशोष । अशुषत् ॥ णश अदर्शने ॥ १२ ॥ नश्यति । ननाश । नेशतुः ॥ **रधादिभ्यश्च** ७ । २ । ४५ ॥ रध् नश् तृप् दृप् द्रुह् मुह् ष्णुह् ष्णिह् एभ्यो वलाद्यार्धधातुकस्य वेट् स्यात् ॥ नेशिथ ॥ **मस्जिनशोर्झलि** ७ । १ । ६० ॥ नुम् स्यात् ॥ ननंष्ठ । नेशिव, नेश्व । नेशिम, नेश्म । नशिता, नंष्टा । नशिष्यति, नङ्क्ष्यति । नश्यतु । अनश्यत् । नश्येत् । नश्यात् । अनशत् ॥ षूङ् प्राणिप्रसवे ॥ १३ ॥ सूयते । सुषुवे । क्रादिनियमादिट् । सुषुविषे । सुषुविवहे । सुषुविमहे । सविता, सोता ॥ दूङ् परितापे ॥ १४ ॥ दूयते ॥ दीङ् क्षये ॥ १५ ॥ दीयते ॥ **दीङो युडचि क्ङिति** ६ । ४ । ६३ ॥ दीङः परस्याजादेः क्ङित आर्धधातुकस्य युट् ॥ ( वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ ) । दिदीये ॥ **मीनातिमिनोतिदीङां ल्यपि च** ६ । १ । ५० ॥ एषामात्वं स्याल्ल्यपि चादशित्येज्निमित्ते ॥ दाता ।

---

–स्य–' इति सम्प्रसारणम्, किति तु परत्वाद् 'ग्रहिज्या–' इति सम्प्रसारणे ततो द्वित्वम् । वकारस्य तु न सम्प्रसारणम्, "न सम्प्रसारणे–" इति निषेधात् ॥ १ "आर्धधातुकस्येड्–" इत्यतः "स्वरतिसूतिसूयति–" इत्यतश्चानुवर्त्याह–**वलाद्येति** ॥ २ "इदितो नुम् धातोः" इत्यतोऽनुवर्त्याह–**नुमिति** ॥ ३ तेन "मृत्पिण्डो घटं प्रसूयते" इत्यादिप्रयोगो न । वस्तुतः प्राणीत्यविवक्षितम्, अतएव 'प्रसूनास्तरवः' प्रयोगः सङ्गच्छते ॥ ४ एतत्तत्त्वं स्वादिगणे धूञ्धातौ व्यक्तीभविष्यति ॥ ५ "आर्धधातुके" इत्यधिकृत्याह–**आर्धधातुकस्येति** ॥ ६ ननु 'दिदीये' इत्यादौ यण आभीयासिद्धतया 'एरनेकाच–' इति यणा भाव्यमत आह–**वुग्युटाविति** ॥ ७ तेन "असिद्धवदत्राभात्" इत्यसिद्धत्वं नेत्यर्थः ॥ ८ "आदेच उपदे–

दास्यति । (स्थाघ्वोरिच्चे दीङः प्रतिषेधः[1]) । अदास्त ॥ डीङ् विहायसा[2] गतौ ॥ १६ ॥ डीयते । डिड्ये । डयिता ॥ पीङ् पाने ॥ १७ ॥ पीयते । पेता । अपेष्ट ॥ माङ् माने ॥ १८ ॥ मायते । ममे ॥ जनी प्रादुर्भावे ॥ १९ ॥ **ज्ञाजनोर्जा ७ । ३ । ७९ ॥** अनयोर्जादेशः स्याच्छिति[3] ॥ जायते । जज्ञे । जनिता । जनिष्यते ॥ **दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ३ । १ । ६१ ॥** एभ्यश्च्लेश्चिण् वा स्यादेकवचने तशब्दे परे ॥ **चिणो लुक् ६ । ४ । १०४ ॥** चिणः परस्य लुक् स्यात् ॥ **जनिवध्योश्च ७ । ३ । ३५ ॥** अनयोरुपधाया[6] वृद्धिर्न स्याच्चिणि ञ्णिति कृति च ॥ अजनि, अजनिष्ट ॥ दीपी दीप्तौ ॥ २० ॥ दीप्यते । दिदीपे । अदीपि, अदीपिष्ट ॥ पद गतौ[7] ॥ २१ ॥ पद्यते । पेदे । पत्ता । पत्सीष्ट ॥ **चिण् ते पदः**

---

–देशेऽशिति” इत्यनुवर्त्याह–**आत्वमित्यादि** ॥ १ **प्रतिषेध** इति । घुसंज्ञाया इति शेषः । तथा च ‘स्थाघ्वोरिच्च’ इतीत्त्वे कर्तव्ये दीङो घुसंज्ञा नेति फलति । तेन प्रणिदातेत्यादौ ‘नेर्गद–’ इति णत्वं भवत्येवेति बोध्यम् ॥ २ विहायसा– आकाशेन । प्रायेणायमुत्पूर्वः–उड्डीयते खे खगः ॥ ३ ष्ठिवुक्लमुचमाम्–” इत्यतोऽनुवर्त्याह–**शितीति** ॥ ४ “चिण् ते पदः” “च्लेः सिच्” इत्याभ्यामनुवर्त्याह– **च्लेरित्यादि** ॥ ५ “अङ्गस्य” इत्यधिकाराच्चिणन्तस्याङ्गत्वप्रयोजनस्यान्यप्रत्ययस्यासम्भवात्प्रत्ययस्यैव लुगिति भावः ॥ ६ “मृजेर्वृद्धिः” “अचो ञ्णिति” “अत उपधायाः” “आतो युक्चिण्कृतोः” “नोदात्तोपदेशस्य–” इत्येभ्योऽनुवर्त्याह–**उपधाया** इत्यादि ॥ ७ प्र=प्राप्तौ, भजने–‘ये यथा मां प्रपद्यन्ते ।’ उद्= उत्पत्तौ–‘दुग्धात् नवनीतमुत्पद्यते’ । वि=विपत्तौ–‘विपद्यते–’ विपन्नो भवतीत्यर्थः । उप=योग्यतायाम्–‘नैतद् त्वय्युपपद्यते’ ॥

३ । १ । ६० ॥ पदक्लेश्चिण् स्यात्तशब्दे परे । अपादि ॥ अपत्सताताम् । अपत्सत ॥ विद सत्तायाम् ॥ २२ ॥ विद्यते । वेत्ता । अवित्त ॥ बुध अवगमने ॥ २३ ॥ बुध्यते । बोद्धा । भोत्स्यते । भुत्सीष्ट । अबोधि, अबुद्ध । अभुत्साताम् ॥ युध संप्रहारे ॥ २४ ॥ युध्यते । युयुधे । योद्धा । अयुद्ध ॥ सृज विसर्गे ॥ २५ ॥ सृज्यते । ससृजे । ससृजिषे ॥ **सृजिदृशोर्झल्यमकिति** ६ । १ । ५८ ॥ अनयोरमागमः स्याज्झलादावकिति ॥ स्रष्टा । स्रक्ष्यति । सृक्षीष्ट । असृष्ट । असृक्षाताम् ॥ मृष तितिक्षायाम् ॥ २६ ॥ मृष्यति । मृष्यते । ममर्ष । ममर्षिथ । ममृषिषे । मर्षितासि । मर्षिष्यति । मर्षिष्यते, ॥ णह बन्धने[2] ॥ ५७ ॥ नह्यति, नह्यते । ननाह । नेहिथ, ननद्ध । नेहे । नद्धा । नत्स्यति ॥ अनात्सीत्, अनद्ध ॥

॥ इति दिवादयः ॥ ४ ॥

---

अथ स्वादयः ।

षुञ् अभिषवे[3] ॥१॥ **स्वादिभ्यः श्नुः** ३ । १ । ७३ ॥ शपोऽपवादः[4] । सुनोति । सुनुतः । हुश्नुवोरिति यण् । सुन्वन्ति । सुन्वः, सुनुवः । सुनुते । सुन्वाते । सुन्वते । सुन्वहे, सुनुवहे । सुषाव,

---

१ "च्लेः सिच्" इत्यतोऽनुवर्त्याह—च्लेरिति ॥ २ सम्=सन्नद्धे—युद्धाय सन्नह्यते ॥ ३ अभिषवः=स्नपनं पीडनं स्नानं सुरासन्धानं च । तत्र स्नानेऽकर्मकः ॥ ४ "सार्वधातुके यक्" "कर्तरि शप्" इत्यतः 'कर्तरि, सार्वधातुके' इत्यनुवृत्तेः फलमाह—श्नपोऽपवाद इति ॥

सुषुवे । सोता । सुनु । सुनवानि, सुनवै । सुनुयात् । सूयात् ॥ **स्तुसुधूञ्भ्यः परस्मैपदेषु ७ । २ । ७२ ॥** एभ्यस्सिच इट् स्यात्परस्मैपदेषु ॥ असावीत्, असोष्ट ॥ चिञ् चयने[2] ॥ २ ॥ चिनोति, चिनुते ॥ **विभाषा चेः ७ । ३ । ५८ ॥** अभ्यासात्[3]परस्य कुत्वं वा स्यात्सनि लिटि च ॥ चिकाय । चिचाय, चिक्ये, चिच्ये । अचैषीत्, अचेष्ट ॥ स्तृञ् आच्छादने[4] ॥ ३ ॥ स्तृणोति, स्तृणुते ॥ **शर्पूर्वाः खयः ७।४।६१ ॥** अभ्यासस्य[5] शर्पूर्वाः खयः शिष्यन्तेऽन्ये हलो लुप्यन्ते ॥ तस्तार । तस्तरतुः । तस्तरे । गुणोर्तीति गुणः । स्तर्यात् ॥ **ऋतश्च संयोगादेः ७ । २ । ४३ ॥** ऋदन्तात्संयोगादेः परयोर्लिङ्[6]सिचोरिड्वा स्यात्तङि ॥ स्तरिषीष्ट, स्तृषीष्ट । अस्तरिष्ट, अस्तृत ॥ धूञ् कम्पने ॥४॥ धुनोति, धुनुते । दुधाव । स्वरतीति वेट् । दुधविथ, दुधोथ ॥ **श्र्युकः किति ७ । २ । ११ ॥** श्रिञ एकाच[7] उगन्ताच्च गित्कितोरिण् न ॥ परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्[8]प्रतिषेधकाण्डारम्भ-

---

१ "इडत्त्यर्तिव्ययतीनाम्" "अञ्जेः सिचि" इत्यतोऽनुवर्त्याह—**सिच इडिति** ॥ २ चयनं=रचनाविशेषः । उप=वृद्धौ, अप=ह्रासे—यो धर्ममुपचिनोति स एव दुःखमपचिनोति । सम्=सञ्चये—कृपणोऽर्थं सञ्चिनोति ॥ ३ "चजोः कु घित्—" "अभ्यासाच्च" "सँल्लिटोर्जेः" इत्येभ्योऽनुवर्त्याह—**अभ्यासादित्यादि** ॥ ४ वि=विस्तारे—विस्तृणोति यशः । सम्=आ=प्रसारणे—कुशान् संस्तृणोति, आस्तृणोति वा ॥ ५ "हलादिः शेषः" इत्यस्यापवादोऽयमित्याह—**अभ्यासस्येति** ॥ ६ "इट् सनि वा" "लिङ्सिचोरात्मनेपदेषु" इत्यतोऽनुवर्त्याह—**लिङ्सिचोरिति** ॥ ७ "नेड्वशि कृति" "एकाच उपदेशे—" इत्यतोऽनुवर्त्याह—**एकाच** इति ॥ ८ पाणिनिना हि "नेड्वशि कृति" 'एकाचः—' 'श्र्युकः—' इत्यादि निषेधप्रकरण-

सामर्थ्यादनेन निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । दुधुविव । दुधुवे । अधावीत्, अधविष्ट, अधोष्ट । अधविष्यत्, अधोष्यत् । अधविष्यताम्, अधोष्यताम् । अधविष्यत, अधोष्यत ॥

॥ इति स्वादयः ॥ ५ ॥

---

अथ तुदादयः ।

**तुद** व्यथने ॥ १ ॥ **तुदादिभ्यः शः** ३।१।७७ ॥ शपोऽपवादः । तुदति, तुदते । तुतोद । तुतोदिथ । तुतुदे । तोत्ता । अतौत्सीत्, अतुत्त ॥ णुद प्रेरणे ॥ २ ॥ नुदति, नुदते । नुनोद । नोत्ता ॥ भ्रस्ज पाके ॥ ३ ॥ ग्रहिज्येति सम्प्रसारणम् । सस्य श्चुत्वेन शः । शस्य जश्त्वेन जः । भृज्जते ॥ **भ्रस्जो रोपधयो रमन्यतरस्याम्** ६ । ४ । ४७ ॥ भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके ॥ मित्त्वादन्त्यादचः परः । स्थानेषष्ठीनिर्देशाद्रोपधयो-

---

-मष्टाध्याय्यां पूर्वमपाठि, 'आर्धधातुकस्येड्वलादेः' "स्वरति-" इत्यादि विधिप्रकरणं च ततः परस्तादिति, तयोर्विरोधे "विप्रतिषेधे परं कार्यम्" इति शास्त्रेण परत्वात्सर्वत्र विधिशास्त्राणां प्रवृत्तौ निषेधशास्त्राणि व्यर्थान्येव स्युरिति सामर्थ्यात्पराण्यपि विधिसूत्राणि बाधित्वा निषेधसूत्राण्येव प्रवर्तन्ते इति सरलार्थः ॥१ व्यथनं=पीडा ॥ २ "कर्तरि शप्" "सार्वधातुके यक्" इत्यतोऽनुवृत्तेः फलमाह-**शपोऽपेति** ॥ ३ परमपि लघूपधगुणं बाधित्वा नित्यत्वात् शे प्रत्यये तस्य ङित्त्वात् लघूपधगुणो नेति भावः ॥ ४ "आर्धधातुके" इत्यधिकृत्याह-**आर्धेति** ॥ ५ रमागमो मित्त्वादन्त्यादचः परो भवन् रोपधयोरिति स्थानषष्ठीनिर्देशात् रेफसकारयोः स्थाने भवति, ततश्चागमोऽप्ययमादेशरूपः संपद्यते । रमि मकार इत्, उकार उच्चारणार्थः ॥

निवृत्तिः । बभर्ज । बभर्जतुः । बभर्जिथ, बभर्ष्ठ । बभ्रज्ज । बभ्रज्जतुः । बभ्रज्जिथ । स्कोरिति सलोपः । व्रश्चेति षः । बभ्रष्ठ । बभर्ज्ज, बभ्रज्जे । भर्ष्टा, भ्रष्टा । भर्क्ष्यति, भ्रक्ष्यति । ( क्ङिति रमागमं बाधित्वा सम्प्रसारणं पूर्वविप्रतिषेधेन )[1] । भृज्ज्यात् । भृज्ज्यास्ताम् । भृज्ज्यासुः । भर्क्षीष्ट, भ्रक्षीष्ट । अभार्क्षीत्, अभ्राक्षीत् । अभर्ष्ट, अभ्रष्ट ॥ कृष विलेखने ॥ ४ ॥ कृषति, कृषते । चकर्ष, चकृषे ॥ **अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्** ६।१।५९ ॥ उपदेशेऽनुदात्तो य ऋदुपधस्तस्याम्वा[2] स्याज्झलादावकिति ॥ क्रष्टा, कर्ष्टा । कृक्षीष्ट । ( स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः ) । अक्राक्षीत्, अकार्क्षीत्, अकृक्षत् । अकृष्ट । अकृक्षाताम् । अकृक्षत । अकृक्षन्त[3] ॥ मिल सङ्गमे ॥ ५ ॥ मिलति, मिलते । मिमेल । मेलिता । अमेलीत् ॥ मुच्लृ मोचने ॥ ६ ॥ **शे मुचादीनाम्** ७।१।५९॥ मुच्लिप्विद्लुप्सिच्कृत्खिद्पिशां नुम्[4] स्यात् ॥ मुञ्चति, मुञ्चते । मोक्ता । मुच्यात् । मुक्षीष्ट । अमुचत्, अमुक्त । अमुक्षाताम् ॥ लुप्लृ छेदने ॥७॥ लुम्पति, लुम्पते । लोप्ता । अलुपत्, अलुप्त ॥ विद्लृ लाभे ॥ ८ ॥ विन्दति, विन्दते । विवेद, विविदे । व्याघ्रभूतिमते सेट् । वेदिता ।

---

१ रमागमस्यावकाशः-भर्ष्टा, भर्क्ष्यतीत्यत्र । संप्रसारणस्यावकाशः-इज्यात्, उच्यात्' इत्यत्र । संप्रसारणं भवति पूर्वविप्रतिषेधेनेति भावः ॥ २ " सृजिदृशोर्झल्यम्-" इत्यतोऽनुवर्त्याह-**अम्वेति** ॥ ३ क्सपक्षे झस्य नात्, 'अनतः' इत्युक्तेः । अन्तादेशोत्तरमकारलोप इति त्वन्यत् ॥ ४ " इदितो नुम्-" इत्यतोऽनुवर्त्याह-**नुमिति** ॥

भाष्यमतेऽनिट् । परिवेत्ता[1] ॥ षिच क्षरणे ॥ ९ ॥ सिञ्चति, सिञ्चते ॥ **लिपिसिचिह्वश्च ३।१।५३॥** एभ्यश्च्लेरङ्[2] स्यात् ॥ असिचत् ॥ **आत्मनेपदेष्वन्यतरस्याम् ३।१।५४ ॥** लिपिसिचिह्वः[3] परस्य च्लेरङ् वा ॥ असिचत, असिक्त ॥ लिप उपदेहे ॥ १० ॥ उपदेहो वृद्धिः । लिम्पति, लिम्पते । लेप्ता । अलिपत् । अलिपत, अलिप्त ॥

## इत्युभयपदिनः ।

**कृती छेदने ॥ ११ ॥** कृन्तति । चकर्त । कर्तिता । कर्तिष्यति, कर्त्स्यति । अकर्तीत् ॥ **खिद परिघाते ॥ १२ ॥** खिन्दति । चिखेद । खेत्ता ॥ **पिश अवयवे ॥ १३ ॥** पिंशति । पेशिता ॥ **ओव्रश्चू छेदने ॥ १४ ॥** वृश्चति । वव्रश्च[4] । वव्रश्चिथ, वव्रष्ठ । व्रश्चिता, व्रष्टा । व्रश्चिष्यति, व्रक्ष्यति । वृश्च्यात् । अव्रश्चीत्, अव्राक्षीत्[5] ॥ व्यच

---

१ तृजन्तस्येदं रूपम् । ज्येष्ठभ्रातुः परिणयात् प्राक् परिणीतो लघुर्भ्राता परिवेत्तेति स्मृतिकाराः ॥ २ "च्लेः सिच्" "अस्यतिवक्तिख्यातिभ्यः" इत्यतोऽनुवर्त्याह–**च्लेरित्यादि** ॥ ३ 'च्लेः' 'अङ्' "लिपिसिचिह्वः–" इत्यनुवर्त्याह–**लिपिसिचीत्यादि** ॥ ४ 'लिट्यभ्यासस्य–' इति संप्रसारणं रेफस्य ऋकारः । उरत्, तस्य 'अचः परस्मिन्–' इति स्थानिवद्भावात् 'न संप्रसारणे–' इति वस्योत्वं नेति बोध्यम् ॥ ५ धातुपाठे सकारस्यैव पाठः, तालव्योपलब्धिस्तु श्चुत्वेनेति तस्यासिद्धत्वात् स्कोरिति सलोपः, व्रश्चेति षः, षढोरिति कः, ततः सस्य षत्वमिति प्रक्रिया । "नकारजावनुस्वार–" इत्युक्तं न विस्मर्तव्यम् । इट्पक्षे ' नेटि ' इति हलन्तलक्षणवृद्धिनिषेधः ॥

व्याजीकरणे ॥ १५ ॥ विचति । विव्याच । विविचतुः । व्यचिता । व्यचिष्यति । विच्यात् । अव्यचीत्, अव्याचीत् । व्यचेः कुटादित्वमनसीति तु नेह प्रवर्तते, अनसीति पर्युदासेन कृन्मात्रविषयत्वात् ॥ उछि उञ्छे ॥ १६ ॥ उञ्छति । 'उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम् ।' इति यादवः ॥ ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु ॥ १७ ॥ ऋच्छति । ऋच्छत्यॄतामिति गुणः । द्विहल्ग्रहणस्याऽनेकहलुपलक्षणत्वान्नुट् । आनर्च्छ । आनर्च्छतुः । ऋच्छिता ॥ उज्झ उत्सर्गे ॥ १८ ॥ उज्झति ॥ लुभ विमोहने ॥ १९ ॥ लुभति ॥ **तीषसहलुभरुषरिषः ७।२।४८ ॥** इच्छत्यादेः परस्य तादेरार्धधातुकस्येड्वा स्यात् ॥ लोभिता, लोब्धा । लोभिष्यति ॥ तृप तृम्फ तृप्तौ ॥ २० ॥ २१ ॥ तृपति । ततर्प । तर्पिता । अतर्पीत् । तृम्फति । ( शे तृम्फादीनां नुम् वाच्यः ) । आदिशब्दः प्रकारे, तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः । ततृम्फ । तृफ्यात् । मृड पृड सुखने ॥ २२ ॥ २३ ॥ मृडति । पृडति ॥ शुन गतौ ॥ २४ ॥ शुनति ॥ इषु इच्छायाम् ॥ २५ ॥ इच्छति । एषिता, एष्टा । एषिष्यति । इष्यात् । ऐषीत् ।

---

१ व्याजीकरणं=छद्मकरणम् ॥ २ " द्वौ नञौ तु समाख्यातौ पर्युदासप्रसज्यकौ । पर्युदासः सदृग्ग्राही प्रसज्यस्तु निषेधकृत् ॥ " एवंच असूभिन्नेऽसूसदृशे कृत्प्रत्यय एव तत्प्रवृत्तेर्नात्र कुटादित्वमिति न सम्प्रसारणादिकमत्र भवतीति भावः ॥ ३ ननु ऋच्छधातोर्गुणे त्रिहल्त्वेन द्विहल्त्वाभावात्कथं नुडित्याशंकां परिहरति-द्विहल्ग्रहणस्येति ॥ ४ विमोहनमाकुलीकरणम् ॥ ५ " स्वरतिसूति-" इत्यतोऽनुवर्त्याह-तादेरार्धेति ॥ ६ " आदिशब्दं तु मेधावी-

कुट कौटिल्ये ॥ २६ ॥ गाङ्कुटादीति ङित्त्वम् । चुकुटिथ । चुकोट । चुकुट । कुटिता ॥ पुट संश्लेषणे ॥२७॥ पुटति । पुटिता ॥ स्फुट विकसने ॥२८॥ स्फुटति । स्फुटिता ॥ स्फुर स्फुल सञ्चलने ॥ २९ ॥ ॥ ३० ॥ स्फुरति । स्फुलति ॥ **स्फुरतिस्फुलत्योर्निर्निविभ्यः ८।३।७६ ॥** षत्वं वा स्यात्[1] ॥ निःष्फुरति, निःस्फुरति ॥ णू स्तवने ॥ ३१ ॥ परिणूतगुणोदयः[2] । नुवति । नुनाव । नुविता ॥ टुमस्जो शुद्धौ ॥ ३२ ॥ मज्जति । ममज्ज । ममज्जिथ । मस्जिनशोरिति नुम् । ( **मस्जेरन्त्यात्पूर्वो नुम्वाच्यः**[3] ) । संयोगादिलोपः । ममङ्क्थ । मङ्क्ता । मङ्क्ष्यति । अमाङ्क्षीत् । अमाङ्क्ताम् । अमाङ्क्षुः ॥ रुजो भङ्गे ॥ ३३ ॥ रुजति । रोक्ता । रोक्ष्यति । अरौक्षीत् ॥ भुजो कौटिल्ये ॥ ३४ ॥ रुजिवत् ॥ विश प्रवेशने ॥ ३५ ॥ विशति ॥ मृश आमर्शने[4] ॥ ३६ ॥ आमर्शनं स्पर्शः ॥ अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ॥ अम्राक्षीत्, अमार्क्षीत्, अमृक्षत् ॥ षद्लृ विशरणगत्यवसादनेषु[5] ॥ ३७ ॥ सीदतीत्यादि ॥ शद्लृ शातने ॥ ३८ ॥ **शदेश्शितः १ । ३ । ६० ॥** शिद्भा-

---

-चतुर्ष्वर्थेषु भाषते । सामीप्ये च व्यवस्थायां प्रकारेऽवयवे तथा ॥" इत्यभियुक्तोक्तेरिति भावः । प्रकारः=सादृश्यम्, तच्च नकारघटितत्वेन । "प्रकारो भेदसादृश्ये" इत्यमरः ॥ १ "अपदान्तस्य मूर्धन्यः" "सिवादीनां वा-" इत्यतोऽनुवर्त्याह-**षत्वं वेति** ॥ २ दीर्घान्तत्वे प्रमाणमुपन्यस्यति-**परिणूत** इति । प्रशंसितो गुणानामुदयो यस्य । 'श्र्युकः-' इति नेट् । ह्रस्वान्तत्वे तु छन्दोभङ्गः स्पष्ट एवेति भावः ॥ ३ अन्त्यादचः परत्वे तु संयोगादिलोपः सकारस्य न भवेदिति वार्तिकम् ॥ ४ परा=विचारे-परामृशति । वि=विमर्शे-चिन्तायाम्-विमृशति ॥ ५ प्र=प्रसादे-मनो धर्माचरणेन प्रसीदति, प्रसीद विश्वेश्वरि पाहि विश्वम् । वि=विषादे-

विनोऽस्मात्तङ्गौनौ स्तः ॥ शीयते । शीयताम् । अशीयत । शीयेत । शशाद । शत्ता । शत्स्यपि । अशदत् । अशत्स्यत् ॥ कॄ विक्षेपे ॥ ३९ ॥ **ॠत इद्धातोः ७ । १ । १०० ॥** ॠदन्तस्य धातोरङ्गस्य इत्स्यात् ॥ किरति । चकार[2] । चकरतुः । चकरुः । करीता, करिता । कीर्यात् ॥ **किरतौ लवने ६ । १ । १४० ॥** [3]उपात्किरतेः सुट् छेदने ॥ उपस्किरति । ( [4]अडभ्यासव्यवायेऽपि सुट् कात् पूर्व इति वक्तव्यम् ) । उपास्किरत् । उपचस्कार ॥ **हिंसायां प्रतेश्च ६ । १ । १४१ ॥** उपात्प्रतेश्च किरतेः सुट् स्यात् हिंसायाम् ॥ उपस्किरति । प्रतिस्किरति ॥ गॄ निगरणे ॥ ४० ॥ **अचि विभाषा ८ । २ । २१ ॥** गिरते[6] रेफस्य लो वाजादौ प्रत्यये ॥ गिरति, गिलति । जगार, जगाल । जगारिथ, जगलिथ । गरीता, गरिता, गलीता, गलिता ॥ प्रच्छ ज्ञीप्सायाम् ॥ ४१ ॥ ग्रहिज्येति सम्प्रसारणम् । पृच्छति । पप्रच्छ । पप्रच्छतुः । पप्रच्छुः ।

---

-तदेव मनः पापाचरणेन विषीदति, यूयं मा विषीदत । अव=अवसादे=ह्रासे-अकर्मण्योऽवसीदति । उद्=उत्सादे=नाशे-पापकृदुत्सीदति । आ=समीपगमने-पान्थः कूपमेकमाससाद, गुरुमासीदति ॥ नि=स्थितौ-इतो निषीद । आङं विना सर्वत्राकर्मकश्च धातुर्भवति ॥ १ "अनुदात्तङितः-" इत्यतोऽनुवर्त्याह-**तङाना-विति** ॥ २ 'इत्त्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन' इत्याश्रित्याह-**चकारेति** ॥ ३ "सुट् कात् पूर्वः" "उपात् प्रतियत्न-" इत्यतोऽनुवर्त्याह-**उपादिति** ॥ ४ "सुट् कात्पूर्वः" इति सूत्रे 'अडभ्यासव्यवायेऽपि' इति वार्तिकं कर्तव्यमित्यर्थः॥ ५ "सुट् कात्" "उपात् प्रतियत्न-" "किरतौ लवने" इत्यतोऽनुवर्त्याह-**उपादित्यादि** ॥ ६ "कृपो रो लः" "ग्रो यङि" इत्यतोऽनुवर्त्याह-**गिरतेरित्यादि** ॥

प्रष्टा। प्रक्ष्यति। अप्राक्षीत् ॥ मृङ् प्राणत्यागे ॥ ४२ ॥ **म्रियतेर्लुङ्लिङोश्च १।३।६१** ॥ लुङ्लिङोः शितश्च[1] प्रकृतिभूतान्मृङस्तङ्[2] नान्यत्र ॥ रिङ्। इयङ्। म्रियते। ममार। मर्ता। मरिष्यति। मृषीष्ट। अमृत ॥ पृङ् व्यायामे ॥ ४३ ॥ प्रायेणायं व्याङ्पूर्वः। व्याप्रियते। व्यापप्रे। व्यापप्राते। व्यापरिष्यते। व्यापृत। व्यापृषाताम् ॥ जुषी-प्रीतिसेवनयोः ॥ ४४ ॥ जुषते। जुजुषे ॥ ओविजी भयचलनयोः ॥ ४५ ॥ प्रायेण उत्पूर्वः। उद्विजते ॥ **विज इट् १।२।६२** ॥ विजेः पर इडादिप्रत्ययो ङिद्वत्[3] ॥ उद्विजिता ॥

इति तुदादयः ॥ ६ ॥

## अथ रुधादयः।

रुधिर् आवरणे[4] ॥ १ ॥ **रुधादिभ्यः श्नम् ३।१।७८** ॥ शपोऽपवादः[5] ॥ रुणद्धि। श्नसोरल्लोपः। रुन्धः[6]। रुन्धन्ति। रुणत्सि। रुन्धः। रुन्ध। रुणध्मि। रुन्ध्वः। रुन्ध्मः। रुन्धे। रुन्धाते।

---

१ "अनुदात्तङितः–" "शदेः शितः" इत्यतोऽनुवर्त्याह–**शितश्चेति** ॥ २ मृङो लङ्–विधिलिङ्–लट्–लोट्–लुङाशीर्लिङ्–विभक्तिषु आत्मनेपदमेव स्यात्, परस्मैपदमन्यतः ॥ ३ "गाङ्कुटादिभ्यः" इत्यतोऽनुवर्त्याह–**ङिद्वदिति** ॥ ४ आवरणं=रोधनम्। अनु=अनुरोधे ( सिफ़ारिश )–आग्रही स्वपक्षमनुरुन्धे। वि=विरोधे–हितं विरुणद्धि मूर्खः। नि=निरोधे–शत्रुं निरुणद्धि इत्यादि ॥ ५ "सार्वधातुके यक्" "कर्तरि शप्" इत्यतोऽनुवृत्तेः फलितमाह–**शपोऽपेति** ॥ ६ णत्वस्यासिद्धत्वादनुस्वारः परसवर्णः, तस्यासिद्धत्वाण्णत्वं नेति बोध्यम् ॥

रुन्धते । रुन्त्से । रुन्धाथे । रुन्ध्वे । रुन्धे । रुन्ध्वहे । रुन्ध्महे । रुरोध, रुरुधे । रोद्धासि, रोद्धासे । रोत्स्यति, रोत्स्यते । रुणद्धु, रुन्धात्-द् । रुन्धाम् । रुन्धन्तु । रुन्धि । रुणधानि । रुणधाव । रुणधाम । रुन्धाम् । रुन्धाताम् । रुन्धताम् । रुन्त्स्व । रुणधै । रुणधावहै । रुणधामहै । अरुणत्, अरुणद् । अरुन्धाम् । अरुन्धन् । अरुणः[1], अरुणत्, अरुणद् । अरुन्ध । अरुन्धाताम् । अरुन्धत । अरुन्धाः । रुन्ध्यात् । रुन्धीत । रुध्यात् । रुत्सीष्ट । अरुधत्, अरौत्सीत् । अरुद्ध । अरुत्साताम् । अरुत्सत । अरोत्स्यत्, अरोत्स्यत ॥ भिदिर् विदारणे ॥ २ ॥ छिदिर् द्वैधीकरणे ॥ ३ ॥ युजिर् योगे[2] ॥ ४ ॥ रिचिर् विरेचने ॥ ५ ॥ रिणक्ति, रिङ्क्ते । रिरेच । रेक्ता । रेक्ष्यति । अरिणक्-ग् । अरिचत्, अरैक्षीत्, अरिक्त ॥ विचिर् पृथग्भावे ॥ ६ ॥ विनक्ति, विङ्क्ते ॥ क्षुदिर् संपेषणे ॥ ७ ॥ क्षुणत्ति, क्षुन्ते । क्षोत्ता । अक्षुदत्, अक्षौत्सीत्, अक्षुत्त ॥ उच्छृदिर् दीप्तिदेवनयोः ॥ ८ ॥ छृणत्ति, छृन्ते । चच्छर्द । से सिचीति वेट् । चच्छृदिषे, चच्छृत्से । छर्दिता । छर्दिष्यति, छर्त्स्यति । अच्छृदत्, अच्छर्दिष्ट ॥ उतृदिर् हिंसानादरयोः ॥ ९ ॥ तृणत्ति, तृन्ते ॥ कृती वेष्टने ॥ १० ॥ कृणत्ति ॥ तृह हिसि हिंसायाम् ॥ ११ ॥ १२ ॥ **तृणह इम्**

---

१ **अरुण** इति । सिपि 'दश्च' इति रुर्वा । एवम् 'अभिनः' इत्यत्रापि ॥

२ योगः=मेलनम् । उद्=उद्योगे-साधवः परहितायोद्युञ्जते । प्र=प्रयोगे-अपदं न प्रयुञ्जीत । नि=नियोजने=नियतीकरणे-सेवायां भृत्यं नियुङ्क्ते । अनु=प्रश्ने-शिष्यो गुरुमनुयुङ्क्ते, स किं नियुङ्क्ते । उप=उपयोगे=उपकारे-धनं परहिताय प्रयुङ्क्ते । अत्र केवलम् 'उद्' योगे धातुरकर्मको भवति ॥

७।३।९२ ॥ तृहः श्नमि कृते इमागमो हलादौ[1] पिति सार्वधातुके ॥ तृणेढि । तृण्ढः । ततर्ह । तर्हिता । अतृणेट्-ड् ॥ **श्नान्नलोपः** ६।४।१३ ॥ श्नमः परस्य नस्य लोपः स्यात् ॥ हिनस्ति । जिहिंस । हिंसिता ॥ **तिप्यनस्तेः** ८।२।७३ ॥ पदान्तस्य[2] सस्य दः स्यात्तिपि न त्वस्तेः ॥ ससजुषोरुरित्यस्यापवादः । अहिनत्, अहिनद् । अहिंस्ताम् । अहिंसन् ॥ **सिपि धातो रुर्वा** ॥ ८।२।७४ ॥ पदान्तस्य[3] धातोः सस्य रुः, पक्षे दः ॥ अहिनः, अहिनत्, अहिनद् ॥ उन्दी क्लेदने[4] ॥ १३ ॥ उनत्ति । उन्तः । उन्दन्ति । उन्दाञ्चकार । औनत्-द् । औन्ताम् । औन्दन् । औनः, औनत्, औनद् । औनदम् ॥ अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु[5] ॥ १४ ॥ अनक्ति । अङ्क्तः । अञ्जन्ति । आनञ्ज । आनञ्जिथ, आनङ्क्थ । अञ्जिता, अङ्क्ता । अङ्ग्धि ॥ अनजानि । आनक्-ग् ॥ **अञ्जेः सिचि** ७।२।७१ ॥ अञ्जेः सिचो नित्यमिट्[6] स्यात् ॥ आञ्जीत् ॥

---

१ "नाभ्यस्तस्याचि-" "उतो वृद्धिर्लुकि-" इत्यतोऽनुवर्त्याह-**हलादौ पितीति** ॥ २ "पदस्य" "ससजुषोः-" "वसुस्रंसु-" इत्यतोऽनुवर्त्याह-**पदान्तस्येति** ॥ ३ "पदस्य" इत्यधिक्रियते । "ससजुषोः-" इत्यतः 'सः' इति वर्तते । वाशब्दश्चार्थे समुच्चये । तेन 'वसुस्रंसु-' इत्यतोऽनुवृत्तो 'दः' इति समुच्चीयते । ततश्चेदमेव सूत्रं रुत्वं दत्वं चेति कार्यद्वयं विदधातीति संसिध्यति । 'झलां जशोऽन्ते' इत्यनेन तु दत्वं भवितुं नार्हति, रुत्वस्य तदपवादस्य जागरूकत्वात् इत्याह-**पदान्तस्येति** ॥ ४ क्लेदनम्=आर्द्रीभावः ॥ ५ व्यक्तिः=विवेचनम्, म्रक्षणं=स्निग्धता ॥ ६ "इड्त्त्यर्तिव्ययतीनाम" इत्यतोऽनुवर्त्याह-**नित्यमिडिति** ।

तञ्चू संकोचने ॥ १५ ॥ तनक्ति । तञ्चिता, तङ्क्ता । ओविजी भयचलनयोः ॥ १६ ॥ विनक्ति । विङ्क्तः । विज इडिति ङित्त्वम् । विविजिथ । विजिता । अविनक्-ग् । अविजीत् ॥ शिष्लृ विशेषणे ॥ ॥१७॥ शिनष्टि । शिंष्टः । शिंषन्ति । शिनक्षि । शिशेष । शिशेषिथ । शेष्टा । शेक्ष्यति । हेर्धिः । शिण्ड्ढि । शिनषाणि । अशिनट्-ड् । शिंष्यात् । शिष्यात् । अशिषत् ॥ एवम्—पिष्लृ संचूर्णने ॥ ॥ १८ ॥ भञ्जो आमर्दने ॥ १९ ॥ श्नान्नलोपः । भनक्ति । बभञ्जिथ, बभङ्क्थ । भङ्क्ता । भङ्ग्धि । अभाङ्क्षीत् ॥ भुज पालनाभ्यवहारयोः ॥ २० ॥ भुनक्ति । भोक्ता । भोक्ष्यति । अभुनक्-ग् ॥ **भुजोऽनवने[2] १ । ३ । ६६ ॥** तङानौ[3] स्तः ॥ ओदनं भुङ्क्ते । अनवने किम् ? महीं भुनक्ति ॥ ञिइन्धी दीप्तौ ॥ २१ ॥ इन्द्धे । इन्धाते । इन्धते । इन्त्से । इन्ध्वे । इन्धाञ्चक्रे । इन्धिता । इन्धाम् । इन्धाताम् । इनधै । ऐन्ध । ऐन्धाताम् । ऐन्धाः ॥ विद विचारणे ॥ ॥ २२ ॥ विन्ते । वेत्ता ॥

इति रुधादयः ॥ ७ ॥

---

१ जश्त्वम् । ष्टुत्वम् । 'झरो झरि' इति वा डलोपः । अनुस्वारपरसवर्णौ इत्यपि बोध्यम् ॥ २ "भुजः पालनभिन्नार्थे सदा स्यादात्मनेपदम् । आत्मनेपदमेव स्यात् सन्नन्तादपि पूर्ववत् ॥" यथा—असौ अन्नं भुङ्क्ते, असौ अन्नं बुभुक्षते (भोक्तुमिच्छति), राजा पृथिवीं भुनक्ति (पालयति) । राजा पृथिवीं बुभुक्षति (पालयितुमिच्छति) ॥ ३ "अनुदात्तङितः—" इत्यतः 'आत्मनेपदम्' इति वर्ततेऽत आह—**तङानाविति** ॥

अथ तनादयः ।

तनु विस्तारे ॥ १ ॥ **तनादिकृञ्भ्य उः ६ । १ । ७९ ॥** शपोऽपवादः । तनोति, तनुते । ततान, तेने । तनितासि, तनितासे । तनिष्यति, तनिष्यते । तनोतु । तनुताम् । अतनोत्-द्, अतनुत । तनुयात्, तन्वीत । तन्यात्, तनिषीष्ट । अतानीत्, अतनीत् । **तनादिभ्यस्तथासोः २ । ४ । ७९ ॥** तनादेः सिचो वा लुक् स्यात्तथासोः ॥ अतत, अतनिष्ट । अतथाः, अतनिष्ठाः । अतनिष्यत्, अतनिष्यत ॥ षणु दाने ॥ २ ॥ सनोति, सनुते ॥ **ये विभाषा ६ । ४ । ४३ ॥** जनसनखनामात्वं वा यादौ क्ङिति। सायात्, सन्यात् ॥ **जनसनखनां सञ्झलोः ६ । ४ । ४२ ॥** एषामाकारोऽन्तादेशः स्यात् सनि झलादौ क्ङिति ॥ असात, असनिष्ट । असाथाः, असनिष्ठाः ॥ क्षणु हिंसायाम् ॥ ३ ॥ क्षणोति, क्षणुते ॥ ह्म्यन्तेति न वृद्धिः ॥ अक्षणीत्, अक्षत, अक्षणिष्ट । अक्षथाः, अक्षणिष्ठाः ॥ क्षिणु च ॥ ४ ॥ उप्रत्यये लघूपधस्य गुणो वा ॥

---

१ तनादित्वादेव सिद्धे कृञ्ग्रहणम् 'गणकार्यमनित्यम्' इति ज्ञापयतीति केचित् ॥ २ "सार्वधातुके यक्" "कर्तरि शप्" इत्यतोऽनुवृत्तेः फलमाह-**शपोऽपवाद** इति ॥ ३ "गातिस्थाघुपाभूभ्यः" "ण्यक्षत्रियार्ष-" इत्यतोऽनुवर्त्याह-**सिच** इति ॥ अत्र थासा साहचर्यादेकवचनं तशब्दो गृह्यते । तेनेह न-'यूयमतनिष्ट' इति ॥ ४ "विड्वनोरनुनासिकस्यात्" "जनसनखनां सञ्झलोः" इत्यतोऽनुवर्त्याह-**जनसनखनामिति** ॥ ५ "विड्वनोरनुनासिकस्यात्" "अनुदात्तोपदेश-" इत्यतोऽनुवर्त्याह-**आकारोऽन्तेति** ॥ ६ संज्ञापूर्वको विधिरनित्य इति वचनात् ।-

क्षेणोति, क्षिणोति । क्षेणिता । अक्षेणीत्, अक्षित, अक्षेणिष्ट ॥ तृणु अदने ॥ ५ ॥ तृणोति, तर्णोति, तृणुते, तर्णुते ॥ डुकृञ् करणे ॥ ६ ॥ करोति ॥ अत उत्सार्वधातुके ॥ कुरुतः ॥ **न भकुर्छुराम् ८।२।७९ ॥** भस्य कुर्छुरोरुपधाया न दीर्घः ॥ कुर्वन्ति ॥ **नित्यं करोतेः ६ । ४ । १०८ ॥** करोतेः प्रत्ययोकारस्य नित्यं लोपो म्वोः परयोः ॥ कुर्वः । कुर्मः । कुरुते । चकार, चक्रे । कर्तासि, कर्तासे । करिष्यति, करिष्यते । करोतु । कुरुताम् । अकरोत् । अकुरुत ॥ **ये च ५ । ४ । १०९ ॥** कृञ उलोपो यादौ प्रत्यये परे ॥ कुर्यात्, कुर्वीत । क्रियात्, कृषीष्ट । अकार्षीत्, अकृत । अकरिष्यत्, अकरिष्यत ॥ **सम्परिभ्यां करोतौ भूषणे ६ । १ । १३७ ॥**

---

–गुणाभावे 'क्षिणोति' इत्यादि रूपम्, वचनानङ्गीकारे तु गुणो भवतीति 'क्षेणोति' इत्यादि रूपमिति नेदमपूर्ववचनमिति ध्येयम् ॥ १ सम्=संस्कारे, अग्निना जलं संस्करोति । अधि=अधिकारे–शत्रुमधिकरोति । अनु=अनुकरणे,-पितरमनुकरोति। परा= निरा=निवारणे–शत्रून् पराकरोति निराकरोति वा । वि=विकारे–क्रोष्टा विकुरुते स्वरान् । अप=अपकारे–शत्रुमपकुरुते । उप=उपकारे–मित्रमुपकुरुते । प्रति=प्रतीकारे– रोगं प्रतिकरोति । आविस्=आविष्कारे–कलामाविष्करोति । नमस्=नमस्कारे–गुरून् नमस्करोति ऊरी=उररी=स्वीकारे–प्रतिज्ञातमर्थमूरीकरोति, उररीकरोति वा । तिरस्=तिरस्कारे–धूर्तं तिरस्करोति । परि=शोधने–परिष्करोति इत्यादि ॥ २ "र्वोरुपधाया दीर्घ इकः" इत्यतोऽनुवर्त्याह–**उपधाया** इति ॥ ३ "उतश्च प्रत्ययाद्–" "लोपश्चास्यान्यतरस्याम्–" इत्यतोऽनुवर्त्याह–**प्रत्ययोकारस्येति** ॥ ४ " नित्यं करोतेः" इत्यनुवर्त्याह–**कृञ** इति ॥

**समवाये च ६ । १ । १३८ ॥** सम्परिपूर्वस्य करोतेः सुट्[1] स्याद्भूषणे संघाते चार्थे ॥ संस्करोति[2] । अलंकरोतीत्यर्थः । संस्कुर्वन्ति सङ्घीभवन्तीत्यर्थः । सम्पूर्वस्य क्वचिदभूषणेऽपि सुट् । 'संस्कृतं भक्षा' इति ज्ञापकात् ॥ **उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च ६ । १ । १३९ ॥** उपात्कृञः[3] सुट् स्यादेष्वर्थेषु चात्प्रागुक्तयोरर्थयोः ॥ प्रतियत्नो गुणाधानम् । विकृतमेव । वैकृतं विकारः । वाक्याध्याहार आकांक्षितैकदेशपूरणम् । उपस्कृता[4] कन्या । उपस्कृता ब्राह्मणाः । एधोदकस्योपस्कुरुते । उपस्कृतं भुङ्क्ते । उपस्कृतं ब्रूते ॥ **वनु याचने ॥ ७ ॥** वनुते । ववने ॥ **मनु अवबोधने ॥ ८ ॥** मनुते । मेने । मनिता । मनिष्यते । मनुताम् । अमनुत । मन्वीत । मनिषीष्ट । अमत, अमनिष्ट । अमनिष्यत ॥

इति तनादयः ॥ ८ ॥

---

१ "सुट् कात्पूर्वः" इत्यनुवर्त्याह–**सुट् स्यादिति** ॥ २ 'सुट् कात्पूर्वः अडभ्यासव्यवायेऽपि' इत्युक्तम् । सञ्चस्कार । ऋतश्च 'संयोगादेर्गुणः' सञ्चस्करतुः । 'कृ–सृ–भृ–'इति सूत्रे 'ऋतो भारद्वाजस्य' इति सूत्रे च 'कृञोऽसुटः' इति वार्तिकात् ससुट्कात्परस्येट्–सञ्चस्करिथ, सञ्चस्करिव । आशिषि संस्क्रियात् । 'गुणोर्ति–' इति गुणस्तु न, 'नित्यं यः संयोगादिस्तस्य' इति तदर्थात् । तङि–संस्कृषीष्ट । समस्कृत । 'ऋतश्च संयोगादेः' इति इडागमस्तु न भवति । उपदेशे यः संयोगादिरिति तदर्थादित्यन्यत्र विस्तरः ॥ ३ "सुट् कात्पूर्वः" "संपरिभ्यां करोतौ भूषणे" "समवाये च" इत्यतोऽनुवर्त्याह–**कृञ** इत्यादि ॥ ४ उपस्कृता=अलङ्कृता । **उपस्कुरुते**= गुणाधानं करोति । उपस्कृतं=विकृतम् । ब्रूते=वाक्याध्याहारेण ब्रूते ॥

अथ क्र्यादयः।

डुक्रीञ् द्रव्यविनिमये[1] ॥ १ ॥ **क्र्यादिभ्यः श्ना ३ । १ । ८१ ॥** शपोऽपवादः[2] ॥ क्रीणाति । ई हल्यघोः[3] । क्रीणीतः । श्नाभ्यस्तयोरातः । क्रीणन्ति । क्रीणासि । क्रीणीथः । क्रीणीथ । क्रीणामि । क्रीणीवः । क्रीणीमः । क्रीणीते । क्रीणाते । क्रीणते । क्रीणीषे । क्रीणाथे । क्रीणीध्वे । क्रीणे । क्रीणीवहे । क्रीणीमहे । चिक्राय । चिक्रियतुः । चिक्रियुः । चिक्रयिथ, चिक्रेथ । चिक्रिये । क्रेता । क्रेष्यति, क्रेष्यते । क्रीणातु । क्रीणीतात्-द् । क्रीणीताम् । अक्रीणात्, अक्रीणीत । क्रीणीयात्, क्रीणीत । क्रीयात्, क्रेषीष्ट । अक्रैषीत्, अक्रेष्ट । अक्रेष्यत्, अक्रेष्यत ॥ प्रीञ् तर्पणे कान्तौ च ॥ २ ॥ प्रीणाति, प्रीणीते ॥ श्रीञ् पाके ॥ ३ ॥ श्रीणाति, श्रीणीते ॥ मीङ् हिंसायाम् ॥ ४ ॥ **हिनुमीना ८ । ४ । १५ ॥** उपसर्गस्थान्निमित्तात्परस्यैतयोर्नस्य णः स्यात्[4] ॥ प्रमीणाति, प्रमीणीते । मीनातीत्यात्त्वम् । ममौ । मिम्यतुः । ममिथ, ममाथ । मिम्ये । माता । मास्यति । मीयात्, मासीष्ट । अमासीत् । अमासिष्टाम् । अमास्त ॥ षिञ् बन्धने ॥ ५ ॥ सिनाति, सिनीते । सिषाय, सिष्ये । सेता ॥ स्कुञ् आप्लवने ॥ ६ ॥ **स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः**

---

१ द्रव्यविनिमयः=क्रयणम् । वि=विक्रये—अन्नं विक्रीणाति । प्रति=प्रतिदाने-तिलेभ्यः माषान् प्रतिक्रीणीते ॥ २ "सार्वधातुके यक्" "कर्तरि शप्" इत्यनुवृत्तेः फलितमाह-**शपोऽपवाद** इति ॥ ३ सर्वत्र हलादौ क्ङिति ईत्वम्, अजादौ त्वाकारलोप इति भावः ॥ ४ "रषाभ्यां नो णः" "उपसर्गादसमासेऽपि"-

**स्तुश्च ३ । १ । ८२ ॥** चात् श्ना[1] ॥ स्कुनोति, स्कुनाति । स्कुनुते, स्कुनीते । चुस्काव, चुस्कुवे । स्कोता । अस्कौषीत्, अस्कोष्ट ॥ स्तन्भ्वादयश्चत्वारः सौत्राः। सर्वे रोधनार्थाः परस्मैपदिनः॥ **हलः श्नः शानज्झौ ३।१।८३ ॥** हलः परस्य श्नः शानजादेशः स्याद्धौ परे। स्तभान ॥ **जॄस्तन्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ३।१।५८ ॥** च्लेरङ्[2] वा स्यात् ॥ **स्तन्भेः ८।३।६७॥** स्तन्भेः सौत्रस्य सस्य[3] षः स्यात् ॥ व्यष्टभत् । अस्तम्भीत् ॥ युञ् बन्धने ॥७॥ युनाति । युनीते । योता ॥ क्नूञ् शब्दे ॥ ८ ॥ क्नूनाति, क्नूनीते । क्नविता ॥ द्रूञ् हिंसायाम् ॥ ९ ॥ द्रूणाति, द्रूणीते ॥ द्रूञ् हिंसायाम् ॥ १० ॥ द्रूणाति । द्रूणीते ॥ पूञ् पवने ॥११॥ **प्वादीनां ह्रस्वः ७।३।८०॥** पूञ् लूञ् स्तॄञ् कॄञ् वॄञ् धूञ् शॄ पॄ वॄ भॄ मॄ दॄ जॄ झॄ धॄ नॄ कॄ ॠ गॄ ज्या री ली व्ली प्लीनां चतुर्विंशतेः[4] शिति[5] ह्रस्वः ॥ पुनाति, पुनीते ।

---

–इत्यतोऽनुवर्त्याह–**उपसर्गेति** ॥ १ "क्र्यादिभ्यः श्ना" इत्यतोऽनुवर्त्याह–**चात् श्नेति** ॥ २ "च्लेः सिच्" "अस्यतिवक्तिख्यातिभ्योऽङ्" "इरितो वा" इत्यतोऽनुवर्त्याह–**च्लेरङ् वेति** ॥ ३ "अपदान्तस्य मूर्धन्यः" "सहेः साडः सः" "उपसर्गात् सुनोति–" इत्येभ्योऽनुवर्त्याह–**सस्येति** ॥ ४ एकोनविंशतिमारभ्य नवनवत्यन्ताः सर्वेऽपि संख्यावाचकाः स्त्रीलिङ्गैकवचने व्यवहृता भवन्ति, नैषां विशेष्यीयलिङ्गवचनानुसारं किंचित् परिवर्तनं भवति । यथा–एकोनविंशतिः गजाः, विंशतिः नद्यः, एकविंशतिः फलानि, चत्वारिंशत् नराः, चत्वारिंशत् स्त्रियः, चत्वारिंशत् गृहाणीति । शतसहस्रादयस्तु संख्याशब्दाः सदा क्लीबैकवचने व्यवह्रियन्ते । एषामपि नैव किंचिद्विशेष्याधीनं परिवर्तनं भवति । यथा–शतं नराः, शतं नार्यः, शतं मित्राणि, सहस्रेण पुरुषैः, सहस्रेण स्त्रीभिः, सहस्रेण नेत्रैरित्यादि ॥ ५ "ष्ठिवुक्लमुचमाम्" इत्यतोऽनुवर्त्याह–**शितीति** ॥

पविता ॥ लूञ् छेदने ॥ १२ ॥ लुनाति, लुनीते ॥ स्तॄञ् आच्छादने ॥ १३ ॥ स्तृणाति । शर्पूर्वाः खयः । तस्तार । तस्तरतुः । तस्तरे । स्तरीता, स्तरिता । स्तृणीयात्, स्तृणीत । स्तीर्यात् ॥ **लिङ्सिचोरात्मनेपदेषु ७ । २ । ४२ ॥** [1]वृङ्वृञ्भ्यामॄदन्ताच्च परयोर्लिङ्सिचोरिड्वा स्यात्तङि ॥ **न लिङि ७ । २ । ३९ ॥** [2]वॄत इटो लिङि न दीर्घः ॥ स्तरिषीष्ट । उश्चेत्यनेन कित्त्वम् । स्तीर्षीष्ट । सिचि च परस्मैपदेषु । अस्तारीत् । अस्तारिष्टाम् । अस्तारिषुः ॥ अस्तरीष्ट, अस्तरिष्ट, अस्तीर्ष्ट ॥ कॄञ् हिंसायाम् ॥ १४ ॥ कृणाति, कृणीते, । चकार, चकरे ॥ वॄञ् वरणे ॥ १५ ॥ वृणाति, वृणीते । ववार, ववरे । वरिता, वरीता । उदोष्ठ्येत्युत्त्वम् । वूर्यात् । [3]वरिषीष्ट, वूर्षीष्ट । अवारीत् । अवारिष्टाम् । अवरिष्ट, अवरीष्ट, अवूर्ष्ट ॥ धूञ् कम्पने ॥ १६ ॥ धुनाति, धुनीते । धविता, धोता । अधावीत् । अधविष्ट, अधोष्ट ॥ ग्रह उपादाने[4] ॥ १७ ॥ गृह्णाति, गृह्णीते । जग्राह, जगृहे ॥ **ग्रहोऽलिटि दीर्घः ७।२।३७ ॥**

---

१ "वॄतो वा" "इट् सनि वा" इत्यतोऽनुवर्त्याह-वृङ्वृञ्भ्यामिति ॥ २ "ग्रहोऽलिटि-" "वॄतो वा" इत्यतोऽनुवर्त्याह-वॄत इति ॥ ३ वरिषीष्टेति । 'लिङ्सिचोरात्मनेपदेषु' इति वेट् ॥ ४ उपादानं=ग्रहणम् । अनु=अनुग्रहे-दयालवः प्राणिमात्रमनुगृह्णन्ति, गुरो ! मामनुगृहाण । प्रति=प्रतिग्रहे-स्वीकारे-दीनाः दानं प्रतिगृह्णन्ति, स वृत्तिं प्रतिगृह्णाति । वि=विग्रहे-युद्धे च । अध्यापकश्छात्राणां बोधाय समस्तं पदं विगृह्णाति, शूराः युद्धे शत्रून् विगृह्णन्ति । नि=निग्रहे-धीरः स्वमन एव निगृह्णाति । आ=आग्रहे-आग्रही स्ववचनमेवागृह्णाति । अव=अवग्रहे-पाश्चात्त्यो वातो वृष्टिमवगृह्णाति । अवग्रहः=वृष्टिप्रतिबन्धः ॥

एकाचो ग्रहेर्विहितस्येटो दीर्घो न तु लिटि ॥ ग्रहीता। गृह्णातु ॥ हलः श्नः शानज्झौ ॥ गृहाण। गृह्यात्, ग्रहीषीष्ट। ह्म्यन्तेति न वृद्धिः। अग्रहीत्। अग्रहीष्टाम्। अग्रहीष्ट। अग्रहीषाताम् ॥ कुष निष्कर्षे ॥ १८ ॥ कुष्णाति। कोषिता ॥ अश भोजने ॥ १९ ॥ अश्नाति। आश। अशिता। अशिष्यति। अश्नातु। अशान ॥ मुष स्तेये ॥ २० ॥ मोषिता। मुषाण ॥ ज्ञा अवबोधने ॥ २१ ॥ जज्ञौ ॥ वृङ् संभक्तौ ॥ २२ ॥ वृणीते। ववृषे। ववृढ्वे। वरीता, वरिता। अवरीष्ट, अवरिष्ट, अवृत ॥

इति क्र्यादयः ॥ ९ ॥

---

## अथ चुरादयः।

चुर स्तेये ॥ १ ॥ **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ३। १। २५** ॥ एभ्यो णिच् स्यात्। चूर्णान्तेभ्यः 'प्रातिपदिकाद्धात्वर्थे' इत्येव सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम्। चुरादिभ्यस्तु स्वार्थे[3]।

---

[1] "एकाच उपदेशे-" "आर्धधातुकस्येट्-" इत्यतोऽनुवर्त्याह-**एकाच इति** ॥
[2] अनु=आज्ञायाम्-तत् अनुजानीहि मां गमनाय। प्रति=प्रतिज्ञायाम्-कथं वृथा प्रतिजानीते। अव=अवज्ञायाम्-अनादरे दरिद्रं नावजानीयात्। अप=अपह्नवे ( झूठबोलना ) शतमपजानीते ॥ [3] "अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति" इति न्यायमाश्रित्याह-**स्वार्थे** इति ॥

पुगन्तेति गुणः । सनाद्यन्ता इति धातुत्वम् । तिप्शबादि । गुणाया-देशौ । चोरयति ॥ **णिचश्च १ । ३ । ७४ ॥** णिजन्तादात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले ॥ चोरयते । चोरयामास । चोरयिता । चोर्यात्, चोरयिषीष्ट । णिश्रीति चङ् । णौ चङीति ह्रस्वः । चङीति द्वित्वम् । हलादिः शेषः । दीर्घो लघोरित्यभ्यासस्य दीर्घः । अचूचुरत्, अचूचुरत ॥ कथ वाक्यप्रबन्धे ॥ २ ॥ अल्लोपः ॥ "अचः परस्मिन्पूर्वविधौ" इति स्थानिवत्त्वान्नोपधावृद्धिः । कथयति । अग्लोपित्वाद्दीर्घसन्वद्भावौ न । अचकथत् ॥ गण संख्याने ॥ ३ ॥ गणयति ॥ **ई च गणः ७ । ४ । ९७ ॥** गणयतेरभ्यासस्य ई स्याच्चङ्परे णौ चादत् ॥ अजीगणत्, अजगणत् ॥

इति चुरादयः ॥ १० ॥

---

**अथ ण्यन्तप्रक्रिया ।**

**स्वतन्त्रः कर्ता १ । ४ । ५४ ॥** क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् ॥ **तत्प्रयोजको हेतुश्च १ ।४ । ५५ ॥**

---

१ "अनुदात्तङितः-" "स्वरितञितः-" इत्यतोऽनुवर्त्याह-**आत्मनेपदमिति** ॥ २ स्थानिनि सति यद् भवति तदादेशेऽपि भवति, स्थानिनि सति यन्न भवति तदादेशे न भवति इत्येवं भावाभावयोरुभयोरप्यतिदेशोऽयम् । तथाच स्थानिन्यकारेऽभवन्त्या वृद्धेरादेशे सत्यप्यभाव इति भावः ॥ ३ "अत्र लोपोऽभ्यासस्य" "सन्वल्लघुनि चङ्परे-" 'अत्स्मृदृत्वर-' इत्यतोऽनुवर्त्याह-**अभ्यासस्येति** ॥ ४ अधिकृतस्य 'कारके' इत्यस्यार्थमाह-**क्रियायामिति** । "वस्तुतस्तदनिर्देश्यं-

कर्तुः प्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च स्यात् ॥ **हेतुमति च ३ । १ । २६ ॥** प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच् स्यात् ॥ भवन्तं प्रेरयति भावयति । भावयते ॥ **ओः पुयण्ज्यपरे ७ । ४ । ८० ॥** सनि परे यदङ्गं तदवयवाभ्यासोकारस्य इत्स्यात् पवर्गयण्जकारेष्व-वर्णपरेषु परतः ॥ अबीभवत् ॥ ष्ठा गतिनिवृत्तौ ॥ **अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ ७ । ३ । ३६ ॥** स्थापयति ॥

---

—नहि वस्तुव्यवस्थितम् । 'स्थाल्या पच्यत' इत्येषा विवक्षा दृश्यते यतः ॥" इति न्यायमवधार्याह—**विवक्षित** इति ॥ १ तच्छब्दचशब्दाभ्यां संग्राह्यमर्थमाह—**कर्तुरिति** ॥ २ यदा कश्चित् कस्मैचित्कार्याय कञ्चिद् वक्ति तदा वक्ता प्रयोजक इति, यश्च कार्यं कर्तुमुक्तः स प्रयोज्य इति भाष्यते । ईदृश्यां दशायां प्रयोजक-क्रिया णिजन्तनाम्ना प्रोच्यते । यथा—"बालः मिष्टान्नं खादति, पिता बालेन मिष्टान्नं खादयति ।" अत्र बालः प्रयोज्यः, पिता प्रयोजकः । ण्यन्तेऽकर्मकोऽपि सकर्मको जायते । यथा—शिशुः शेते, माता शिशुं शाययति । सकर्मकधातूनामण्य-न्तावस्थायां यः कर्ता स ण्यन्तावस्थायां प्रायः तृतीयान्तो भवति । यथा—शिष्यः दोषं त्यजति, गुरुः शिष्येण दोषं त्याजयति "गतिबुद्ध्यशनार्थेषु शब्दकर्म-स्वकर्मसु । अहेतौ यो भवेत्कर्त्ता स हेतौ कर्म जायते ॥" यथा—रामो नगरं गच्छति—देवो रामं नगरं गमयति । बालोऽन्नं भुङ्क्ते, माता बालमन्नं भोजयति । ब्रह्मचारी वेदमधीते—गुरुर्ब्रह्मचारिणं वेदमध्यापयाति । छात्रः धर्मं बुध्यते—आचार्यः छात्रं धर्मं बोधयति । इत्यादि ॥ ३ "धातोरेकाचः—" "सत्यापपाशरूप—" इत्यतो-ऽनुवर्त्य, 'हेतुमत्' शब्देन हेतुर्विद्यते यस्मिन् स हेतुमान् इति विग्रहेण वृत्त्यानि-यामकेनाधेयतासम्बन्धेनापि वृत्तित्वं सौत्रत्वादाश्रित्याह—**प्रयोजकव्यापार** इति ॥ ४ "अत्र लोपोऽभ्यासस्य" "भृञामित्" 'सन्यतः इत्यतोऽनुवर्त्याह—**सनीति** ॥

**तिष्ठतेरित् ७ । ४ । ५ ॥** उपधाया इदादेशः स्याच्चङ्परे णौ ॥ अतिष्ठिपत् ॥ घट चेष्टायाम् ॥ **मितां ह्रस्वः ६ । ४ । ९२ ॥** णौ घटादीनां ज्ञपादीनां चोपधाया ह्रस्वः ॥ घटयति ॥ ज्ञप ज्ञाने ज्ञापने च ॥ ज्ञपयति । अजिज्ञपत् ॥

इति ण्यन्तप्रक्रिया ॥ ११ ॥

---

**अथ सन्नन्तप्रक्रिया ।**

**धातोः कर्मणः समानकर्तृकादिच्छायां वा ३ । १ । ७ ॥** इषिकर्मण इषिणैककर्तृकाद्धातोः सन्प्रत्ययो वा स्यादिच्छायाम् ॥ पठ व्यक्तायां वाचि ॥ **सन्यङोः ६ । १ । ९ ॥** सन्नन्तस्य यङन्तस्य धातोरनभ्यासस्य प्रथमस्यैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य ॥

---

१ "णौ चङ्युपधायाः-" इत्यनुवर्त्याह-**उपधाया** इति ॥ २ "**दोषो णौ**" "**ऊदुपधाया**" **इत्यतोऽनुवर्त्याह-णाविति** ॥ ३ "गुप्तिज्किद्भ्यः-" इत्यतः 'सन्' इत्यनुवर्तते । कर्मत्वं समानकर्तृकत्वं चोपस्थितत्वादिषेरेवेत्यभिप्रेत्याह-**इषि कर्मण** इत्यादि ॥ ४ "समानकर्तृकाद् धातोरिच्छार्थे सन् भवेत् खलु । इच्छाया यो भवेत्कर्ता कर्मणोऽपि स एव चेत् ॥ इच्छार्थे सर्वधातुभ्यः 'सन्' सर्वत्रापि जायते । शानो दानस्तथा स्वार्थे मानश्चैव विचारणे । गुपो वधश्च निन्दायां, क्षमायां च तथा तिजः । संशये च प्रतीकारे कितश्चासौ विधीयते ॥" यथा-पटं चिकीर्षति ( कर्तुमिच्छति ) । शास्त्रं शीशांसते ( तीक्ष्णीकरोति ) दस्युं दीदांसते ( खण्डयति ) । शास्त्रं मीमांसते, विचारयतीत्यर्थः । एवमन्यत्र ॥ ५ "एकाचो द्वे प्रथमस्य" "अजादेर्द्वितीयस्य" 'अनभ्यासस्य'-

सन्यतः । पठितुमिच्छति पिपठिषति । कर्मणः किम्—गमनेनेच्छति । समानकर्तृकात्किम्—शिष्याः पठन्त्वितीच्छति गुरुः । वा—ग्रहणाद्वाक्यमपि ॥ लुङ्सनोर्घस्लृ ॥ **सः स्यार्धधातुके ७ । ४ । ४९ ॥** सस्य तः स्यात्सादावार्धधातुके ॥ अत्तुमिच्छति जिघत्सति । 'एकाच' इति नेट् ॥ **अज्झनगमां सनि ६ । ४ । १६ ॥** अजन्तानां हन्तेरजादेशगमेश्च दीर्घो झलादौ सनि ॥ **इको झल् १ । २ । ९ ॥** इगन्ताज्झलादिः सन्[3] कित्स्यात् ॥ ऋत इद्धातोः । कर्तुमिच्छति चिकीर्षति ॥ **सनि ग्रहगुहोश्च ७ । २ । १२ ॥** ग्रहेर्गुहेरुगन्ताच्च[4] सन इण् न स्यात् ॥ बुभूषति ॥

इति सन्नन्तप्रक्रिया ॥ २ ॥

### अथ यङन्तप्रक्रिया ।

## धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ३ । १ ।

---

-इत्यनुवर्त्याह—**धातोरित्यादि** ॥ १ "अच उपसर्गात्तः" इत्यतोऽनुवर्त्याह—**त** इति ॥ २ "ढ्रलोपे पूर्वस्य—" "अनुनासिकस्य क्विझलोः—" इत्यतोनुवर्त्य—'अच्' इति लुप्तषष्ठ्यन्तमावृत्त्या गमंशेऽप्यन्वित्य चाह—**अजादेशगमेश्चे**त्यादि ॥ ३ "असंयोगाल्लिट्—" "रुदविदमुषग्रहि—" इत्यतोऽनुवर्त्याह—**सन् किदिति** ॥ ४ "नेड्वशि कृति" "श्र्युकः किति" इत्यतोऽनुवर्त्याह—**उगन्ताच्चेति** ॥ एकाच इत्यपि बोध्यम् । तेन "**जिजागरिषति**" इत्यादौ नेण्निषेधः ॥

३२ ॥ पौनःपुन्ये भृशार्थे च द्योत्ये धातोरेकाचो हलादेर्यङ् स्यात् ॥ **गुणो यङ्लुकोः ७ । ४ । ८२ ॥** अभ्यासस्य गुणो यङि यङ्लुकि च ॥ ङिदन्तत्वादात्मनेपदम् । पुनः पुनरतिशयेन वा भवति बोभूयते । बोभूयाञ्चक्रे । अबोभूयिष्ट ॥ **नित्यं कौटिल्ये गतौ ३ । १ । २३ ॥** गत्यर्थात्कौटिल्य एव यङ् स्यान्न तु क्रियासमभिहारे ॥ **दीर्घोऽकितः ७ । ४ । ८३ ॥** अकितोऽभ्यासस्य दीर्घो यङ्यङ्लुकोः ॥ कुटिलं व्रजति वाव्रज्यते ॥ **यस्य हलः ६ । ४ । ४९ ॥** यस्येति संघातग्रहणम् । हलः परस्य यशब्दस्य लोपः आर्धधातुके ॥ आदेः परस्य । अतो लोपः । वाव्रजाञ्चक्रे । वाव्रजिता ॥ **रीगृदुपधस्य च ७ । ४ । ९० ॥** ऋदुपधस्य धातोरभ्यासस्य रीगागमो

---

१ क्रियासमभिहारशब्दार्थमाह-**पौनःपुन्य** इति ॥ २ " एकस्वरसमायुक्ताद् धातोर्व्यंजनपूर्वकात् । पौनःपुन्ये तथात्यर्थे प्रायशो यङ् विधीयते ॥ गत्यर्थेभ्यश्च कौटिल्ये यङन्तादात्मनेपदम् ॥" यथा-नरीनृत्यते मयूरः-( अत्यर्थं पुनःपुनर्वा नृत्यति ) । रोरुद्यते बालिका ( अत्यर्थं पुनःपुनर्वा रोदिति ) जङ्गम्यते भुजङ्गः ( कुटिलं गच्छति ) इत्यादि ॥ ३ "अत्र लोपोऽभ्यासस्य" इत्यतोऽनुवर्त्याह-**अभ्यासस्येति** ॥ ४ 'नित्यम् उत्सर्गः प्रायेण' इत्येषां पर्यायत्वेन ' गत्यर्थाद् यङ् कौटिल्ये औत्सर्गिकः' इत्यर्थफलितमाह-**कौटिल्य एवेति** ॥ तत्फलितमाह-**न तु क्रियासमभिहार** इति ॥ ५ " अत्र लोपोऽभ्यासस्य" "गुणो यङ्लुकोः" इत्यतोऽनुवर्त्याह-**अभ्यासस्येति** ॥ ६ कुटिलमिति क्रियाविशेषणम् । क्रियाविशेषणानां क्लीबत्वं द्वितीयैकवचनान्तत्वं चेति बोध्यम् ॥ ७ " आर्धधातुके " इत्यधिकृतम् " अतो लोपः " इत्यतोऽनुवर्त्याह-**लोप-इत्यादि** ॥ ८ संघातग्रहणे प्रक्रियामाह-**आदेः परस्येत्यादि** ॥ ९ " अत्र-

यङ्यङ्लुकोः ॥ वरीवृत्यते । वरीवृताञ्चक्रे । वरीवर्तिता ॥ **क्षुभ्नादिषु च ८।४।३९ ॥** णत्वं न ॥ नरीनृत्यते । जरीगृह्यते ॥

इति यङन्तप्रक्रिया ॥ ३ ॥

## अथ यङ्लुक्प्रक्रिया।

**यङोऽचि च २।४।७४ ॥** यङोऽचि प्रत्यये लुक् स्यात्, चकाराच्चं विनापि क्वचित् ॥ अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति । ततः प्रत्ययलक्षणेन यङन्तत्वाद्द्वित्वम् । अभ्यासकार्यम् । धातुत्वाल्लडादयः । शेषात्कर्तरीति परस्मैपदम् । चर्करीतं चेत्यदादौ पाठाच्छपो लुक् ॥ **यङो वा ७।३।९४ ॥** यङ्लुगन्तात्परस्य हलादेः पितः सार्वधातुकस्येड्वा स्यात् ॥ भूसुवोरिति गुणनिषेधो यङ्लुकि भाषायां

---

–लोपोभ्यासस्य " " गुणो यङ्लुकोः " इत्यतोऽनुवर्त्याह–**अभ्यासस्येति** ॥ १ " रषाभ्यां नो णः–" " न भाभूपू–" इत्यतोऽनुवर्त्याह–**णत्वं नेति** ॥ २ " ण्यक्षत्रियार्षञितः–" इत्यतोऽनुवर्त्याह–**लुगिति** ॥ ३ ' च ' इत्यंशेन विहितः प्रथममेव भवति ॥ ४ ' चर्करीतं च ' इत्यदादौ **पाठाद्भू**वादित्वेन धातुत्वादित्यर्थः ॥ ५ "नाभ्यस्तस्याचि पिति–" " उतो वृद्धिर्लुकि हलि" "ब्रुव ईट्" इत्यतोऽनुवर्त्य यङसत्त्वे यङन्तात् परस्य पितः सार्वधातुकस्यासम्भवाद् यङ्पदस्य यङ्लुगन्तपरत्वमाश्रित्याह–**यङ्लुगन्तादित्यादि** ॥ ६ ' लोड्भिन्ने ' इति तूचितम् । भाष्यकृता ' बोभवति ' इतिच्छन्दोविषयलेटि प्रत्युदाहृतत्वात् ' भाषायाम् ' यङ्लुकि प्रमाणाभावात् ॥ लोके प्राचां कवीनां प्रयोगस्तु धृत–आशुशुक्षणिप्रयोगवत् 'छन्दोवत्कवयः कुर्वन्ति' इति स्वीकारात् ॥ इति दाधिसुधाः ॥

न । बोभूतु तेतिक्ते इति छन्दसि निपातनात्[1] । बोभवीति, बोभोति । बोभूतः । अदभ्यस्तात् । बोभुवति । बोभवाञ्चकार, बोभवामास । बोभविता । बोभविष्यति । बोभवीतु, बोभोतु, बोभूतात् । बोभूताम् । बोभुवतु । बोभूहि । बोभवानि । अबोभवीत्, अबोभोत् । अबोभूताम् । अबोभवुः । बोभूयात् । बोभूयाताम् । बोभूयुः । बोभूयात् । बोभूयास्ताम् । बोभूयासुः । गातिस्थेति सिचो लुक् । यङो वेतीट्पक्षे गुणं बाधित्वा नित्यत्वाद्वुक् । अबोभूवीत् । अबोभोत् । अबोभूताम् । अबोभूवुः । अबोभविष्यत् ॥

इति यङ्लुक्प्रक्रिया ॥ ४ ॥

अथ नामधातवः ॥

**सुप आत्मनः क्यच् ३ । १ । ८॥** ईषिकर्मण[2] एषितुः सम्बन्धिनः सुबन्तादिच्छायामर्थे क्यच् प्रत्ययो वा स्यात् ॥ **सुपो धातुप्रातिपदिकयोः २ । ४ । ७१ ॥** एतयोरवयवस्य सुपो लुक्[3] ॥ **क्यचि च ७ । ४ । ३३ ॥** अवर्णस्य ईः[4] । आत्मनः

---

१ बोभूतु इति किं निपात्यते ? भवतेर्यङ्लुगन्तस्यागुणत्वं निपात्यते । नैतदस्ति प्रयोजनम् । सिद्धमत्रागुणत्वं "भूसुवोस्तिङि" इति । एवं तर्हि नियमार्थं भविष्यति-"अत्रैव यङ्लुगन्तस्य गुणो न भवति नान्यत्र ।" क्व माभूत् ? 'बोभवीति' इति, इति भाष्योक्तेरिति भावः । अत्रैव=छन्दस्येवं, अन्यत्र=भाषायाम् ॥ २ "धातोः कर्मणः समानकर्तृकात्-" इत्यतोऽनुवर्त्याह-इषिकर्मण इत्यादि ॥ ३ "ण्यक्षत्रियार्षञितः-" इत्यतोऽनुवर्त्याह-लुगिति ॥ ४ "ई घ्राध्मोः" "अस्य-

पुत्रमिच्छति पुत्रीयति ॥ **नः क्ये १।४।१५ ॥** क्यचि क्यङि च नान्तमेव पदं नान्यत् । नलोपः । राजीयति । नान्तमेवेति किम्—वाच्यति । हलि च । गीर्यति । पूर्यति । धातोरित्येव । नेह—दिवमिच्छति दिव्यति ॥ **क्यस्य विभाषा ६।४।५० ॥** हलः परयोः क्यच्क्यङोर्लोपो वार्धधातुके । आदेः परस्य । अतो लोपः । तस्य स्थानिवत्त्वाल्लघूपधगुणो न । समिधिता, समिध्यिता ॥ **काम्यच्च ३।१।९ ॥** उक्तविषये काम्यच् स्यात् । पुत्रमात्मन इच्छति पुत्रकाम्यति । पुत्रकाम्यिता ॥ **उपमानादाचारे ३।१।१० ॥** उपमानात्कर्मणः सुबन्तादाचारेऽर्थे क्यच् ॥ पुत्रमिवाचरति पुत्रीयति छात्रम् । विष्णूयति द्विजम् ॥ (सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः) । अतो गुणे ।

---

–च्वौ" इत्यतोऽनुवर्त्याह–**अवर्णस्येति** ॥ १ अन्तर्वर्तिनीविभक्तिमाश्रित्य "सुप्तिङन्तम्–" इत्येव पदत्वे सिद्धे पुनः पदत्वविधानं नियमार्थम् । निरनुबन्धनिर्देशो द्वयोः सामान्यनिर्देशार्थः इत्यभिप्रेत्याह–**क्यचि क्यङि चेति** । नियमफलमाह–**नान्यदिति** ॥ २ पदसंज्ञाप्रयोजनमाह–**नलोप** इति ॥ ३ "आर्धधातुके" "अतो लोपः" "यस्य हलः" इत्यनुवर्त्याह–हल इत्यादि ॥ ४ "सुप आत्मनः क्यच्" इत्यनेन संगृहीत **एव** विषयेऽयं विधीयतेऽत आह–**उक्तेति** ॥ ५ उपमीयते सदृशीक्रियते **येन तदुपमानम्** । सादृश्यस्य नियतसम्बन्धी पदार्थः । "विभक्तिः पुनरेका स्यादुपमानोपमेययोः ॥" आचारो व्यवहारः ॥ उपमेयत्वं नाम उपमानभिन्नत्वे सति उपमानगतसम्भाव्यमानानेकधर्मवत्त्वम् । उपमीयते=सदृशीक्रियते यत्तदुपमेयम् । सादृश्याश्रयः पदार्थः ॥ ६ "धातोः कर्मणः–" "सुप आत्मनः–" इत्यतोऽनुवर्त्याह–**कर्मण** इति ॥ ७ "कर्तुः क्यङ् सलोपश्च" इति सूत्रे "उपमानादाचारे" इत्यनुवर्तते । तत्रत्यमेवेदं वार्तिकम् । अत्र वार्तिके–

कृष्ण इवाचरति कृष्णति। स्व इवाचरति स्वति। सस्वौ । **अनुनासिकस्य क्विझलोः क्ङिति ६ । ४ । १५ ॥** अनुनासिकान्तस्योपधाया दीर्घः स्यात्क्वौ झलादौ च क्ङिति । इदमिवाचरति इदामति । राजेव राजानति । पन्था इव पथीनति ॥ **कष्टाय क्रमणे ३ । १ । १४ ॥** चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे क्यङ् स्यात्। कष्टाय क्रमते कष्टायते । पापं कर्तुमुत्सहत इत्यर्थः ॥ **शब्दवैरकलहाभ्रकण्वमेघ-**

---

-प्रातिपदिकपदोपादानात् ' सुपः ' इति नानुवर्तते । तेन सुबन्ताद्विधानाभावादन्तर्वर्तिन्या विभक्तेरभावात्सुबन्तत्वाभावेन पदत्वाभावात्पदकार्यं न भवति । इति मनसि विधाय अपदान्तकार्यं दर्शयति-**अतो गुण इति** ॥ १ सस्व अ इत्यवस्थायाम् " अचो ञ्णिति " इति वृद्धौ " आत औ णलः " इत्यौकारादेशे " वृद्धिरेचि " इति वृद्धिः । अतुसि " अतो गुणे " इति पररूपं बाधित्वा " अतो लोपः " इति अकारलोपे सस्वतुरित्यादि । 'ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन' इत्याश्रयणेनाकारलोपे 'सस्व, सस्वतुः, सस्वुः' इत्यादि रूपाणि भवन्तीति परे ॥ **दाधिमथास्तु**-'अप्राणिषु' इत्यपनीय ' नौकाकान्नशुकश्रृगालवर्जेषु' इत्यर्थकस्य 'अनावादिषु' इति वचनस्य कर्तव्यताबोधनवत् 'कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थम् ' इति वार्तिके व्याख्यायाम् 'प्रत्ययग्रहणमपनीयानेकाज्ग्रहणं कर्तव्यम् ' इति भाष्यकृताऽनुक्तत्वात्प्रत्ययान्तेभ्योऽप्याम् भवत्येवेति वदन्ति ॥ २ "ढ्लोपे पूर्वस्य-" "नोपधायाः" इत्यतोऽनुवर्त्याह-**उपधाया** इति ॥ ३ अन्तरङ्गत्वाद्दीर्घे गुणो न ॥ ४ 'कष्टाय' इति चतुर्थ्यन्तानुकरणं लुप्तपञ्चम्यन्तम् । "कर्तुः क्यङ् सलोपश्च" इत्यतः ' क्यङ् ' इति वर्ततेऽत आह-**चतुर्थ्यन्तादिति** ॥ ५ अयमत्र संग्रहः-"इच्छायामेषितुः स्वार्थे क्यच्काम्यौ कर्मणः परे । आचारे चोपमानात् क्यच् तथाधिकरणादपि ॥" यथा आत्मनः यश इच्छति-यशस्यति, यशस्काम्यति । शिष्यं पुत्रमिव आचरति-पुत्रीयति-

**भ्यः करणे ३। १। १७॥** एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् स्यात्। शब्दं करोति शब्दायते॥ (ग.) तत्करोति तदाचष्टे। इति णिच् (ग.) प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च। प्रातिकाद्धात्वर्थे णिच् स्यात्। इष्ठे यथा प्रातिपदिकस्य पुंवद्भावरभावटिलोपविन्मतुब्लुग्यणादिपरलोपप्रस्थस्फाद्यादेशभसंज्ञास्तद्वण्णावपि स्युः। इत्यल्लोपः। घटं करोत्याचष्टे वा घटयति॥

इति नामधातवः॥ ५॥

---

–शिष्यम्। प्रसादे इव आचरति–प्रसादीयति कुटीरे। "शब्दादेः करणे क्यङ् स्यात् सुखादिभ्यश्च वेदने। बाष्पोष्मादेरुद्वमने रोमन्थाद्वर्तने तथा॥ उपमानाच्च कर्तुः क्यङ् आचारार्थे प्रजायते। भृशादिभ्यश्च्व्यर्थ एव क्यङन्तादात्मनेपदम्॥" शब्दं करोति–शब्दायते रासभः, सुखमनुभवति–सुखायते साधुः, बाष्पमुद्वमति–बाष्पायते जलम्, रोमन्थं वर्त्तयति–रोमन्थायते गौः, पण्डित इव आचरति–पण्डितायते मूर्खः। अभृशं भृशं भवति–भृशायते दुःखम्॥ १ "कर्तुः क्यङ्–" "कर्मणो रोमन्थतपोभ्याम्–" इत्यतोऽनुवर्त्य करणशब्दस्याकृत्रिमत्वं चाश्रित्याह–**कर्मभ्य** इति॥ २ द्वितीयान्तात् 'करोति' इत्यर्थे 'आचष्टे' इत्यर्थे वा 'णिच्' इत्यर्थः॥ ३ 'इष्ठवत्' इति इष्ठे इव इष्ठवत् इति सप्तम्यन्ताद् वतिरित्याह–**इष्ठे यथेति**॥ ४ इष्ठे यथा–अतिशयेन पट्वी पटिष्ठा–पुंवद्। क्रशिष्ठः–रभावः। साधिष्ठः–टिलोपः। अतिशयेन स्रग्वी स्रजिष्ठः–विनो लुक्। अतिशयेन गोमान् गविष्ठः–मतुपो लुक्। स्थविष्ठ इत्यादौ 'स्थूलदूर–' इत्यादिना यणादिलोपः। प्रेष्ठ इत्यादौ 'प्रियस्थिर–' इत्यादिना प्रस्थाद्यादेशः॥ ५ णौ यथा–एणीमाचष्टे एतयति–पुंवद्भावः। द्रढयति–रभावः। स्रग्विणमाचष्टे स्रजयति–विनो लुक्। गोमन्तमाचष्टे–गवयति–मतुपो लुक्। प्रियमाचष्टे–प्रापयति, स्थिरमाचष्टे–स्थाप–

अथ कण्ड्वादयः ।

**कण्ड्वादिभ्यो यक् ३ । १ । २७ ॥** एभ्यो धातुभ्यो नित्यं यक् स्यात्स्वार्थे । कण्डूञ् गात्रविघर्षणे ॥ १ ॥ कण्डूयति । कण्डूयत इत्यादि ॥

इति कण्ड्वादयः ॥ ६ ॥

अथ पदव्यवस्था ।

आत्मनेपदप्रक्रिया ।

**कर्तरि कर्मव्यतिहारे १ । ३ । १४ ॥** क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदम् । व्यतिलुनीते । अन्यस्य योग्यं लवनं करोतीत्यर्थः ॥ **न गतिहिंसार्थेभ्यः १ । ३ । १५ ॥** व्यतिगच्छन्ति । व्यतिघ्नन्ति ॥ **नेर्विशः १ । ३ । १७ ॥** निविशते ॥

---

-यति, इत्यादौ प्रस्थाद्यादेश इति दिक् ॥१ "धातोरेकाचः-" इत्यतोऽनुवर्त्याह-धातुभ्य इति ॥ २ "अनुदात्तङित:-" इत्यतः 'आत्मनेपदम्' इत्यनुवर्तते । कर्मव्यतिहारश्च क्रियाविनिमय इत्याह-क्रियाविनिमय इति ॥ ३ "अनुदात्तङितः-" "कर्तरि कर्मव्यतिहारे" इत्यतोऽनुवर्तते । यदा ते तेषां निकटं गच्छन्ति तदा तेऽपि तेषां निकटं गच्छन्ति, यदा ते तान् घ्नन्ति तदा तेऽपि तान् निघ्नन्ति, इत्येवं परस्परकरणमपि कर्मव्यतिहार इति स्पष्टं भाष्ये ॥ ४ "अनुदात्तङितः" इत्यतः 'आत्मनेपदम्' इति वर्तते ॥ एवमग्रेऽपि बोध्यम् ॥ ५ "उपसर्गनियमेऽड्व्यवाये उपसंख्यानम्" इति वार्तिकम् ॥ तेन 'न्यविशत' इत्यादौ तङ्सिद्धिः । लुङि "शल इगुपधादनिटः क्सः ।" इति ॥

**परिव्यवेभ्यः क्रियः**[1] **१ । ३ । १८ ॥** परिक्रीणीते । विक्रीणीते । अवक्रीणीते ॥ **विपराभ्यां जेः १ । ३ । १९ ॥** विजयते । पराजयते ॥ **सन्लिटोर्जेः ७ । ३ । ५७ ॥** जयतेः सन्लिण्निमित्तो योऽभ्यासस्ततः परस्य कुत्वं स्यात् । विजिग्ये । व्यजेष्ट ॥ **समवप्रविभ्यः स्थः १ । ३ । २२ ॥** संतिष्ठते । अवतिष्ठते । प्रतिष्ठते । वितिष्ठते ॥ **अपह्नवे**[2] **ज्ञः १ । ३ । ४४ ॥** शतमपजानीते । अपलपतीत्यर्थः ॥ **अकर्मकाच्च**[3] **१ । ३ । ४५ ॥** सार्पिषो जानीते । सार्पिषोपायेन प्रवर्तत इत्यर्थः ॥ **उदश्चरः**[4] **सकर्मकात् १ । ३ । ५३ ॥** धर्ममुच्चरते । उल्लङ्घ्य गच्छतीत्यर्थः ॥ **समस्तृतीयायुक्तात्**[5] **१ । ३ । ५४ ॥** रथेन सञ्चरते ॥ **दाणश्च सा चेच्चतुर्थ्यर्थे १ । ३ । ५५ ॥** सम्पूर्वाद्दाणस्तृतीयान्तेन युक्तादुक्तं स्यात् तृतीया चेच्चतुर्थ्यर्थे । दास्या[6] संयच्छते कामी ॥ **पूर्ववत्सनः**

---

१ ये उभयपदिनस्तेभ्योऽकर्त्रभिप्रायेऽपि तङर्थानि तानि तानि तत्र तत्रात्मनेपद-विधायकानि सूत्राणीति वेद्यम् ॥ २ "अनुदात्तङितः–" इत्यतः 'आत्मनेपदम्' इति "अपह्नवे ज्ञः" इत्यतः 'ज्ञः' इति वर्तते ॥ ३ "अनुदात्तङितः–" इत्यतः 'आत्मनेपदम्' इति वर्तते ॥ ४ "अनुदात्तङितः–" इत्यतः 'आत्मनेपदम्' इति "उदश्चरः–" इत्यतः 'चरः' इति वर्तते ॥ ५ "अनुदात्तङितः–" इत्यतः 'आत्मनेपदम्' इति, "समस्तृतीयायुक्तात्" इति च वर्तते ॥ ६ "अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया" इति तृतीया । दास्यै ददातीत्यर्थः ॥ ७ "यो यत्पदी भवेद्धातुः सन्नन्तोऽपि स तत्पदी । सर्वत्रायं विधिर्ज्ञेयः स्मृदृश्यादौ व्यतिक्रमः ॥ गमो दृशः शृणोतेश्च विदः प्रच्छेस्तथैव च । अकर्मकाद् भवेन्नित्यं सम्पूर्वादात्मनेपदम् ॥" यथा–गच्छति–जिगमिषति । शेते–शिशयिषते । स्मरति–

१।३।६२॥ सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात्। एदिधिषते॥ **हलन्ताच्च १।२।१०॥** इक्समीपाद्धलः परो झलादिः सन् कित्। निविविक्षते॥ **गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः १।३।३२॥** गन्धनं—सूचनम्। उत्कुरुते। सूचयतीत्यर्थः। अवक्षेपणं भर्त्सनम्। श्येनो वर्तिकामुत्कुरुते। भर्त्सयतीत्यर्थः। हरिमुपकुरुते। सेवत इत्यर्थः। परदारान्प्रकुरुते। तेषु सहसा प्रवर्तते। एधोदकस्योपस्कुरुते। गुणमाधत्ते। कथाः प्रकुरुते। कथयतीत्यर्थः। शतं प्रकुरुते। धर्मार्थं विनियुंक्ते। एषु किम्—कटं करोति॥ **भुजोऽनवने॥** ओदनं भुंक्ते। अनवने किम्—महीं भुनक्ति॥ ८॥

इत्यात्मनेपदप्रक्रिया॥

---

—सुस्मूर्षते। पश्यति—दिदृक्षते। सम्पश्यते। संश्रृणुते, इत्यादि॥ १ "अनुदात्तङितः—" इत्यतः "आत्मनेपदम्" इति वर्तते॥ पूर्वत्वं चोपस्थितत्वात्सन एव ग्राह्यमित्यभिप्रेत्याह—**सन** इति॥ २ "असंयोगाल्लिट्—" इत्यतः 'कित्' इति "रुदविदमुष—" इत्यतः 'सन' इति 'इको झल्' इति च वर्तते। तथा च समन्वयमाह—**इक्समीपादिति**॥ ३ "अनुदात्तङितः—" इत्यतः 'आत्मनेपदम्' इति वर्तते॥ ४ अयमत्र संग्रहः—"जयतेर्विपराभ्यां च क्रियो विपर्ययात् तथा। नेर्विश आङि नुप्रच्छोः सदा स्यादात्मनेपदम्॥" यथा—सङ्ग्रामे विजयते शूरः, आपणिकः पण्यं विक्रीणीते, स गृहं निविशते, आनुते शृगालः, आपृच्छते गुरुं शिष्यः। "समवप्रविपूर्वाच्च स्थाधातोरात्मनेपदम्। उत्पूर्वादपि विज्ञेयमुत्थानं चेन्न गम्यते॥" यथा—हरिरत्र—

## अथ परस्मैपदप्रक्रिया।

**अनुपराभ्यां कृञः १।३।७९॥** कर्तृगे च फले गन्धनादौ च परस्मैपदं स्यात्। अनुकरोति। पराकरोति॥ **अभिप्रत्यतिभ्यः क्षिपः १।३।८०॥** क्षिप प्रेरणे। स्वरितेत्। अभिक्षिपति॥ **प्राद्वहः १।३।८१॥** प्रवहति॥ **परेर्मृषः १।३।८२॥** परिमृषति। परिमृष्यति॥ **व्याङ्परिभ्यो रमः १।**

---

–संतिष्ठते, योगी मुक्तौ उत्तिष्ठते। उत्थानार्थे तु परस्मैपदमेव। यथा–राजा सिंहासनादुत्तिष्ठति। वदो दीप्तौ तथा यत्ने सान्त्वने चोपमन्त्रणे। विमतौ च तथा ज्ञाने नित्यं स्यादात्मनेपदम्॥ व्यक्तवाचां सहोक्तौ च तथैवानोरकर्मकात्। आत्मनेपदमेव स्याद् विप्रलापे विभाषया॥" अयं छात्रः गणिते वदते–गणितशास्त्रे अस्य बुद्धिः स्फुरतीत्यर्थः। क्षेत्रे वदन्ते कृषीवलाः–क्षेत्रे शस्योत्पादनाय यत्नं कुर्वन्तीत्यर्थः। श्रान्तान् उपवदते–सान्त्वयतीत्यर्थः। दातारम् उपवदते–प्रार्थयते इत्यर्थः। शास्त्रे विवदन्ते पण्डिताः–विभिन्नमतं प्रकाशयन्तीत्यर्थः॥ "उप–सं–नि–विपूर्वस्य ह्वेधातोरात्मनेपदम्। आङ्पूर्वस्यापि वक्तव्यं यदि स्पर्द्धावगम्यते॥" उपह्वयते बन्धुम्। स्पर्द्धायाम्–मल्लो मल्लम् आह्वयते। अन्यत्र तु पिता पुत्रम् आह्वयति। "सङ्गतौ देवपूजायां मैत्रीकरण एव च। मन्त्रेणैव स्तुतौ नित्यं तथैव पथि कर्तरि॥ आत्मनेपदमेव स्यात् स्थाधातोरुपपूर्वतः॥ अकर्मकाच्च नित्यं तत् लिप्सायां तु विभाषया॥" गङ्गा यमुनामुपतिष्ठते–तया सह मिलति। विष्णुमुपतिष्ठन्ते–भक्ताः पूजयन्ति। राजा राजानम् उपतिष्ठते–मैत्रीकरोति। एवमन्यत्र॥ १ "शेषात् कर्तरि–" इत्यतः 'परस्मैपदम्' इति वर्तते॥ ञित्त्वात्कर्तृगामिनि फले गन्धनादौ च परस्मैपदस्याप्राप्तत्वाद्विधीयते इत्याह–कर्तृगे चेति॥ २ "शेषात् कर्तरि–" इत्यतः 'परस्मैपदम्' इति वर्तते॥ एवमग्रेऽपि॥

३ । ८३ ॥ रमु क्रीडायाम् ॥ विरमति ॥ उपाच्च १ । ३ । ८४ ॥ यज्ञदत्तमुपरमति । उपरमयतीत्यर्थः । अन्तर्भावितण्यर्थोऽयम् ॥ इति परस्मैपदप्रक्रिया ॥

इति पदव्यवस्था ॥ ७ ॥

---

अथ भावकर्मप्रक्रिया ।

भावकर्मणोः १ । ३ । १३ ॥ लस्यात्मनेपदम् ॥ सार्व

---

१ "शेषात् कर्तरि–" इत्यतः 'परस्मैपदम्' इति "व्याङ्परिभ्यः–" इत्यतः 'रमः' इति वर्तते ॥ २ " लक्षणं कर्तृवाच्यस्य प्रथमा कर्तृकारके । द्वितीयान्तं भवेत् कर्म कर्त्रधीनं क्रियापदम् ॥" यथा–कुम्भकारः घटं करोति । देवदत्तः ग्रामं गच्छति । शिशुः पुस्तकं पठति । कर्त्रधीनं क्रियापदं यथा–कुम्भकारः घटं करोति, कुम्भकारौ घटं कुरुतः, कुम्भकाराः घटं कुर्वन्ति । शिशुः पुस्तकं पठति, शिशू पुस्तकं पठतः, शिशवः पुस्तकं पठन्ति ॥" प्रयोगे कर्मवाच्यस्य तृतीया कर्तृकारके । प्रथमान्तं भवेत्कर्म कर्माधीनं क्रियापदम् ॥" यथा– कुम्भकारेण घटः क्रियते । शिष्येण गुरुः पृच्छयते । मया चन्द्रः दृश्यते । कर्माधीनं क्रियापदं यथा–कुम्भकारेण घटः क्रियते, कुम्भकारेण घटौ क्रियेते, कुम्भकारेण घटाः क्रियन्ते । शिष्येण गुरुः पृच्छयते, शिष्येण गुरू पृच्छयेते, शिष्येण गुरवः पृच्छयन्ते ॥ " भाववाच्यप्रयोगे तु तृतीया कर्तृकारके । प्रथमपुरुषस्यैक–वचनान्तं क्रियापदम् ॥ " यथा–मया स्थीयते, आवाभ्यां स्थीयते, अस्माभिः स्थीयते । " कर्मवाच्ये प्रयोगः स्याद् धातूनां हि सकर्मणाम् । आत्मनेपदमेव स्याद् वाच्ययोः कर्मभावयोः ॥ " इति ॥ ३ " अनुदात्तङितः–" इत्यतः 'आत्मनेपदम्' इति वर्ततेऽत आह– लस्यात्मनेपदमिति ॥

**धातुके यक् ३ । १ । ६७ ॥** धातोर्यक् भावकर्मवाचिनि सार्वधातुके ॥ भावः क्रिया । सा च भावार्थकलकारेणानूद्यते । युष्मदस्मद्भ्यां सामानाधिकरण्याभावात्प्रथमः पुरुषः । तिङ्वाच्यक्रियाया अद्रव्यरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि किं त्वेकवचनमेवोत्सर्गतः । त्वया मया अन्यैश्च भूयते । बभूव ॥ **स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ६ । ४ । ६२ ॥** उपदेशे योऽच् तदन्तानां हनादीनां च चिणीवाङ्गकार्यं वा स्यात्स्यादिषु भावकर्मणोर्गम्यमानयोः, स्यादीनामिडागमश्च । चिण्वद्भावपक्षेऽयमिट् । चिण्वद्भावाद्वृद्धिः । भाविता, भविता । भाविष्यते, भविष्यते । भूयताम् । अभूयत । भाविषीष्ट । भविषीष्ट ॥ **चिण् भावकर्मणोः ३ । १ । ६६ ॥** च्लेश्चिण्

---

१ "चिण्भावकर्मणोः" इत्यतो 'भावकर्मणोः' इति, "धातोरेकाचः–" इत्यतः 'धातोः' इति च वर्ततेऽत आह–**धातोरिति** ॥ २ युष्मदस्मदोर्भाववाचकत्वाभावाल्लकारस्य भाववाचकत्वात्सामानाधिकरण्यं नास्तीति भावः ॥ ३ अयं भावः– 'एकवचनम्' इति सामान्यसूत्रं संख्याविशेषमनाश्रित्यैकवचनं विधीयते । तस्यैकवचनस्य द्वित्वबहुत्वसंख्ययोर्द्विवचनबहुवचने बाधके विधीयेते ॥ ४ "भवेतरः" इत्यत्र श्तिपः कृत्वेन कर्त्रर्थकत्वेऽपि 'धातुनिर्देशे' इत्युक्त्या धातुनिर्देश एव विधीयते । तेन 'भवतेः' इत्यस्य 'एधति' इत्यादिवद् धातुमात्रपरत्वमिति 'भूधातोः' इत्येवार्थः ॥ शप् तु तिब्विधानसामर्थ्याद्भवतीत्यभिप्रेत्य भावेऽपि अकारं करोति–**बभूव** इति ॥ ५ "आर्धधातुके" इत्यधिकृतम् । 'चिण्वत्' इति सप्तम्यन्ताद् वतिः । तथा च फलितमर्थमाह–**चिणीवेति** ॥ ६ चिण्वद्भावसन्नियोगशिष्टत्वादिति भावः ॥ ७ "च्लेः सिच्" "चिण् ते पदः"–

स्याद्भावकर्मवाचिनि तशब्दे परे । अभावि, अभाविष्यत । अकर्मकोऽप्युपसर्गवशात्सकर्मकः । अनुभूयते आनन्दश्चैत्रेण त्वया मया च । अनुभूयेते । अनुभूयन्ते । त्वमनुभूयसे । अहमनुभूये । अन्वभावि । अन्वभाविषाताम्, अन्वभविषाताम् । णिलोपः । भाव्यते । भावयाञ्चक्रे, भावयाम्बभूवे, भावयामासे । चिण्वदिट् । आभीयत्वेनासिद्धत्वाण्णिलोपः । भाविता, भावयिता । भाविष्यते, भावयिष्यते । अभाव्यत । भाव्येत । भाविषीष्ट, भावयिषीष्ट । अभावि । अभाविषाताम् । अभावयिषाताम् ॥ बुभूष्यते । बुभूषाञ्चक्रे । बुभूषिता । बुभूषिष्यते ॥

---

–इत्यतोऽनुवर्त्याह–च्लेरिति ॥ १ भाववाच्यप्रयोगाः–क्लिश्यते पापिभिर्नित्यं, हृष्यते साधुभिः सदा । म्रियते प्राणिभिः सर्वैः, जीव्यते हि यशस्विना ॥ पापाद्विरम्यते सद्भिः, अज्ञैर्विपदि मुह्यते । स्वगेहे स्पर्द्ध्यते मूर्खैः, बुधैः सदसि दीप्यते ॥ स्थीयते तत्र रामेण । मतिः पापेन हीयते । वने रामेण शय्यते । कर्मवाच्यप्रयोगाः–"सज्जनैः सेव्यते धर्मः, प्रजाभिः पूज्यते नृपः । मूर्खेण लभ्यते दुःखम्, पण्डितैः प्राप्यते सुखम् ॥ वन्द्येते पितरौ पुत्रैः, पितृभ्यां पाल्यते सुतः । अस्माभिर्दृश्यते राजा, राज्ञा दृश्यामहे वयम् ॥ जीयन्ते रिपवो राज्ञा श्रूयन्ते निनदा नरैः॥" २ यो यदा कर्मक्रियावाच्यपि अनेकार्थत्वात् सकर्मकक्रियामुत्थापयति तदा तदर्थपरत्वे स सकर्मको भवति, तत्परत्वं च तस्य उपसर्गेण द्योत्यते इति उपसर्गवशात्, इत्युक्तम् । न तु सोपसर्ग एव सकर्मकः । उपसर्गाणां द्योतकत्वात् ॥ ३ तेन कर्मणि प्रत्यये युष्मदस्मदोर्लकारवाच्यकारकवाचित्वात् तिङ्सामानाधिकरण्येन द्वित्वबहुत्वसंख्यासम्बन्धस्यापि सत्त्वेन न पुरुषवचनानुपपत्तिरिति भावः ॥ ४ अकर्मका अपि ण्यन्ताः सकर्मका भवन्ति । तेन कर्मण्येव प्रत्यय इति भावः ॥ ५ अकर्मकास्तु सन्नन्ता अकर्मका एव, सकर्मकास्तु सन्नन्ताः सकर्मकाः ॥

बोभूय्यते[1], बोभूयते ॥ अकृत्सार्वधातुकयोर्दीर्घः। स्तूयते विष्णुः। स्ताविता, स्तोता। स्ताविष्यते,स्तोष्यते। अस्तावि। अस्ताविषाताम्, अस्तोषाताम् ॥ ऋ गतौ ॥ गुणोर्तीति गुणः। अर्यते। स्मृ स्मरणे। स्मर्यते। सस्मरे। उपदेशग्रहणाच्चिण्वदिट्। आरिता, अर्ता। स्मारिता, स्मर्ता। अनिदितामिति नलोपः। स्रस्यते। इदितस्तु—नन्द्यते। संप्रसारणम् ॥ इज्यते ॥ **तनोतेर्यकि ६।४।४४।** आकारोऽन्तादेशो[3] वा स्यात् ॥ तायते, तन्यते ॥ **तपोऽनुतापे च ३।१।६५॥** तपश्च्लेश्चिण्[4] न स्यात् कर्मकर्तर्यनुतापे च ॥ अन्वतप्त पापेन। घुमास्थेतीत्वम्। दीयते। धीयते। ददे ॥ **आतो युक् चिण्कृतोः**

[1] यङ्यङ्लुकोस्तु प्रकृतिवत्सकर्मकाकर्मकतेति बोध्यम् ॥ [2] वाच्यपरिवर्तनरीतिश्चेत्थमवसेया—"कर्तृ–कर्म–क्रियाश्चैव कर्तृ–कर्म–विशेषणम्। वाच्यान्तरं कर्तुमिच्छुरेतानि परिवर्तयेत् ॥" यथा—(१) स ग्रामं गच्छति—तेन ग्रामो गम्यते। (२) स आयाति—तेन आयायते। (३) त्वं ब्राह्मणाय धनं देहि—त्वया ब्राह्मणाय धनं दीयताम्। (४) विपणिं गच्छता मया पथि गङ्गातीरात् प्रत्यागच्छन्त्यौ स्त्रियौ अदृश्येताम्—विपणिं गच्छन्नहं पथि स्त्रियौ अपश्यम्। (५) 'परैस्त्वदन्यः क इवापहारयेत् मनोरमामात्मवधूमिव श्रियम्'—त्वदन्येन केन इव मनोरमा आत्मवधूरिव श्रीः परैः अपहार्येत। (६) कटं चिकीर्षन्तं त्वामहं पश्येयम्—कटं चिकीर्षन् त्वं मया दृश्येथाः। (७) स मामदर्शत्—तेनाहमदर्शि। (८) त्वया चन्द्रो द्रष्टव्यः—त्वं चन्द्रं पश्येः। (९) अहं ग्रामं गतः गतवान् वा—मया ग्रामो गतः। (१०) त्वया ग्रन्थः प्रणीतः—त्वं ग्रन्थं प्रणीतवान् (११) अहं कटस्य कारकः—मया कटस्य कारकेण भूयते इत्यादि ॥ [3] "विड्वनोरनुनासिकस्यात्" "ये विभाषा" इत्यतोऽनुवर्त्याह—आकारोऽन्तेति ॥ [4] "च्लेः सिच्"—

७ । ३ । ३३ ॥ आदन्तानां युगागमः स्याच्चिणि ञ्णिति कृति च ॥ दायिता,दाता। दायिषीष्ट,दासीष्ट। अदायि। अदायिषाताम्। भज्यते ॥ भञ्जेश्च चिणि ६ । ४ । ३३ ॥ नलोपो वा स्यात् ॥ अभाजि, अभञ्जि ॥ लभ्यते ॥ विभाषा चिण्णमुलोः ७ । १ । ६९ ॥ लभेर्नुमागमो वा स्यात् ॥ अलम्भि, अलाभि ॥

इति भावकर्मप्रक्रिया ॥ ८ ॥

## अथ कर्मकर्तृप्रक्रिया।

यदा कर्मैव कर्तृत्वेन विवक्षितं तदा सकर्मकाणामप्यकर्मकत्वात्कर्तरि भावे च लकारः ॥ कर्मवत्कर्मणा तुल्यक्रियः ३ । १ । ८७ ॥ कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत्स्यात् ॥ कार्यातिदेशोऽयम्

---

-" चिण् ते पदः " " अचः कर्मकर्तरि " " न रुधः " इत्यतोऽनुवर्त्याह-च्लेरिति ॥ १ " अचो ञ्णिति " इत्यतोऽनुवर्त्याह-ञ्णिति ॥ २ " श्नान्नलोपः " " जान्तनशां विभाषा" इत्यतोऽनुवर्त्याह-नलोपो वेति ॥ ३ "इदितो नुम् धातोः " "लभेश्च" इत्यतोऽनुवर्त्याह-लभेरिति ॥ ४ " गौणं कर्म दुहादीनां प्रधानं नी-हृ-कृष्-वहाम्। उक्तं तिङादिभिर्नित्यं ण्यन्ते कर्ता च कर्म्म यत् ॥ प्रथमा जायते तत्र द्वितीया च ततोऽन्यतः। द्विकर्मणां तु धातूनां व्यवस्था कीर्तिता बुधैः ॥" यथा-गोपेन गौर्दुग्धं दुह्यते, भिक्षुकेण गृहस्वामी अर्थं याच्यते, पित्रा पुत्र आलयं नीयते, गुरुणा शिष्यो धर्मं बोध्यते ॥ ५ "कर्तरि शप्" इत्यतः प्रथमाविभक्तिविपरिणतं 'कर्तरि' इति पदमनुवर्तते । 'तुल्यक्रियः' इति बहुव्रीहिबलात् कर्मपदं कर्मस्थक्रियापरमित्याह-कर्मस्थयेति ॥

तेन यगात्मनेपदचिण्चिण्वदिटः स्युः । पच्यते फलम् । भिद्यते काष्ठम् । अपाचि । अभेदि । भावे—भिद्यते काष्ठेन ॥

इति कर्मकर्तृप्रक्रिया ॥ ९ ॥

---

अथ लकारार्थप्रक्रिया ।

**अभिज्ञावचने लृट् ३ । २ । ११२ ॥** स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृट् ॥ लङोऽपवादः ॥ वस निवासे ॥ स्मरसि कृष्ण गोकुले वत्स्यामः । एवं बुध्यसे, चेतयसे इत्यादिप्रयोगेऽपि ॥ **न यदि ३ । २ । ११३ ॥** यद्योगे उक्तं न ॥ अभिजानासि कृष्ण

---

१ अयं भावः—'तुल्यक्रियः' इति प्रथमा सप्तम्यर्थे । तथा च 'कर्तरि कर्मवत् कर्मणा तुल्यक्रिये' इत्येवं वाक्यान्वये 'व्यत्ययो बहुलम्लिङ्याशिष्यङ्' इत्यतः 'ल्' इत्यनुवृत्त्या 'कर्मस्थया क्रियया तुल्यक्रिये लकारवाच्ये कर्तरि कर्मणि इव कार्याणि स्युः' इत्यर्थाङ्गीकारेण फलितमर्थमाह—**तेन यगात्मनेपदेति** ॥ तथा च शानजादीनां नापत्तिरिति ॥ २ " क्रियमाणं तु यत्कर्म स्वयमेव प्रसिध्यति । सुकरैः स्वैर्गुणैर्वृद्धाः कर्मकर्तेति तद्विदुः ॥ कर्मस्थे सति धात्वर्थे कर्म्मकर्ता तु कर्म्मवत् । कर्तृस्थे सति धात्वर्थे कर्मकर्ता तु कर्तृवत् ॥" यथा—अन्नं ( स्वयमेव ) पच्यते, वृक्षः ( स्वयमेव ) भिद्यते, लता ( स्वयमेव ) छिद्यते । कर्तृस्थे यथा—ग्रामः (स्वयमेव) गच्छति । "निर्वर्त्ये च विकार्ये च कर्मवद्भाव इष्यते । न तु प्राप्ये कर्मणीति सिद्धान्तो हि व्यवस्थितः॥" एवं च "घटः क्रियते, सोमः सूयते" इत्यादावनयोरेव कर्म्मणोः कर्मवद्भावो न तु ग्रामो गच्छतीत्यादौ प्राप्ते कर्मणीति विवेक्तव्यम् । विस्तरस्तु मध्यकौमुदीव्याख्यायां द्रष्टव्यः ॥ ३ "भूते" "अनद्यतने लङ्" इत्यतोऽनुवर्त्याह—**भूतानद्यतने** इति । तत्फलितमाह—**लङोऽपवाद इति** ॥ ४ " अभिज्ञावचने लृट् " इत्यनुवर्त्याह—**उक्तं नेति** ॥

वद्गने अभुञ्ज्महि ॥ **लट् स्मे ३ । २ । ११८** ॥ लिटोऽपवादः[1] । यजति स्म युधिष्ठिरः ॥ **वर्तमानसामीप्ये वर्तमानवद्वा ३ । ३ । १३१** ॥ वर्तमाने[2] ये प्रत्यया उक्तास्ते वर्तमानसामीप्ये भूते भविष्यति च वा स्युः ॥ कदागतोऽसि ? अयमागच्छामि,[3] अयमागमं वा । कदा गमिष्यसि ? एष गच्छामि, गमिष्यामि वा ॥ **हेतुहेतुमतोर्लिङ् ३ । ३ । १५६** ॥ वा[4] स्यात् ॥ कृष्णं नमेच्चेत्सुखं यायात् । कृष्णं नंस्यति चेत्सुखं यास्यति । ( भविष्यत्येवेष्यते[5] ) । नेह । हन्तीति पलायते ॥ विधिनिमन्त्रणेति लिङ् । विधिः प्रेरणम्, भृत्यादेर्निकृष्टस्य प्रवर्तनम् । यजेत ॥ निमन्त्रणं-नियोगकरणम्, आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम् । इह भुञ्जीत ॥ आमन्त्रणं-कामचाराऽनुज्ञा । इहासीत ॥ अधीष्टं—सत्कारपूर्वको व्यापारः ॥ पुत्रमध्यापयेद्भवान् ॥ सम्प्रश्नः—संप्रधारणम् । किं भो वेदमधीयीय उत तर्कम् ॥ प्रार्थनं-याच्ञा । भो भोजनं लभेय । एवं लोट् ॥ इति लकारार्थप्रक्रिया[6] ॥ १० ॥

॥ इति तिङन्तं समाप्तम् ॥

---

१ " भूते " " अनद्यतने-" "परोक्षे-" इति वर्ततेऽत आह-**लिटोऽपवाद इति** ॥ २ 'सामीप्ये' इति स्वार्थे ष्यञ् । तथा च फलितमाह-**वर्तमान इति** ॥ ३ 'अयम्' इति 'एष' इति च इदानीम्-इत्यर्थकम् ॥ ४ " विभाषा धातौ सम्भावनवचने यदि " इत्यतोऽनुवर्त्याह-**वा स्यादिति** ॥ ५ " भविष्यति मर्यादावचने-" इत्यतोऽनुवर्तते इति भावः ॥ ६ अयमत्र-

## अथ कृदन्ते कृत्यप्रक्रिया ।

**धातोः ३ । १ । ९१ ॥** आतृतीयाध्यायसमाप्तेर्ये प्रत्ययास्ते धातोः परे स्युः ॥ कृदतिङिति कृत्संज्ञा ॥ **वासरूपोऽस्त्रियाम् ३ । १ । ९४ ॥** अस्मिन्धात्वधिकारेऽसरूपोऽपवादप्रत्यय उत्सर्गस्य बाधको वा स्यात् स्त्र्यधिकारोक्तं विना[2] ॥ **कृत्याः[3] ३ । १ । ९५ ॥**

---

–संग्रहः–" लट् नित्यं वर्तमाने स्यादतीतेऽपि 'स्म–' योगतः । 'यावत्–पुरा–' प्रयोगे च भविष्यति तथा भवेत् ॥ 'कदा–कर्हि'–प्रयोगे तु भविष्यति विभाषया । वर्तमानसमीपे च ज्ञेयमन्यत् प्रयोगतः ॥" वर्तमाने–ते सुखेन वर्तन्ते । अतीते–ते सुखेन वर्तन्ते स्म । भविष्यति–स यावत् आगच्छति तावदहं गमिष्यामि । कदा ददामि दास्यामि वा । " विध्यर्थे विधिलिङ् प्रोक्तो हेतुहेतुमतोस्तथा । 'यदा–यदि–' प्रयोगे तु भविष्यति तथा भवेत् ॥ शक्तौ सम्भावने चापि संप्रश्ने प्रार्थने तथा । इच्छार्थोपपदे चैव ज्ञेयमन्यत् प्रयोगतः॥" वि०–सत्यं ब्रूयात् । हेतु० प्रियं वदेत् चेत् सर्वस्य प्रियो भवेत् । यदा०–वक्ष्यामि यदा स आगच्छेत् । यास्यामि यदि स वदेत् । शक्तौ–त्वं भारं वहेः । सम्भा०–अपि शिरसा गिरिं भिन्द्यात् ॥ "अनुज्ञायां नियोगे च प्रार्थनायां निमन्त्रणे । इच्छार्थोपपदे प्रश्ने समर्थनाशिषोश्च लोट् ॥" अनुज्ञायाम्–त्वं गच्छ । नियोगे–करोतु भवान् । प्रार्थनायां–विद्यां लभै । निमन्त्रणे–इह भुङ्क्तां भवान् । इच्छार्थोपपदे–इच्छामि भवान् माम् अध्यापयतु । प्रश्ने–किं वेदमध्ययै, उत व्याकरणम् । समर्थनायाम्–सिन्धुमपि शोषयाणि । आशिषि–त्वं चिरं जीव ॥ १ "धातोः" इत्यधिक्रियते ॥ 'वा असरूपः' इतिच्छेदः । 'असरूपो वा भवति' अर्थात् 'अपवादः' इत्यध्याह्रियते इत्यभिप्रेत्याह–**अस्मिन्नित्यादि** ॥ २ **विनेति** । " स्त्रियां क्तिन् " इत्यधिकारोक्तप्रत्ययं विनेत्यर्थः । " अ प्रत्ययात् " इत्येतद्विषये क्तिन् न प्रवर्तते इति भावः ॥ ३ " लुम्पेदवश्यमः कृत्ये तु काममनसोरपि । समो वा हिततत्योर्मांसस्य पचि–

ण्वुल्तृचावित्यतः प्राक् कृत्यसंज्ञाः स्युः ॥ **कर्तरि कृत् ३ । ४ । ६७ ॥** कृत्प्रत्ययः कर्तरि स्यात् ॥ इति प्राप्ते—**तयोरेव कृत्यक्तखलर्थाः ३ । ४ । ७० ॥** एते भावकर्मणोरेव स्युः ॥ **तव्यत्तव्यानीयरः ३ । १ । ९६ ॥** धातोरेते प्रत्ययाः स्युः ॥ एधितव्यम्, एधनीयं त्वया । भावे औत्सर्गिकमेकवचनं क्लीबत्वं च । चेतव्यश्चयनीयो वा धर्मस्त्वया । ( वा० ) केलिमर उपसंख्यानम् । पचेलिमा माषाः । पक्तव्या इत्यर्थः । भिदेलिमाः सरलाः । भेत्तव्या

---

–युड्घञोः ॥" कृत्यान्ते उत्तरपदे अवश्यमः अन्तं पुमान् लुम्पेत् । अवश्यगन्तव्यः, अवश्यसेव्यः । तथा तुमः काममनसोः परतः अन्तं लुम्पेत् । गन्तुकामः, गन्तुमनाः। समः हिततत्तयोः परतः अन्तं वा लुम्पेत् । सहितः,संहितः। सततः, संततः। युड्–घञ्–एतयोः परो यः पच् धातुः तस्मिन् परे मांसस्य अन्तं लुम्पेत् । मांस्पचनी । मांस्पाकः ' तुं काम–' इत्यत्र तुम् ' इति समोऽप्युपलक्षणम् । तेन 'सकामः, समनाः' इत्यपि सिद्धमिति शब्दरत्ने ॥ १ 'प्राक् ण्वुलः' इति वार्तिकं मनसि निधायाह–**ण्वुल्तृचावित्यतः प्रागिति ॥** २ "लः कर्मणि च भावे च–" इत्यतो भावकर्मणी तच्छब्देन परामृश्येते इत्यत आह–**भावेति ॥** ३ "धातोः" इत्यधिकारमाश्रित्याह–**धातोरिति ॥** तव्यप्रत्ययस्य अनीयर्प्रत्ययस्य चासरूपत्वाद् बाध्यबाधकभावो विकल्पेन भवति । यद्येकसूत्रविहितयोर्बाध्यबाधकभावस्यैवाभावो विचार्यते तदा "अचो यत्" इति यत्प्रत्ययस्तव्यादीनां बाधको विकल्पेन भवतीति भावः ॥ ४ "प्रयुज्यते भाववाच्ये कृदन्तं यत् क्रियापदम् । क्लीबलिङ्गं प्रथमैक–वचनान्तं च तद् भवेत् ॥" एतदुक्तं भवति–यत्र लिङ्गत्रयमध्ये कस्यापि लिङ्गस्य विवक्षा न, तत्र नपुंसकलिङ्गमेव भवति, "सामान्ये नपुंसकम्" इति वचनात् । यत्र च कस्याश्चिदपि संख्याया न विवक्षा तत्रैकवचनमेव भवति, "उत्सर्गत एकवचनं करिष्यते" इति भाष्यसिद्धान्तादिति ॥ यत्र–

इत्यर्थः। कर्मणि[1] प्रत्ययः॥ **कृत्यल्युटो बहुलम् ३। ३। ९८॥** "क्वचित्प्रवृत्तिः[2] क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव॥ विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति॥" स्नात्यनेनेति स्नानीयं चूर्णम्। दीयतेऽस्मै दानीयो विप्रः॥ **अचो यत् ३। १। ९७॥** अजन्ताद्धातोर्यत्[3] स्यात्॥ चेयम्॥ **ईद्यति ६। ४। ६५॥** यति परे आतः[4] ईत्स्यात्॥ देयम्[5]। ग्लेयम्॥ **पोरदुपधात् ३। १। ९८॥** पवर्गान्तादुपधाद्यत्स्यात्[6]॥ ण्यतोऽपवादः[7] शप्यम्। लभ्यम्॥ **एतिस्तुशास्वृदृजुषः क्यप् ३। १। १०९॥** एभ्यः क्यप् स्यात्॥ **ह्रस्वस्य पिति कृति तुक् ६। १। ७१॥** इत्यः। स्तुत्यः॥ शासु अनुशिष्टौ॥ **शास इदङ्हलोः ६। ४। ३४॥** शास उपधाया[8] इत्स्यादङि हलादौ क्ङिति॥ शिष्यः। वृत्यः। आदृत्यः। जुष्यः॥ **मृजेर्विभाषा ३।**

---

—च भावे प्रत्ययस्तत्र लिङ्गसंख्ययोर्द्वयोरप्यभावादिति॥ १ 'कर्मकर्तरि केलिमर्' इति वृत्तिकारोक्तिं दूषयन्नाह—**कर्मणीति**॥ २ अप्रवृत्तस्य प्रवृत्तिः, प्रवृत्तस्य अप्रवृत्तिः, नित्यप्राप्तस्य विभाषा, अन्यत् प्राप्तम् अन्यदेव स्यात्। एवं च करणादावपि सुलभः प्रत्यय इति भावः॥ ३ "धातोः" इत्यधिकृतम्। तद्विशेषणेऽत्रपदे तदन्तविधिरित्याह—**अजन्तादित्यादि**॥ ४ "आतो लोप इटि च" इत्यतोऽनुवर्त्याह—**आत** इति॥ ५ आकारस्य ईकारे "सार्वधातुकार्धधातुक—" इति गुणः॥ ६ "अचो यत्" इत्यतो 'यत्' इत्यनुवर्तते। अधिकृतधातुविशेषणे पवर्गे तदन्तविधिरित्याह—**पवर्गान्तादित्यादि**॥ ७ 'नानुबन्धकृतमसारूप्यम्' इत्युक्त्या यत्—ण्यतोरसरूपत्वाभावादयं यत्ण्यतोऽपवाद एवेत्याह—**ण्यतोऽपवाद** इति॥ ८ "अनिदितां हल उपधायाः—" इत्यतोऽनुवर्त्याह—

१ । ११३ ॥ मृजेः क्यब्वा । मृज्यः ॥ **ऋहलोर्ण्यत्** ३ । १ । १२४ ॥ ऋवर्णान्ताद्धलन्ताच्च धातोर्ण्यत् । कार्यम् । हार्यम् । धार्यम् ॥ **चजोः कु घिण्ण्यतोः** ७ । ३ । ५२ ॥ चजोः कुत्वं स्यात् घिति ण्यति च परे ॥ **मृजेर्वृद्धिः** ७ । २ । ११४ ॥ मृजेरिको वृद्धिः सार्वधातुकार्धधातुकयोः ॥ मार्ग्यः ॥ **भोज्यं भक्ष्ये** ७ । ३ । ६९ ॥ भोग्यमन्यत् ॥

॥ इति कृदन्ते कृत्यप्रक्रिया ।

---

## अथ पूर्वकृदन्तम् ।

**ण्वुल्तृचौ** ७ । १ । १३३ ॥ धातोरेतौ स्तः कर्तरि कृदिति

---

-**उपधाया** इति ॥ १ " एतिस्तुशास्-" इत्यतोऽनुवर्त्याह-**क्यबिति** ॥ २ अधिकृतधातुविशेषणत्वेन तदन्तविधिरित्याह-**ऋवर्णान्तादित्यादि** ॥ ३ " धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम् " इति परिभाषया धातुविहितप्रत्यययोः सार्वधातुकार्धधातुकयोरेव ग्रहणमित्याह-**सार्वधातुकेति** ॥ ४ अयमत्र संग्रहः-" भावे कर्मणि वाच्ये च भवेयुः कृत्यसंज्ञकाः । तव्यानीयौ तथा ण्यत् यत् क्यप् चेति पंच ते मताः ॥ " तव्यादिप्रयोगा यथा-"पापात् सदैव भेत्तव्यं न वक्तव्यं मृषा क्वचित् । पालनीया गुरोराज्ञा पूजनीयः सदाऽतिथिः ॥ आलस्यं सर्वदा त्याज्यं कार्यं पित्रोः प्रियं सुतैः । दरिद्राय धनं देयं कृत्यं परहितं सदा ॥ वक्तव्यं मधुरं वाक्यं दग्धव्या कटुभाषिता । पातव्यं निर्मलं नीरं स्मरणीयं गुरोर्वचः । मोचनीयं स्वशैथिल्यं सहनीयं सतां वचः ॥ द्रोहणीयं न कस्मिंश्चित्, मोहनीयं न चापदि । दमनीयः स्वयं चात्मा तदिदं वेदशासनम् ॥" इति ॥ ५ " धातोः " इत्यधिकृतमाह-**धातोरिति** ॥

कर्त्रर्थे ॥ **युवोरनाकौ ७।१।१॥** यु वु एतयोरनाकौ स्तः॥ कारकः। कर्ता ॥ **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ३ । १ । १३४ ॥** नन्द्यादेर्ल्युः ग्रह्यादेर्णिनिः, पचादेरच् स्यात् ॥ नन्दयतीति नन्दनः। जनमर्दयतीति जनार्दनः । लवणः[1] । ग्राही । स्थायी । मन्त्री । पचः।पचादिराकृतिगणः ॥ **इगुपधज्ञाप्रीकिरः कः ३ । १ । १३५ ॥** एभ्यः कः स्यात् । बुधः । कृशः । ज्ञः । प्रियः । किरः ॥ **आतश्चोपसर्गे ३ । १ । १३६ ॥** प्रज्ञः । सुग्लः[2] ॥ **गेहे कः ३ । १ । १४४ ॥** गेहे कर्तरि ग्रहेः[3] कः स्यात् ॥ गृहम् ॥ **कर्मण्यण् ३ । २ । १ ॥** कर्मण्युपपदे धातोरण् प्रत्ययः स्यात् ॥ कुम्भं करोतीति कुम्भकारः ॥ **आतोऽनुपसर्गे कः ३ । २ । २ ॥** आदन्ताद्धातोरनुपसर्गात्कर्मण्युपपदे[4] कः स्यात् ॥ अणोऽपवादः। आतो लोप इटि च। गोदः। धनदः।कम्बलदः।अनुपसर्गे किम्—गोसन्दायः ।(ग.) मूलविभुजादिभ्यः कः । मूलानि विभुजति मूलविभुजो रथः । आकृतिगणोऽयम् । महीध्रः । कुध्रः ॥ **चरेष्टः ३ । २ । १६ ॥** अधिकरणे[5] उपपदे । कुरुचरः ॥ **भिक्षासेनादायेषु[6] च ३ । २ । १७ ॥** भिक्षाचरः । सेनाचरः । आदायेति ल्यबन्तम् । आदायचरः ॥

---

१ गणे निपातनाण्णत्वम् ॥ २ "इगुपधज्ञाप्री–" इत्यतः कः इति वर्तते ॥ ३ "विभाषा ग्रहः" इत्यतोऽनुवर्त्याह–**ग्रहेरिति** ॥ ४ "कर्मण्यण्" इत्यतः 'कर्मणि' इत्यधिकृतम् ॥ ५ "अधिकरणे शेतेः" इत्यतोऽनुवर्त्याह–**अधिकरण** इति ॥ ६ "चरेष्टः" इत्यनुवर्तते ॥

**कृञो हेतुताच्छील्यानुलोम्येषु ३ । २ । २०** ॥ एषु द्योत्येषु करोतेष्टः स्यात् ॥ **अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ८ । ३ । ४६** ॥ आदुत्तरस्यानव्ययस्य विसर्गस्य समासे नित्यं सादेशः करोत्यादिषु परेषु ॥ यशस्करी विद्या । श्राद्धकरः । वचनकरः ॥ **एजेः खश् ३ । २ । २८** ॥ ण्यन्तादेजेः खश् स्यात् ॥ **अरुर्द्विषदजन्तस्य मुम् ६ । ३ । ६७** ॥ अरुषो द्विषतोऽजन्तस्य च मुमागमः स्यात्खिदन्ते परे न त्वव्ययस्य ॥ शित्वाच्छबादिः । जनमेजयतीति जनमेजयः ॥ **प्रियवशे वदः खच् ३ । २ । ३८** ॥ प्रियंवदः । वशंवदः ॥ **अन्येभ्योऽपि दृश्यन्ते ३ । २ । ७५** ॥ मनिन् क्वनिप् वनिप् विच् एते प्रत्यया धातोः स्युः ॥ **नेड्वशि कृति ७ । २ । ८** ॥ वशादेः कृत इण् न स्यात् ॥ शॄ हिंसायाम् ॥ सुशर्मा । प्रातरित्वा ॥ **विड्वनोरनुनासिकस्याऽऽत् ६ । ४ । ४१** ॥ अनुनासिकस्याऽऽत्स्यात् ॥ विजा-

---

१ **हेतुः**=कारणम्, ताच्छील्यं=तत्स्वभावः ( आदत ) आनुलोम्यम्-आराध्यचित्तानुवर्त्तनम्, अनुकूलतेति यावत् ॥ २ "चरेष्टः" इत्यतोऽनुवर्त्याह-**ट** इति ॥ ३ "विसर्जनीयस्य सः" "सोऽपदादौ" "नित्यं समासेऽनुत्तरपदस्थस्य" इत्यतोऽनुवर्त्याह-**विसर्गस्येति** ॥ ४ 'एजेः' इति व्याख्यानात् ण्यन्तस्य ग्रहणम् । अत आह-**ण्यन्तादेजरिति** ॥ ५ "खित्यनव्ययस्य" इत्यनुवर्त्य "अलुगुत्तरपदे" इत्यतोऽनुवृत्तस्य 'उत्तरपदे' इत्यस्य विशेषणभूते 'खिति' इत्यत्र तदन्तविधिरित्याह-**खिदन्त** इति ॥ ६ "विजुपे छन्दसि" आतो मनिन्क्वनिब्वनिपश्च" इति 'दृश्यन्ते' इति कर्मभूतानि मनसि निधायाह-**एते प्रत्यया** इति ॥

थत इति विजावा ॥ ओणृ अपनयने । अवावा । विच् ॥ रुषरिष हिंसायाम् ॥ रोट् । रेट् । सुगण् ॥ **क्विप् च ३ । २ । ७६ ॥** अयमपि[1] दृश्यते ॥ उखास्रत् । पर्णध्वत् । वाहभ्रट् ॥ **सुप्यजातौ णिनिस्ताच्छील्ये ३ । २ । ७८ ॥** अजात्यर्थे सुपि धातोर्णिनिस्ताच्छील्ये द्योत्ये ॥ उष्णभोजी ॥ **मनः ३ । २ । ८२ ॥** सुपि[2] मन्यतेर्णिनिः स्यात् ॥ दर्शनीयमानी ॥ **आत्ममाने खश्च ३ । २ । ८३ ॥** स्वकर्मके मनने वर्त्तमानान्मन्यतेः[3] सुपि खश् स्यात् चाण्णिनिः ॥ पण्डितमात्मानं मन्यते पण्डितंमन्यः । पण्डितमानी ॥ **खित्यनव्ययस्य ६ । ३ । ६६ ॥** खिदन्ते[4] परे पूर्वपदस्य ह्रस्वः ॥ ततो मुम् । कालिम्मन्या ॥ **करणे यजः ३ । २ । ८५ ॥** करणे उपपदे भूतार्थे[5] यजेर्णिनिः कर्तरि ॥ सोमेनेष्टवान् सोमयाजी । अग्निष्टोमयाजी ॥ **दृशेः क्वनिप् ३ । २ । ९४ ॥** कर्मणि[6] भूते ॥ पारं दृष्टवान् पारदृश्वा ॥ **राजनि युधिकृञः ३ । २ । ९५ ॥** क्वनिप्[7]स्यात् ॥ युधिरन्तर्भावितण्यर्थः । राजानं योधितवान् राजयुध्वा ।

---

१ "अन्येभ्योऽपि दृश्यन्ते" इत्यनुवर्त्याह-**अयमपीति** ॥ २ "सुप्यजातौ णिनिस्ताच्छील्ये" इत्यनुवर्त्याह-**सुपीति** ॥ ३ "सुप्यजातौ-" "मनः" इत्यतोऽनुवर्त्याह-**मन्यतेरित्यादि** ॥ ४ "इको ह्रस्वोऽङ्यः-" "अलुगुत्तरपदे" इत्यतोऽनुवर्त्य तदन्तविधिं च कृत्वाह-**खिदन्ते** इति ॥ ५ "सुप्यजातौ णिनिस्ताच्छील्ये" "भूते" इत्यनुवर्त्याह-**भूतार्थे** इति ॥ ६ "कर्मणि हनः" "भूते" इत्यतोऽनुवर्त्याह-**कर्मणीति** ॥ ७ "दृशेः क्वनिप्" इत्यतोऽनुवर्त्याह-**क्वनिबिति** ॥

राजकृत्वा ॥ **सहे च ३ । २ । ९६ ॥** कर्मणीति[1] निवृत्तम् । सह योधितवान् सहयुध्वा । सहकृत्वा ॥ **सप्तम्यां[2] जनेर्डः ३ । २ । ९७ ॥ तत्पुरुषे कृति बहुलम् ६ । ३ । १४ ॥** ङेर्लुक्[3] । सरसिजम् सरोजम् ॥ **उपसर्गे[4] च संज्ञायाम् ३ । २ । ९९ ॥** प्रजा स्यात्संततौ जने ॥ **क्तक्तवतू[5] निष्ठा १ । १ । २६ ॥** एतौ निष्ठासंज्ञौ स्तः ॥ **निष्ठा ३ । २ । १०२ ॥** भूतार्थवृत्तेर्धातोर्निष्ठा[6] स्यात् ॥ तत्र तयोरेवेति भावकर्मणोः क्तः । कर्तरि कृदिति कर्तरि क्तवतुः । उकावितौ । स्नातं मया । स्तुतस्त्वया विष्णुः । विश्वं कृतवान्

---

१ "दृशेः क्वनिप" "राजनि युधि कृञः" इत्यतोऽनुवर्तते ॥ सहार्थस्य कर्मत्वासम्भवादाह-**कर्मणीति निवृत्तमिति** ॥ २ "भूते" इत्यधिकृतम् ॥ ३ "अलुगुत्तरपदे" "हलदन्तात्सप्तम्याः संज्ञायाम्" इत्यनुवर्ततेऽत आह-**ङेर्लुगिति** ॥ ४ "सप्तम्यां जनेर्डः" इत्यतो 'जनेर्डः' इति वर्तते ॥ ५ "कर्तृवाच्ये भवेद् धातोरतीते 'क्तवतुः' सदा । भावे कर्मणि वाच्ये 'क्तः' कर्तृवाच्येऽपि कुत्रचित् ॥" कर्तरि यथा-"मथुरां गतवान् कृष्णः, आयाता मधुयामिनी । श्रुतवान् स पितुर्वाक्यं, शैशवे क्रीडिता वयम् ॥" भावे कर्मणि च यथा-"प्रातरद्य मया स्नातं, भवता शयितं कथम् । अधीतः शिशुभिः पाठः, उक्तं तैर्मधुरं वचः ॥" अयमत्र संग्रहः-"अतीते क्तः प्रजायेत वाच्ययोर्भावकर्मणोः । वर्तमानेऽपि पूजेच्छाज्ञानाद्यर्थकधातुषु ॥ गत्यर्थाकर्मकश्लिष्-शी-स्थास्-वस्-जन-जॄ-रुहां तथा । कर्तर्यपि भवत्येष तथाऽऽरम्भे च कर्मणाम् ॥ गत्यर्थाकर्मकेभ्यश्चाशनार्थेभ्यस्तथा पुनः । वाच्येऽधिकरणेऽप्येवं 'क्त' प्रत्ययविधिः स्मृतः ॥" अतीते भावे-मया स्नातम् । अतीते कर्मणि-पाण्डवैः कौरवाः पराजिताः । वर्तमाने-अयं सतां पूजितः । कर्तरि-असौ मृतः । कर्मणामारम्भे-प्रद्योतितो भानुः । अधिकरणे-इदं गुरोः आसितम् इत्यादि ॥ ६ "भूते" इत्यधिकृतं मनसि निधायाह-**भूतार्थेति** ॥

विष्णुः ॥ **रदाभ्यां निष्ठातो नः पूर्वस्य च दः । ८ । २ । ४२ ॥** रदाभ्यां परस्य निष्ठातस्य नः स्यात् निष्ठापेक्षया पूर्वस्य धातोर्दस्य च ॥ शॄ हिंसायाम् । ॠत इत् । रपरः । णत्वम् । शीर्णः । भिन्नः । छिन्नः ॥ **संयोगादेरातो धातोर्यण्वतः ८ । २ । ४३ ॥** निष्ठातस्य नः स्यात् ॥ द्राणः । ग्लानः ॥ **ल्वादिभ्यः ८ । २ । ४४ ॥** एकविंशतेर्लूञादिभ्यः प्राग्वत् ॥ लूनः । ज्या धातुः । ग्रहिज्येति संप्रसारणम् ॥ **हलः ६ । ४ । २ ॥** अङ्गावयवाद्धलः परं यत्संप्रसारणं तदन्तस्य दीर्घः ॥ जीनः ॥ **ओदितश्च ८ । २ । ४५ ॥** भुजो–भुग्नः । टुओश्वि–उच्छूनः ॥ **शुषः कः ८ । २ । ५१ ॥** निष्ठातस्य कः ॥ शुष्कः ॥ **पचो वः ८ । २ । ५२ ॥** पक्वः ॥ क्षै क्षये ॥ **क्षायो मः ८ । २ । ५३ ॥** क्षामः ॥ **निष्ठायां सेटि ६ । ४ । ५२ ॥** णेर्लोपः । भावितः । भावितवान् ॥ दृह हिंसायाम् ॥ **दृढः स्थूलबलयोः ७ । २ । २० ॥** स्थूले बलवति च निपात्यते ॥ **दधातेर्हिः ७ । ४ । ४२ ॥** तादौ किति ॥ हितम् ॥ **दो दद् घोः ७ । ४ । ४६ ॥** घुसंज्ञकस्य दा इत्यस्य दद् स्यात् तादौ किति ॥ चर्त्वम् । दत्तः ॥

---

१ "रदाभ्यां निष्ठातो नः" इत्यनुवर्त्याह–**निष्ठातस्येति** ॥ २ 'निष्ठातो नः' इत्यनुवर्त्याह–**प्राग्वदिति** ॥ ३ "ढ्रलोपे पूर्वस्य–" "अङ्गस्य" "संप्रसारणस्य" इत्यनुवर्त्याह–**अङ्गावयवादिति** ॥ ४ 'निष्ठातो नः' इति वर्तते ॥ ५ "निष्ठातः" इति वर्ततेऽत आह–**निष्ठेति** ॥ ६ 'निष्ठातः' इति वर्तते ॥ ७ "निष्ठातः" इति वर्तते ॥ ८ "आर्धधातुके" "अतो लोपः" "णेरनिटि" इत्यतोऽनुवर्त्याह–**णेर्लोप इति** ॥ ९ 'द्यतिस्यतिमास्थाम्–' इत्यतोऽनुवर्त्याह–**तादाविति** ॥ १० "द्यतिस्यतिमास्थाम्–" इत्यतोऽनुवर्त्याह–**तादाविति** ॥ ११ दान्तत्वे निष्ठानत्वापत्त्या धान्तत्वे–

**लिटः कानज्वा** ३ । २ । १०६ ॥ **क्वसुश्च** ३ । २ । १०७ ॥ लिटः कानच् क्वसुश्च वा स्तः ॥ तङानावात्मनेपदम् । चक्राणः ॥ **म्वोश्च** ८ । २ । ६५ ॥ मान्तस्य धातोर्नत्वं म्वोः परतः ॥ जगन्वान् ॥ **लटः शतृशानचावप्रथमासमानाधिकरणे** ३ । २ । १२४ ॥ अप्रथमान्तेन समानाधिकरणे लट एतौ वा स्तः॥ शबादि । पचन्तं चैत्रं पश्य ॥ **आने मुक्** ७ । २ । ८२ ॥ अदन्ताङ्गस्य मुगागमः स्यादाने परे ॥ पचमानं चैत्रं पश्य । लडित्यनुवर्तमाने पुनर्लड्ग्रहणात्प्रथमासामानाधिकरण्येऽपि क्वचित् । सन्

---

-"झषस्तथोः-" इति धत्वापत्त्या नान्तत्वे "दस्ति" इति दीर्घापत्त्या थान्तत्वे दोषाभावेन थान्तोऽयमादेशः । ततः "खरि च" इति चर्त्वमाह-**चर्त्वमिति** ॥ १ "मो नो धातोः" इत्यतोऽनुवर्त्याह-**मान्तस्येति** ॥ २ "अतो येयः" इत्यतः षष्ठीविपरिणतम् 'अतः' इति वर्तते, तस्य "अङ्गस्य" इत्यधिकृतविशेषणत्वेन तदन्तविधिरित्याह-**अदन्ताङ्गस्येति** ॥ ३ "वर्तमानक्रियायां च भवेतां शतृशानचौ । परस्मैपदि धातुभ्यः शतृ स्यात् शानजन्यतः ॥" यथा-"प्रयाति पथिको गायन् भ्राम्यन् गुञ्जति षट्पदः । शयानश्चिन्तयत्येष कम्पमानः स भाषते" ॥ यदा पूर्वकालिक ( अप्रधान ) क्रियाया उत्तरकालिक ( प्रधान ) क्रियायाश्च कार्यं सहैव ( एकस्मिन्नेव काले ) भवति तदा पूर्वकालिकक्रिया शतृप्रत्ययान्ता शानच्प्रत्ययान्ता वा प्रयुज्यते । यथा-स नृत्यन् आयाति । अत्र नर्तनाऽऽगमनक्रिययोः कार्यमेकस्मिन्नेव काले भवति । यदा तु पूर्वकालिकक्रियाकार्यम् उत्तरकालिकक्रियाकार्यतः प्रागेव सम्पन्नं भवति तदा तु पूर्वकालिकक्रिया क्त्वाप्रत्ययान्ता ल्यप्प्रत्ययान्ता वा प्रयोज्या । यथा-स गृहं गत्वा मामपश्यत् । स पूर्वं गृहं गतस्ततो मां दृष्टवान् । अत्र गमनकार्यं दर्शनकार्यतः प्रागेव सम्पद्यत इति गम्धातोः क्त्वा-प्रत्ययः ॥

द्विजः ॥ **विदेः शतुर्वसुः** ७ । १ । ३६ ॥ वेत्तेः परस्य शतुर्वसुरा-देशो वा ॥ विदन् । विद्वान् ॥ **तौ सत्** ३ । २ । १२७ ॥ तौ शतृशानचौ सत्सञ्ज्ञौ स्तः ॥ **लृटः सद्वा** ३ । ३ । १४ ॥ व्यवस्थितविभाषेयम् । तेनाप्रथमासामानाधिकरण्ये प्रत्ययोत्तरपदयोः संबोधने लक्षणहेत्वोश्च नित्यम् । करिष्यन्तं करिष्यमाणं पश्य ॥ **आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु** ३ । २ । १३४ ॥ क्विपमभिव्याप्य वक्ष्यमाणाः प्रत्ययास्तच्छीलादिषु कर्तृषु बोध्याः ॥ **तृन्** ३ । २ । १३५ ॥ कर्ता कटान् ॥ **जल्पभिक्षकुट्टलुण्टवृङः षाकन्** ३ । २ । १५५ ॥ **षः प्रत्ययस्य** १ । ३ । ६ ॥ प्रत्ययस्यादिः ष इत्संज्ञः स्यात् ॥ जल्पाकः । भिक्षाकः । कुट्टाकः । लुण्टाकः । वराकः । वराकी ॥ **सनाशंसभिक्ष उः** ३ । २ । १६८ ॥ चिकीर्षुः । आशंसुः । भिक्षुः ॥ **भ्राजभासधुर्विद्युतोर्जिपृजुग्रावस्तुवः क्विप्** ३ । २ । १७७ ॥ विभ्राट् । भाः ॥ **राल्लोपः** ६ । ४ । २१ ॥ रेफाच्छ्वोर्लोपः क्वौ झलादौ क्ङिति ॥

---

१ करिष्यतोऽपत्यं कारिष्यतः, करिष्यद्भक्तिः, हे करिष्यन्, अर्जयिष्यन्वसति, इत्युदाहरणानि ॥ २ तच्छीलः=फलनिरपेक्षप्रवृत्तिः । तद्धर्मा=तदाचारः, स्वधर्मोऽयमिति यः प्रवर्तते । साधुकारी=तो विनापि धात्वर्थस्य साधुकर्ता ॥ ३ "उपदेशेऽजनुनासिक इत्" "आदिर्ञिटुडवः" इत्यतोऽनुवर्त्याह—**आदिरित्यादि**॥ ४ "अनुनासिकस्य क्विझलोः क्ङिति" "च्छ्वोः शूड्—" इत्यतोऽनुवर्त्याह—**रेफाच्छ्वोरिति** ॥ ५ "अनुनासिकस्य क्विझलोः क्ङिति" इत्यतोऽनुवर्त्याह—**क्वावि-त्यादि** ॥

धूः । विद्युत् । ऊर्क् । पूः । दृशिग्रहणस्यापकर्षाज्जवतेर्दीर्घः । जूः । ग्रावस्तुत् । ( क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं च )। वक्तीति वाक् ॥ **च्छ्वोः शूडनुनासिके च ६ । ४ । १९ ॥** सतुक्कस्य च्छस्य वस्य च क्रमात् श् ऊठ् इत्यादेशौ स्तोऽनुनासिके क्वौ झलादौ च क्ङिति ॥ पृच्छतीति प्राट् । आयतं स्तौतीति आयतस्तूः । कटं प्रवते कटप्रूः । जूरुक्तः[1] । श्रयति हरिं श्रीः ॥ **दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ३ । २ । १८२ ॥** दाबादेः ष्ट्रन्[2] स्यात्करणेऽर्थे । दात्यनेन दात्रम् ॥ **तितुत्रतथसिसुसरकसेषु च ७ । २ । ९ ॥** एषां दशानां कृत्प्रत्ययानामिण्[3] न ॥ शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम् । पत्रम् । दंष्ट्रा[4] । नद्ध्री ॥ **अर्तिलूधूसूखनसहचर इत्रः ३ । २ । १८४ ॥** अरित्रम् । लवित्रम् । धवित्रम् । सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् ॥ **पुवः संज्ञायाम्[5] ३ । २ । १८५ ॥** पवित्रम् ॥

इति पूर्वकृदन्तम् ॥

---

**अथोणादयः ।**

**कृवापाजिमिस्वदिसाध्यशूभ्य उण् ॥ १ ॥** करोतीति कारुः ।

---

१ एवं च वार्तिके ' जु ' ग्रहणं न कार्यमिति भावः ॥ २ " धः कर्मणि ष्ट्रन् " इत्यतोऽनुवर्त्याह-ष्ट्रन्निति ॥ ३ " नेड् वशि-" इत्यतोऽनुवर्त्याह-इण् नेति ॥ ४ अजादिगणस्याकृतिगणत्वात् प्राप्तेन टापा षित्त्वेन प्राप्तोऽपि ङीष् बाध्यते ॥ ५ "अर्तिलूधूसू-" इत्यतः 'इत्रः' इत्यनुवर्तते ॥

वातीति वायुः । पायुर्गुदम् । जायुरौषधम् । मायुः पित्तम् । स्वादुः । साध्नोति परकार्यमिति साधुः । आशु शीघ्रम् ॥ **उणादयो बहुलम् ३ । ३ । १** । एते वर्तमाने संज्ञायां च बहुलं स्युः । केचिदविहिता अप्यूह्याः ॥

"संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥"

॥ इत्युणादयः ॥

---

**अथोत्तरकृदन्तम् ।**

**तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ३ । ३ । १० ॥** क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः ॥ मान्तत्वादव्ययत्वम् । कृष्णं द्रष्टुं याति । कृष्णं दर्शको याति ॥ **कालसमयवेलासु तुमुन् ३ । ३ । १६७ ॥** कालार्थेषूपप-

---

१ " क्रियार्थायां क्रियायां हि निमित्तार्थे च 'तुम्' भवेत् । कृष्णं द्रष्टुं समायाति, भारं वोढुं जगाम सः ॥ वक्तुमुत्सहते वाग्ग्मी, दातुमिच्छन्ति सज्जनाः । बालकः पठितुं याति, भीतं त्रातुं स चेष्टते ॥" इति ॥ २ "भविष्यति गम्यादयः" इत्यतोऽनुवर्त्याह–**भविष्यत्यर्थे** इति ॥ ३ एवं च 'अव्ययकृतो भावे' इति भाष्यवार्तिकोक्तवचनाद् भावे तुमुन् । ण्वुल् तु यथोक्त कर्तरीति विवेकः ॥ ४ 'सृजिदृशोः–' इत्यम्, 'व्रश्च–' इति षत्वम्, ष्टुत्वम् ॥

देषु तुमुन् ॥ कालः समयो वेला वा भोक्तुम् ॥ **भावे ३ । ३ । १८॥** सिद्धावस्थापन्ने[1] धात्वर्थे वाच्ये धातोर्घञ् ॥ पाकः ॥ **अकर्तरि च कारके संज्ञायाम् ॥ ३ । ३ । १९ ॥** कर्तृभिन्ने कारके घञ् स्यात् ॥ **घञि च भावकरणयोः ६ । ४ । २७ ॥** रञ्जेर्नलोपः[2] स्यात् ॥ रागः । अनयोः किम्—रज्यत्यस्मिन्निति रङ्गः ॥ **निवासचितिशरीरोपसमाधानेष्वादेश्च कः ३ । ३ । ४१ ॥** एषु चिनोतेर्घञ्[3] आदेश्च ककारः ॥ उपसमाधानं राशीकरणम् । निकायः । कायः । गोमयनिकायः । **एरच् ३ । ३ । ५६ ॥** इवर्णान्तादच्[4] ॥ चयः । जयः ॥ **ऋदोरप् ३ । ३ । ५७ ॥** ऋवर्णान्तादुवर्णान्ताच्चाऽप्[5] ॥ करः । गरः । यवः । लवः । स्तवः । पवः ॥ (वा) घञर्थे कविधानम् ।

---

१ क्रिया हि द्विविधा भवति—सिद्धा साध्या चेति । तत्र धातुवाच्या क्रिया साध्या, घञादिप्रत्ययप्रतिपाद्या तु क्रिया सिद्धा । क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकं यत् वैजात्यं तद्रूपं साध्यत्वम् । सिद्धत्वं तु क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकं यत् वैजात्यं तद्रूपम् । यथा—पाक इत्युक्ते अस्ति-भवतीत्यादिक्रियाकांक्षोत्थानात् सिद्धत्वम् । पचतीत्युक्ते तु तदनुत्थानात् साध्यत्वम् ॥ तत्र सिद्धरूपो भावो द्रव्यवत् प्रकाशते किमुक्तम् ? द्रव्यधर्मान् लिङ्गसंख्यादीन् गृह्णाति, अतो द्विवचनादि तत्र भवति । साध्यरूपस्य त्वसत्त्वरूपत्वान्न संख्याद्यन्वय इति तत्र न द्विवचनादि । तथा चोक्तम्—"क्रियायाः सिद्धतावस्था साध्यावस्था च कीर्तिता । सिद्धतां द्रव्यमिच्छन्ति तत्रैवेच्छन्ति घञ्विधिम् ॥" इति ॥ २ "श्नान्नलोपः" "रञ्जेश्च" इत्यतोऽनुवर्त्याह—रञ्जेरिति ॥ ३ "पदरुजविशस्पृशो घञ्" "हस्तादाने चेरस्तेये" इत्यतोऽनुवर्त्याह—चिनोतेर्घञिति ॥ ४ 'अधिकृतधातुविशेषणत्वेन तदन्तविधिरित्याह—इवर्णान्तादिति ॥ ५ अधिकृतधातुविशेषणत्वेन तदन्तविधिरित्याह—ऋवर्णान्तादित्यादि ॥

प्रस्थः । विघ्नः ॥ **ड्वितः क्त्रिः ३ । ३ । ८८ ॥ क्त्रेर्मम्नित्यम् ४ । ४ । २० ॥** क्त्रिप्रत्ययान्तात् मप् निर्वृत्तेऽर्थे । पाकेन निर्वृत्तं पक्त्रिमम् । डुवप्–उप्त्रिमम् ॥ **ट्वितोऽथुच् ३ । ३ । ८९ ॥** टुवेपृ कम्पने–वेपथुः ॥ **यजयाचयतविच्छप्रच्छरक्षो नङ् ३ । ३ । ९० ॥** यज्ञः । याच्ञा । यत्नः । विश्नः । प्रश्नः । रक्ष्णः ॥ **स्वपो नन् ३ । ३ । ९१ ॥** स्वप्नः ॥ **उपसर्गे घोः किः ३ । ३ । ९२ ॥** प्रधिः । उपधिः । **स्त्रियां क्तिन् ४ । ३ । ९४ ॥** स्त्रीलिङ्गे भावे क्तिन् स्यात् ॥ घञोऽपवादः । कृतिः । स्तुतिः । (ग) ॠल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः । तेन नत्वम् । कीर्णिः । लूनिः । धूनिः । पूनिः । ( ग ) संपदादिभ्यः क्विप् । सम्पत् । विपत् । आपत् । ( वा ) क्तिन्नपीष्यते । संपत्तिः । विपत्तिः । आपत्तिः । **ऊतियूतिजूतिसातिहेतिकीर्तयश्च ३ । ३ । ९७ ॥** एते निपात्यन्ते ॥ **ज्वरत्वरस्त्रिव्यविमवामुपधायाश्च ६ । ४ ।**

---

१ कित्त्वात् " आतो लोप इटि च " इत्यालोपः ॥ २ कित्त्वात् " गमहनजन– " इत्युपधालोपे " हो हन्तेः " इति कुत्वम् ॥ ३ " भावे " " अकर्तरि च कारके " इति वर्तते । एवं पूर्वत्रापि ॥ ४ " तेन दीव्यति खनति " " निर्वृत्तेऽक्षद्यूतादिभ्यः " इत्यतोऽनुवर्त्याह–**निर्वृत्तेऽर्थे** इति ॥ ५ " भावे " "अकर्तरि च कारके–" इति वर्तते । एवमुत्तरत्रापि ॥ ६ ॠकारान्तेभ्यो ल्वादिभ्यश्च परः क्तिन् निष्ठाकार्यं लभते, । 'रदाभ्यां निष्ठातो नः' 'ल्वादिभ्यः' इति च विधीयमानं नत्वं क्तिनोऽपि भवतीत्यर्थः ॥ ७ "रदाभ्याम्" इत्यनेनेति भावः ॥

२० ॥ एषामुपधावकारयोरूठ् अनुनासिके क्वौ झलादौ क्ङिति ॥ अतः क्विपे[1] । जूः । तूः । स्रूः । ऊः । मूः ॥ **इच्छा ३ । ३ । १०१** ॥ ईषेर्निपातोऽयम्[3] ॥ **अ प्रत्ययात् ३ । ३ । १०२** ॥ प्रत्ययान्तेभ्यो[4] धातुभ्यः स्त्रियामकारः प्रत्ययः स्यात् ॥ चिकीर्षा । पुत्रकाम्या ॥ **गुरोश्च हलः ३ । ३ । १०३** ॥ गुरुमतो हलन्तात्स्त्रियामकारः प्रत्ययः स्यात् ॥ ईहा ॥ **ण्यासश्रन्थो युच् ३ । ३ । १०७** ॥ अकारस्यापवादः ॥ कारणा । हारणा । **नपुंसके भावे क्तः ३ । ३ । ११४** ॥ **ल्युट् च ३ । ३ । ११५** ॥ हसितम्, हसनम् ॥ **पुंसि संज्ञायां घः प्रायेण ३ । ३ । ११८** ॥ **छादेर्घेऽद्व्युपसर्गस्य ६ । ४ । ९६** ॥ द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वो घे परे ॥ दन्तारछाद्यन्तेऽनेनेति दन्तच्छदः । आकुर्वन्त्य-

---

१ "अनुनासिकस्य क्विझलोः क्ङिति" "च्छ्वोः शूडनुनासिके च" इत्यतोऽनुवर्त्याह-**अनुनासिक** इत्यादि ॥ २सम्पदादेराकृतिगणत्वमङ्गीकृत्येदमिति बोध्यम् ॥ ३ "कृञः श च" इत्यतः 'श' इत्यनुवर्ततेऽत आह-**इषेरिति** ॥ ४ "भावे" इत्यधिक्रियते । "स्त्रियाम्" इति च ॥ विशेषणे तदन्तविधिरित्याह-**प्रत्ययान्तेभ्य** इति ॥ ५ "भावे" इत्यधिक्रियते "अप्रत्ययात्" इत्यतः 'अ' इति "स्त्रियाम्' इति चात आह-**स्त्रियामित्यादि** ॥ ६ "भावे" "स्त्रियाम्" इति चानुवर्तते 'अप्रत्ययस्य' येन नाप्राप्तन्यायेनापवादः ॥ ७ क्लीबत्वविशिष्टे भावे इत्यर्थः । क्लीबे क्तान्ताः क्रियामेव बोधयन्ति । यथा--"तस्य गतं वरम्" अत्र 'गतम्' इति गमनेऽर्थे ॥ ८ "करणाधिकरणयोश्च" इति वर्तते ॥ ९ "खचि ह्रस्वः" इत्यतः 'ह्रस्वः' इति वर्तते ॥ त्रिपुत्रे द्विपुत्रत्वस्यापि सम्भवमभिमेत्याह-**द्विप्रभृत्युपसर्गेति** ॥

स्मिन्नित्याकरः ॥ **अवे तॄस्त्रोर्घञ्**[2] **३ । ३ । १२०** ॥ अवतारः कूपादेः ॥ अवस्तारो जवनिका ॥ **हलश्च ३ । ३ । १२१** ॥ हलन्ताद् घञ्[1] ॥ घापवादः । रमन्ते योगिनोऽस्मिन्निति रामः । अपमृज्यतेऽनेन व्याध्यादिरित्यपामार्गः ॥ **ईषद्दुस्सुषु**[3] **कृच्छ्राकृच्छ्रार्थेषु खल् ३ । ३ । १२६** ॥ करणाधिकरणयोरिति निवृत्तम् । एषु दुःखसुखार्थेषूपपदेषु खल् । तयोरेवेति भावे कर्मणि च । कृच्छ्रे—दुष्करः कटो भवता । अकृच्छ्रे—ईषत्करः । सुकरः ॥ **आतो युच्**[4] **३ । ३ । १२८** ॥ खलोऽपवादः ॥ ईषत्पानः सोमो भवता । दुष्पानः । सुपानः ॥ **अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ३ । १ । १८** ॥ प्रतिषेधार्थयोरलंखल्वोरुपपदयोः क्त्वा स्यात् ॥ प्राचां ग्रहणं पूजार्थम् । अमैवाव्ययेनेति नियमान्नोपपदसमासः । दो दद्घोः । अलं दत्त्वा । घुमास्थेतीत्वम् । पीत्वा खलु । अलंखल्वोः किम्—मा कार्षीत् । प्रतिषेधयोः किम्—अलंकारः ॥ **समानकर्तृकयोः पूर्वकाले ३ । ४ । २१** ॥ समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः

---

१ "करणाधिकरणयोश्च" इति वर्तते ॥ २ "अवे तॄस्त्रोर्घञ्" "पुंसि संज्ञायाम्—" "करणाधिकरणयोश्च" इत्यतः 'घञ्' 'संज्ञायाम्' 'पुंसि' इत्यनुवर्त्याह—घञ् इति ॥ ३ 'सु' 'ईषत्' शब्दौ सुखार्थकौ । 'दुर्' इति तु दुःखार्थकः । सुखेन कर्तुं योग्यः सुकरः, दुःखेन कर्तुं योग्यः—दुष्करः ॥ ४ "ईषद्दुःसुषु—" इत्यवश्यं प्राप्ते युच् विधीयतेऽतो युच् खलोऽपवाद इति भावः ॥ ५ अलंखल्वोः प्रतिषेधयोः—" इत्यतः 'क्त्वा' इति वर्तते ॥ औचित्यमाश्रित्याह—समानेति ॥ ६ यदा कस्यां चित् क्रियायां समाप्तायां द्वितीयस्याः—

क्त्वा स्यात् । भुक्त्वा व्रजति । द्वित्वमतन्त्रम्[1] । भुक्त्वा पीत्वा व्रजति ॥ **न क्त्वा सेट् १ । २ । १८** ॥ सेट् क्त्वा किन्न[2] स्यात् । शयित्वा । सेट् किम्—कृत्वा ॥ **रलो व्युपधाद्धलादेः संश्च १ । २ । २६** ॥ इवर्णोवर्णोपधाद्धलादेः रलन्तात्परौ क्त्वासनौ[3] सेटौ वा कितौ स्तः ॥ द्युतित्वा, द्योतित्वा । लिखित्वा, लेखित्वा । व्युपधात्किम्—वर्तित्वा । रलः किम्—सेवित्वा । हलादेः किम्—एषित्वा । सेट् किम्—भुक्त्वा ॥ **उदितो वा ७ । २ । ५६** ॥ उदितः परस्य क्त्व[4] इड्वा ॥ शमित्वा, शान्त्वा । देवित्वा, द्यूत्वा । दधातेर्हिः[5] । हित्वा ॥ **जहातेश्च क्त्वि ७ । ४ । ४३** ॥ हित्वा । हाङस्तु—हात्वा ॥ **समासेऽनञ्पूर्वे क्त्वो ल्यप् ७ । १ । ३७** ॥ अव्ययपूर्वपदेऽनञ्समासे[6] क्त्वो ल्यबादेशः स्यात् । तुक् । प्रकृत्य । अनञ् किम्—अकृत्वा ॥ **आभीक्ष्ण्ये णमुल् च**

---

—क्रियाया आरम्भस्तदा समाप्ता क्रिया पूर्वकालिका क्रियोच्यते, तत्र पूर्वकालिकक्रियायाः तत्सहचारिण्या द्वितीयायाश्च क्रियाया यदैक एव कर्ता भवति तदैव क्त्वाप्रत्ययः । यथा—'रामो रावणं हत्वा विभीषणाय राज्यं ददौ' । अत्र 'हत्वा ददौ' इत्यनयोरेक एव रामः कर्ता । भिन्नकर्तृत्वे तु पूर्वकालिकक्रियायाः प्रयोगो न भवति । तेन 'लक्ष्मणो मेघनादं हत्वा, रामो विभीषणाय राज्यं ददौ' इति वाक्यमशुद्धमेव ॥

१ अविवक्षितम् । एवं च समानकर्तृकाणां बहूनामपि धात्वर्थानां पूर्वकाले विद्यमानात् क्त्वा सिध्यति ॥ २ "असंयोगाल्लिट्—" इत्यतोऽनुवर्त्याह—**किदिति** ॥ ३ "असंयोगाल्लिट् कित्" "न क्त्वा सेट्" "पूङः क्त्वा च" "नोपधात्थफान्ताद्वा" इत्यतोऽनुवर्त्याह—**क्त्वासनाविति** ॥ ४ "वसतिक्षुधोरिट्" "जॄव्रश्च्योः क्त्वि" इत्यतोऽनुवर्त्याह—**क्त्व इडिति** ॥ ५ "दधातेर्हिः" इत्यतो 'हिः' इति वर्तते ॥ ६ 'अनञ्पूर्वे' इति पर्युदासलभ्य—

३।४।२२ ॥ आभीक्ष्ण्ये द्योत्ये पूर्वविषये[1] णमुल् स्यात् क्त्वा च ॥ **नित्यवीप्सयोः ८।१।४॥** आभीक्ष्ण्ये[2] वीप्सायां च द्योत्ये पदस्य द्वित्वं[3] स्यात् । आभीक्ष्ण्यं तिङन्तेष्वव्ययसंज्ञकेषु च कृदन्तेषु च । स्मारंस्मारं नमति शिवम् । स्मृत्वास्मृत्वा । पायम्पायम् । भोजम्भोजम् । श्रावंश्रावम् ॥ **अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ३।४। २७ ॥** एषु[4] कृञो णमुल् स्यात् ॥ सिद्धोऽप्रयोगोऽस्य एवम्भूतश्चेत् कृञ् । व्यर्थत्वात्प्रयोगानर्ह इत्यर्थः[5] । अन्यथाकारम् । एवङ्कारम् । कथङ्कारम् । इत्थङ्कारं भुंक्ते । सिद्धेति किम्–शिरोऽन्यथा कृत्वा भुंक्ते ॥ इत्युत्तरकृदन्तम् ॥

॥ इति कृदन्तम् ॥

---

–मर्थमाह–**अव्ययपूर्वपद** इति ॥ 'विनापि प्रत्ययं पूर्वोत्तरपदलोपः' इति **पूर्वपदलोपेनाव्ययपूर्वत्वविरहेऽपि** क्वचिल्ल्यब्भवत्येव यथा 'सन्ध्यावधूं गृह्य करेण **भानुः**' **इत्यादौ** ॥ एवंविधानामसाधुत्वं वदन्तस्तु व्याकरणानभिज्ञा एव ॥ १ "**समानकर्तृकयोः** पूर्वकाले" इत्यनुवर्त्याह–**पूर्वविषय** इति ॥ २ "**पौनःपुन्ये** च वीप्सायां **संभ्रमेऽनुक्रमे** तथा । गुणसादृश्यपीडासु द्विः स्याच्चामन्त्रणे **पदम्** ॥" पौनःपुन्ये–भुक्त्वा भुक्त्वा व्रजति । वीप्सायाम्–गृहे गृहे गीतम् । संभ्रमे–सर्पः सर्पः पश्य **पश्य** । **अनुक्रमे**–ज्येष्ठं ज्येष्ठं प्रवेशय । **गुणे**–मन्दं मन्दं गच्छति । सादृश्ये–भीतभीतं इव वर्तते । पीडायाम्–कालो गतगतः । आमन्त्रणे भीम ! भीम ! इति ॥ ३ "सर्वस्य द्वे" इत्यधिकृत्याह–**द्वित्वमिति** ॥ ४ कर्मण्याक्रोशे कृञः खमुञ्" "स्वादुमि णमुल्" इत्यतोऽनुवर्त्याह–**एषु कृञ** इति ॥ ५ यो ह्यर्थः 'अन्यथा भुङ्क्ते' इति वाक्यतः प्रतीयते, स एव 'अन्यथाकारं भुङ्क्ते' इत्यस्मादपीति कृञ् निरर्थक इति भावः ॥

## अथ विभक्त्यर्थाः ।

**प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा २ । ३ । ४६ ॥** नियतोपस्थितिकः प्रातिपदिकार्थः । मात्रशब्दस्य प्रत्येकं योगः । प्रातिपदिकार्थमात्रे लिङ्गमात्राद्याधिक्ये संख्यामात्रे च प्रथमा स्यात् । प्रातिपदिकार्थमात्रे—उच्चैः । नीचैः । कृष्णः । श्रीः । ज्ञानम् । लिङ्गमात्रे—तटः, तटी, तटम् । परिमाणमात्रे—द्रोणो व्रीहिः । वचनं—संख्या । एकः द्वौ, बहवः ॥ **सम्बोधने च २ । ३ । ४७ ॥**

---

१ प्रातिपदिकार्थश्च लिङ्गं च परिमाणं च वचनं च प्रातिपदिकार्थलिङ्गपरिमाणवचनानि तान्येव प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रम् तस्मिन् प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे । अत्र समासस्य द्वन्द्वत्वाद् 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इत्युक्तेरिति भावः ॥ २ "कर्तृवाच्ये कर्तृपदे कर्मवाच्ये च कर्मणि । सम्बोधने नाममात्रे विभक्तिः प्रथमा भवेत् ॥" उक्ते कर्तरि—बालकः क्रीडति, रामो गच्छति । उक्ते कर्मणि—मया चन्द्रो दृश्यते, भक्तैः सेव्यते हरिः । सम्बोधने—भो पितः ! हे पान्थ ! अरे पापाधम ! अयि सखे ! रे वञ्चक ! अङ्ग भ्रातः ! नाममात्रे—इन्द्रः, अचलः, पादपः, मत्स्याधारः, रात्रिः, पृथिवी, शाखा, लेखनी, नक्षत्रम्, जलम्, पत्रम्, पुस्तकम् ॥ ३ नियतोपस्थितिर्यस्य तत् प्रवृत्तिनिमित्तं तदाश्रयश्चेत्येतद्द्वयमित्यर्थः ॥ ४ भाष्यमते प्रातिपदिकार्थमात्रस्योदाहरणम्—अलिंगाः—उच्चैः नीचैः इत्यादयः । लिङ्गप्रवृत्तिनिमित्ताः—पुमान् स्त्री नपुंसकम् इत्यादयः । लिङ्गमात्राधिक्यस्य—कृष्णः श्रीः ज्ञानम् तटः तटी तटम् इत्यादयः । अत्र जातिव्यक्तिभ्यां प्रातिपदिकार्थाभ्यामधिकस्य लिङ्गस्योपस्थीयमानत्वात् । परिमाणमात्राधिक्यस्य—द्रोणः खारी आढकम् इत्यादयः । अत्र प्रातिपदिकार्थाभ्यां जातिव्यक्तिभ्यां द्रोणत्वतदाश्रयाभ्याम् अधिकस्य परिमाणत्वस्य लिङ्गवद्विशेष्यान्वयिन उपस्थितिविषयत्वात् इति बोध्यम् ॥ ५ इहोक्तार्थत्वाद्विभक्तेरप्राप्तौ वचनम् ॥

प्रथमा[1] स्यात् ॥ हे राम । (इति प्रथमा)॥ **कर्तुरीप्सिततमं कर्म १।४।४९॥** कर्तुः[2] क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात् ॥ **कर्मणि द्वितीया २।३।२॥** अनुक्ते[3] कर्मणि द्वितीया[4] स्यात् ॥ हरिं भजति । अभिहिते तु कर्मादौ प्रथमा—हरिः

---

१ "प्रातिपदिकार्थलिङ्ग–" इत्यतोऽनुवर्त्याह–**प्रथमेति** ॥ २ "कारके" इत्यधिकृतम् । कर्तुरीप्सिततत्वं च स्वनिष्ठक्रियाद्वारेति मनसि निधायाह–**कर्तुः क्रिययेति** ॥ कर्त्रा स्वनिष्ठव्यापारप्रयोज्यफलेन संबद्धुमिष्यमाण यत्, तत् कारकं सत् कर्मसंज्ञं स्यादिति परमार्थः । कर्तृत्वविवक्षया प्रयुक्तस्येत्यर्थः । 'माषेष्वश्वं बध्नाति' इत्यत्र माषाणां भक्षणकर्तुरश्वस्येप्सिततमत्वेऽपि कर्तृत्वविवक्षया प्रयुक्तस्य पुरुषस्येप्सिततमत्वाभावान्न कर्मसंज्ञेति बोध्यम् ॥ ३ "अनभिहिते" इत्यधिकृतम् ॥ अत आह–**अनुक्त** इत्यादि ॥ ४ "कर्तृवाच्यप्रयोगे स्याद् द्वितीया कर्मकारके । धिक्–प्रतीत्यादिभिर्योगे व्याप्तावर्थे च सा भवेत् ॥" अनुक्ते कर्मणि–स पुष्पं चिनोति, अहं जलं पिबामि । धिक् योगे–कृपणं धिक् । प्रतियोगे–दीनं प्रति दयोचिता । अनुयोगे–मातरमनु । ऋतेयोगे–यत्नमृते विद्या न भवति । अन्तरेणयोगे–शास्त्रज्ञानमन्तरेण शान्तिं न लभते । अन्तरायोगे–अग्निमन्तरा कथं पचेत् । विनायोगे–ज्ञानं विना वृथा जीवनम् । पृथक्योगे–अन्नं पृथक् नरो न जीवति । नानायोगे–नाना नारीं निष्फला लोकयात्रा । निकषायोगे–न कदापि गन्तव्यं निकषा सर्पम् । इत्यादि ॥ "उभसर्वतसोः कार्या, धिगुपर्यादिषु त्रिषु । द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥" उभयतः कृष्णं गोपाः, सर्वतः कृष्णं गोपाः, उपर्युपरि लोकं हरिः, अधोऽधो लोकं पातालः, अध्यधिग्रामम् । "क्रियाविशेषणं यत् स्यात् क्लीबलिङ्गं हि तद्भवेत् । स्यादेकवचनं तत्र द्वितीयायाश्च सर्वदा ॥" सत्वरं धावति, मधुरं हसति, मृदु जल्पति, सानुनयं निवेदयति ॥ समयायोगे–ग्रामं समया नदी । हायोगे–हा देवदत्तम् । यावत्योगे–

सेव्यते । लक्ष्म्या सेवितः ॥ **अकथितं च १ । ४ । ५१ ॥** अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात् । "दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमन्थमुषाम् ॥ कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥ १ ॥" गां दोग्धि पयः । बलिं याचते वसुधाम् । तण्डुलानोदनं पचति । गर्गान् शतं दण्डयति । व्रजमवरुणद्धि गाम् । माणवकं पन्थानं पृच्छति । वृक्षमवचिनोति फलानि । माणवकं धर्मं ब्रूते शास्ति वा । शतं जयति देवदत्तम् । सुधां क्षीरनिधिं मथ्नाति । देवदत्तं शतं मुष्णाति । ग्राममजां नयति हरति कर्षति वहति वा । अर्थनिबन्धनेयं संज्ञा । बलिं भिक्षते वसुधाम् । माणवकं धर्मं भाषते अभिधत्ते वक्तीत्यादि ॥ ( इति द्वितीया ) ॥ **स्वतन्त्रः कर्ता १ । ४ । ५४ ॥** क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् ॥

---

-वनं यावदनुसरति । व्याप्त्यर्थे-आकाशं नक्षत्राणि विराजन्ते । अध्वकालाभ्यामत्यन्तसंयोगे-मासमधीते । क्रोशं कुटिला नदी । अधिपूर्वाणां शीङ् स्था आस् धातूनामाधारे-चन्द्रापीडः मुक्ताशिलापट्टम् अधिशिश्ये । अर्धासनं गोत्रभिदोऽधितष्ठौ । भूपतिः सिंहासनमध्यास्ते । इति ॥ १ प्रागुक्तसंज्ञाभिरविवक्षितमिति प्रागुक्तासंज्ञा आह-**अपादानादीति** ॥ "कारके" इत्यधिकृतमिति भावः ॥ २ कर्मणा योगश्च धात्वर्थव्यापारात्प्रागेव वर्तमानरूपो बोध्यः ॥ तेन स्थाल्याः कर्मसंज्ञा नेति भावः । ब्रुविशासिप्रयोगे तु धात्वर्थव्यापारादुत्तरं सम्बन्धो बोध्यः ॥ ३ 'अहमपीदमचोद्यं' 'चोद्ये' 'शकारमसि चोदितः' भाष्यप्रयोगात् ॥ भिक्षिशासिग्रहणवैयर्थ्यापत्तिः । तस्मात् अर्थनिबन्धनत्वे संज्ञायां भाष्योक्तपरिगणने सति प्रामाणिकप्रयोगे व्यापारद्वयार्थत्वमाश्रित्य द्विकर्मत्वं बोध्यमिति भाष्यतत्त्वविदः ॥

**साधकतमं करणम् १ । ४ । ४२ ॥** क्रियासिद्धौ[1] प्रकृष्टोपकारकं करणसंज्ञं स्यात् ॥ **कर्तृकरणयोस्तृतीया[2] २ । ३ । १८ ॥** अनभिहिते[3] कर्तरि करणे च तृतीया स्यात् ॥ रामेण बाणेन हतो वाली ॥ ( इति तृतीया ) ॥ **कर्मणा यमभिप्रैति स सम्प्रदानम् १ । ४ । ३२ ॥** दानस्य[4] कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञः स्यात् ॥ **चतुर्थी[5] सम्प्रदाने[6] २ । ३ । १३ ॥** विप्राय गां ददाति ।

---

१ "कारके" इत्यधिकृतम् । 'यावद्-ब्रूयात्-क्रियायामिति तावद् ब्रूयात् कारक इति' इति भाष्योक्तिमाश्रित्याह-**क्रियासिद्धाविति** ॥ २ "कर्मवाच्ये भाववाच्ये तृतीया कर्तृकारके । करणे च तथा हेतौ प्रकृत्यादेः प्रयोगतः ॥ विशेषणे सहाद्यर्थे योगे विनादिभिस्तथा । हीनार्थैर्वारणार्थैश्च ज्ञेयमन्यत् प्रयोगतः ॥" अनुक्ते कर्तरि-मया ओदनः पच्यते । तेन तत्र अभावि । करणे-हस्तेन गृह्णाति, रामो जलेन मुखं प्रक्षालयति । हेतौ-सुशीलः पुत्रः पितुः शासनेन ज्ञानवान् भवति, अध्ययनेन वसति । प्रकृत्यादौ-प्रकृत्या दयालुः, नाम्ना श्यामोऽयम्, सुखेन जीवति, शिशुः क्लेशेन स्थातुं शक्नोति, अर्जुनः सरलतया पठति, प्रायेण मूर्खः । विशेषणे-दण्डेन ब्रह्मचारी । सहार्थे-सद्भिः सह मैत्री विधेया । केनापि सार्धं विरोधो न कर्तव्यः । रामो जानक्या साकं वनं जगाम । वरं विरोधोऽपि समं महात्मभिः । विनादियोगे-श्रमेण ( श्रमं श्रमाद्वा ) विना किमपि न सिद्ध्यति । चैत्रेण ( चैत्रं चैत्राद्वा ) पृथक् । हीनार्थे-विद्यया हीनः, अहंकारेण शून्यः, पापेन रहितः, एकेन ऊनः । वारणार्थे विवादेन अलम् । प्रयोजनार्थे-कोऽर्थः पुत्रेण जातेन । सदृशे-अग्रजः पित्रा ( पितुः ) सदृशः समः तुल्यो वा । विकृतेऽङ्गे-अक्ष्णा काणः, शिरसा खल्वाटः, कर्णेन बधिरः, पादेन खञ्जः, कट्या कुब्जः । ३ "अनभिहिते" इत्यधिक्रियते ॥ ४ 'सम्प्रदानम्' इति सम्प्रदीयतेऽस्मै' इति महासंज्ञाबलाद् अन्वर्थत्वमाश्रित्याह-**दानस्येति** ॥ ५ "अनभिहिते" इत्यधिक्रियते ॥ ६ "सम्प्रदाने निमित्तार्थे क्रियायोगे च कुत्रचित् । शब्दैः शक्तसम-

**नमस्स्वस्तिस्वाहास्वधालंवषड्योगाच्च २ । ३ । १६ ॥** एभिर्योगे चतुर्थी ॥ हरये नमः । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा । अलमिति पर्याप्त्यर्थग्रहणम् । तेन दैत्येभ्यो हरिरलं प्रभुः समर्थः शक्त इत्यादि ॥ ( इति चतुर्थी ) **ध्रुवमपायेऽपादानम् १ । ४ । २४ ॥** अपायो विश्लेषस्तस्मिन्साध्ये यद् ध्रुवमवधिभूतं कारकं तदपादानं स्यात् ॥ **अपादाने पञ्चमी २ । ३ । २८ ॥** ग्रामादायाति । धावतोऽश्वात्पततीत्यादि । (इति पञ्चमी)॥

---

-मर्थाद्यैर्नमः-स्वस्ति-हितादिभिः ॥ रुचादिधातुयोगे च चतुर्थी विहिता भवेत् ॥" सम्प्रदाने-दरिद्राय धनं ददाति । निमित्तार्थे=तादर्थ्ये-परोपकाराय सतां विभूतिः। क्रियायोगे-शत्रवे ( शत्रुम् ) मित्राय ( मित्रम् ) वा सर्वस्मै ( सर्वम् ) एवं सत्पथं दर्शयेत् । शक्तादियोगे-अलं मल्लो मल्लाय । पित्रे नमः, प्रजाभ्यः स्वस्ति । छात्राय ( छात्रस्य ) हितम् । रुचादि-धातुयोगे-हरये रोचते भक्तिः । स्वामी भृत्याय क्रुद्ध्यति । खलाः सज्जनेभ्यः असूयान्ति । दुर्योधनः पाण्डवेभ्यः ईर्ष्यति स्म । शठाः सर्वेभ्यो द्रुह्यन्ति । सीता रावणाय अकुप्यत् । इति ॥

१ " चतुर्थी संप्रदाने " इत्यतः ' चतुर्थी ' इति वर्तते ॥ ' नमः षड्भिर्योगो यस्य स तस्मात् ' इत्यनेन फलितमाह-**एभिर्योगे इति** ॥

२ अवधिभूतत्वेन विवक्षितमित्यर्थः । विवक्षा च सतोऽपि न भवति यथा-अनुदरा कन्या, असतोऽपि विवक्षा यथा-वन्ध्यापुत्रः । एवं चलेऽप्यश्वेऽवधित्वविवक्षयाऽपादानत्वं भवत्येवेति भावः ॥

३ " अनभिहिते " इत्यधिक्रियते ॥

४ "पञ्चमी स्यादपादाने योगे दिगन्यवाचकैः । हेतौ तथा ल्यबर्थे च विनाहीनादियोगतः ॥" अपादाने-वृक्षात्पत्रं पतति । दिग्वाचके-उदधेरुत्तरं श्रीक्षेत्रम् । अन्ययोगे-मित्रादन्यः कस्त्रायते । हेतौ-धनात्कुलम् । ल्यबर्थे-कर्मणि । श्वशुराज्जिहेति, अधिकरणे-आसनात्प्रेक्षते । विनार्थे-शिक्षाया ( शिक्षया शिक्षां वा ) विना न कोऽपि ज्ञानं लभते । हीने-ब्राह्मणाद्धीनाः सर्वे एव वर्णाः॥ [illegible]-तोयात्सते तृणा-

**षष्ठी शेषे २ । ३ । ५० ॥** कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः सम्बन्धः शेषस्तत्र षष्ठी ॥ राज्ञः पुरुषः । कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव । सतां गतम् । सर्पिषो जानीते । मातुः स्मरति । एधोदकस्योपस्कुरुते । भजे शम्भोश्चरणयोः ॥ ( इति षष्ठी ) **आधारोऽधिकरणम् १ । ४ । ४५ ॥** कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणं स्यात् ॥ **सप्तम्यधिकरणे च २ । ३ । ३६ ॥** अधिकरणे सप्तमी स्यात् चकाराद् दूरान्तिकार्थेभ्यः । औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा । कटे

---

—न दूरीभवति । बहिर्योगे—ग्रामाद् बहिः कोलाहलः श्रूयते । आयोगे—आजीवनात् । अधिके—रोगादधिकं किमस्ति दुःखम् । प्रभृतौ—माघात्प्रभृति शीतम् । अपेक्षार्थे धनिनो विद्वान् श्रेष्ठः । दूरार्थे—वासस्थानाद्दूरं मलमूत्रं त्यजेत् । कालवाचके—भोजनात् पूर्वं पादौ प्रक्षालयेत् ॥ १ "षष्ठी सर्वत्र सम्बन्धे कृद्योगे कर्तृकर्मणोः । निर्द्धारेऽनादरादौ च स्मृतिहिंसादिकर्मणि ॥" सम्बन्धे—राज्ञः पुरुषः । कृद्योगे कर्तरि—भवत आसिका । कर्मणि—अपां स्रष्टा । निर्द्धारणे—पर्वतानां मेरुः श्रेष्ठः । अनादरे—छात्रो याति बहिर्गुरोः । स्मृत्यर्थकर्मणि—मातुः स्मरति । हिंसार्थकर्मणि—चौरस्य निहन्ति ॥ २ उदकशब्दपर्यायो दकशब्दोऽस्ति ॥ ३ "कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम् । उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ॥" इत्युक्तिमभिप्रेत्य व्याचष्टे—**कर्तृकर्मेति** ॥ ४ " आधारे चैव निर्द्धारेऽवच्छेदे कालभावयोः । निमित्ते कर्मसंयोगे विभक्तिः सप्तमी भवेत् ॥" आधारे—पात्रे भुङ्क्ते । निर्द्धारणे—कविषु कालिदासः श्रेष्ठः । अवच्छेदे—गृहीत इव केशेषु । काले—बाल्ये विद्यामुपार्जयेत् । भावे—अस्तंगते सवितारि । कर्मसंयुक्तनिमित्तपदे—केशेषु चमरीं हन्ति ॥ ५ " अनभिहिते " इत्यधिक्रियते ॥ " दूरान्तिकार्थेभ्यो द्वितीया च " इत्यप्यनुकृष्यते चकारेणेत्यभिप्रेत्याह—**दूरान्तिकेति** ॥

आस्ते ॥ स्थाल्यां पचति । मोक्षे[3] इच्छास्ति । सर्वस्मिन्नात्मास्ति । वनस्य दूरे अन्तिके वा ॥ ( इति सप्तमी ) ॥

॥ इति विभक्त्यर्थाः ॥

## अथ समासः ।

तत्रादौ केवलसमासः । समासः पञ्चधा । तत्र समसनं समासः । स च विशेषसंज्ञाविनिर्मुक्तः केवलसमासः प्रथमः ॥ १ ॥ प्रायेण पूर्वपदार्थप्रधानोऽव्ययीभावो द्वितीयः ॥ २ ॥ प्रायेणोत्तरपदार्थप्रधानस्तत्पुरुषस्तृतीयः ॥ तत्पुरुषभेदः कर्मधारयः । कर्मधारयभेदो द्विगुः ॥

---

१ आसनक्रियाकर्तृद्वारा आसनक्रियाया आधारः कटः अधिकरणसंज्ञः॥ २ पाकक्रियाकर्मतण्डुलादिद्वारा पाकक्रियाया आधारः स्थाली अधिकरणसंज्ञः । ३ अस्तिक्रियाकर्तृभूतेच्छाद्वारा अस्तिक्रियाया आधारो मोक्षोऽधिकरणसंज्ञः ॥ ४ अस्तिक्रियाकर्तृभूतात्मद्वारा अस्तिक्रियाया आधारः सर्वमधिकरणसंज्ञम् ॥ ५ पृथक्पृथगर्थोपस्थापकत्वेन दृष्टानां पदानामेकार्थोपस्थितिजनकत्वमेकार्थीभावरूपं समसनमेव समास इत्यर्थः ॥ ६ " पदानां सङ्गतार्थानां मिलितानां परस्परम् योऽयमेकपदीभावः समासः स प्रकीर्तितः ॥" इति ॥ ७ विशेषसंज्ञा अव्ययीभावादिरूपास्ताभिर्विनिर्मुक्त इत्यर्थः ॥ ८ सूपप्रति उन्मत्तगङ्गमित्यादावव्ययीभावेऽपि पूर्वपदार्थप्राधान्याभावाद् उक्तम्-प्रायेणेति ॥ ९ " द्वन्द्वो द्विगुरपि चाहं मद्गेहे नित्यमव्ययीभावः । तत्पुरुषकर्मधारय येनाहं स्यां बहुव्रीहिः ॥" कश्चिद् याचकः कंचिद् दातारं प्रार्थयते-अहं द्विरूपः ( अहं मम स्त्री चेति ) मम द्वे गावौ अपि स्तः, मम गृहे प्रतिदिनं व्ययो न भवति, व्ययार्थं द्रव्याभावात्, अतः हे पुरुष ! तत् कर्म=कार्यं धारय=कुरु, येनाहं बहुधान्यो भवेयमिति पद्यार्थः ॥ १० अतिमालादौ तत्पुरुषेऽप्युत्तरपदार्थप्राधान्याभावाद् उक्तम्-प्रायेणेति ॥

॥ ३ ॥ प्रायेणान्यपदार्थप्रधानो बहुव्रीहिश्चतुर्थः ॥ ४ ॥ प्रायेणोभय-पदार्थप्रधानो द्वन्द्वः पञ्चमः ॥ ५ ॥ **समर्थः पदविधिः २ । १ । १ ॥** पदसम्बन्धी यो विधिः स समर्थाश्रितो बोध्यः ॥ **प्राक्कडारात्समासः २ । १ । ३ ॥** 'कडाराः कर्मधारय' इत्यतः प्राक् समास इत्यधिक्रियते ॥ **सह सुपा २ । १ । ४ ॥** सुप् सुपा सह वा समस्यते ॥ समासत्वात्प्रातिपदिकत्वेन सुपो लुक् । परार्थाभिधानं वृत्तिः । कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः । वृत्त्यर्थावबोधकं वाक्यं विग्रहः । स च लौकिकोऽलौकिकश्चेति द्विधा । तत्र पूर्व

---

१ द्वित्रा इत्यादौ बहुव्रीहित्वेऽप्यन्यपदार्थप्राधान्याभावाद् उक्तम्—प्रायेणेति ॥ २ पाणिपादमित्यादौ द्वन्द्वेऽप्युभयपदार्थप्राधान्याभावाद् उक्तम्—प्रायेणेति ॥ ३ समासो हि समर्थानां=परस्परं सापेक्षाणामेव भवति नत्वसमर्थानाम्=अनपेक्षाणाम् । यथा—मनुष्याणां समुदायः=मनुष्यसमुदायः इति समासो भवति, षष्ठ्यन्तमनुष्यपदस्य प्रथमान्तसमुदायपदसापेक्षत्वात् । इह तु समासो न भवति—'प्रकृतिः मनुष्याणां समुदायः पशूनाम्, इति । अत्र हि षष्ठ्यन्तो मनुष्यशब्दः प्रथमान्तं समुदायशब्दं नापेक्षते इति समासाभावः । एवमन्यत्रापि ॥ ४ "समासः" इत्यधिक्रियमाणे "सुबामंत्रिते—" इत्यतोऽनुवर्तमानेन सुप्पदेन सामानाधिकरण्याय व्याख्यायते—समस्यते इति ॥ अव्ययमित्यादिना समासविधानादस्य वैकल्पिकत्वमेव । अत एव भाष्यकृता 'विस्पष्टं पटुः विस्पष्टपटुः' इति विग्रहः प्रदर्शितः ॥ अविग्रहस्यैव नित्यसमासत्वमिति बोध्यम् ॥ ५ परस्य एकार्थस्याभिधानम् एकार्थीभावेनोपस्थितिजननमेव वृत्तिरित्यर्थः ॥ कैयटस्त्वाह—"परस्य शब्दस्य योऽर्थस्तस्याभिधानं शब्दान्तरेण यत्र सा वृत्तिरित्यर्थः । यथा 'राजपुरुष' इत्यत्र 'राजशब्देन वाक्यावस्थायामनुक्तः पुरुषार्थोऽभिधीयते' इति ॥ ६ वृत्तेर्योऽर्थः तस्यावबोधकं वाक्यं विग्रह इत्यर्थः ॥

भूत इति लौकिकः। पूर्व अम् भूत सु इत्यलौकिकः । भूतपूर्वः । "भूतपूर्वे चरट्" इति निर्देशात्पूर्वनिपातः । (वा) इवेन समासो विभक्त्यलोपश्च । वागर्थौ इव वागर्थाविव ।

॥ इति केवलसमासः ॥ १ ॥

---

अथाव्ययीभावः ॥ २ ॥

**अव्ययीभावः २।१।५ ॥** अधिकारोऽयं प्राक् तत्पुरुषात् ॥ **अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु २ । १ । ६ ॥** विभक्त्यर्थादिषु वर्तमानमव्ययं सुबन्तेन सह नित्यं समस्यते सोऽव्ययीभावः ॥ प्रायेणाविग्रहो नित्यसमासः प्रायेणास्वपदविग्रहो वा । विभक्तौ हरि ङि अधि-इति स्थिते-॥ **प्रथमानिर्दिष्टं समास उपसर्जनम् १।२।४३॥** समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात् ॥ **उपसर्जनं पूर्वम् २ । २ । ३० ॥** समासे उपसर्जनं प्राक्प्रयोज्यम् । इत्यधेः प्राक् प्रयोगः । सुपो लुक् । "एकदेशविकृतस्यानन्यत्वात्प्रातिपदिकसंज्ञायां

---

१ लोके प्रयोगार्ह एव लौकिकः ॥ २ लोके प्रयोगानर्ह एवालौकिकः ॥ ३ 'समासः' 'अव्ययीभावः' इत्यधिक्रियते "सह सुपा" इत्यतोऽनुवर्त्याह-**सुबन्तेनेत्यादि** ॥ ४ **अविग्रह** इति । लौकिकविग्रहरहित इत्यर्थः ॥ ५ **अस्वपदेति** । समस्यमानयावत्पदाघटित इत्यर्थः ॥ ६ समासपदं लक्षणया समासविधायकशास्त्रपरमित्याह-**समासशास्त्र** इति ॥ ७ "प्राक्कडारात्-" इति समासाधिकारावधेः प्रतिज्ञातत्वादाह-**समास** इति ॥ ८ यथा कुक्कुरस्य पुच्छे-

स्वाद्युत्पत्तिः। अव्ययीभावश्चेत्यव्ययत्वात्सुपो लुक्। अधिहरि ॥ **अव्ययीभावश्च २।४।१८॥** अयं नपुंसकं[1] स्यात्। **नाव्ययीभावादतोऽम्त्वपञ्चम्याः २।४।८३॥** अदन्तादव्ययीभावात्सुपो[2] न लुक् तस्य पञ्चमीं विना अमादेशश्च स्यात्॥ गाः[3] पातीति गोपास्तस्मिन्नित्यधिगोपम्। **तृतीयासप्तम्योर्बहुलम् २।४।८४॥** अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः[4] स्यात्॥ अधिगोपम्, अधिगोपेन, अधिगोपे वा॥ कृष्णस्य समीपम् उपकृष्णम्॥ मद्राणां समृद्धिः[5] सुमद्रम्॥ यवनानां व्यृद्धिर्दुर्यवनम्[6]। मक्षिकाणामभावो निर्मक्षिकम्। हिमस्यात्ययोऽतिहिमम्। निद्रा संप्रति न युज्यत इत्यतिनिद्रम्। हरिशब्दस्य प्रकाश इतिहरि। विष्णोः पश्चादनुविष्णु। योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः। रूपस्य योग्यमनुरूपम्। अर्थमर्थं प्रति प्रत्यर्थम्। शक्तिमनतिक्रम्य

---

–कर्तिते कर्णयोर्वा कर्तितयोः 'कुक्कुर' इति नाम्नो न निवृत्तिः एवं सुब्विशिष्टस्य प्रातिपदिकसंज्ञायां सुपो लुक्यपि न प्रातिपदिकत्वनिवृत्तिरिति भावः॥ १ "स नपुंसकम्" इत्यतोऽनुवर्त्याह–**नपुंसकमिति**॥ २ "अव्ययादाप्सुपः" इत्यस्यानुवृत्त्या तस्यैवापवाद इत्याह–**सुपो नेति**॥ ३ स्त्रीप्रत्ययान्तोत्तरपदाव्ययीभावे स्त्रीप्रत्ययान्तस्योपसर्जनत्वेन "गोस्त्रियोरुपसर्जनस्य" इत्यनेनैव ह्रस्वसिद्धौ नपुंसकसंज्ञायाः प्रयोजनमस्त्रीप्रत्ययान्तोपसर्जनस्य ह्रस्वसाधनमेवेति भावमाश्रित्यास्त्रीप्रत्ययान्तत्वमुत्तरपदस्य दर्शयति–**गाः पातीति**॥ ४ "अव्ययादाप्सुपः" "नाव्ययीभावादतोऽम्त्वपञ्चम्याः" इत्यनुवर्त्याह–**अदन्तादव्ययीभावादिति**॥ ५ ऋद्धेराधिक्यं **समृद्धिः**॥ ६ विगता ऋद्धिर्व्यृद्धिः॥

यथाशक्ति ॥ **अव्ययीभावे चाकाले ६ । ३ । ८१ ॥** सहस्य सः स्यादव्ययीभावे न तु काले ॥ हरेः सादृश्यं सहरि । ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम् । चक्रेण युगपत् सचक्रम् । सदृशः सख्या ससखि । क्षत्राणां संपत्तिः सक्षत्रम् । तृणमप्यपरित्यज्य सतृणमत्ति । अग्निग्रन्थपर्यन्तमधीते साग्नि ॥ **नदीभिश्च २ । १ । २० ॥** नदीभिः सह संख्या समस्यते ॥ ( समाहारे चायमिष्यते ) । पञ्चगङ्गम् । द्वियमुनम् ॥ **तद्धिताः ४ । १ । ७६ ॥** आपञ्चमसमाप्तेरधिकारोऽयम् ॥ **अव्ययीभावे शरत्प्रभृतिभ्यः ५।४।१०७॥** शरदादिभ्यष्टच् स्यात्समासान्तोऽव्ययीभावे ॥ शरदः समीपमुपशरदम् । प्रतिविपाशम् । (जराया जरश्च) । उपजरसमित्यादि ॥ **अनश्च ५ । ४ । १०८ ॥** अन्नन्तादव्ययीभावाट्टच् स्यात् ॥ **नस्तद्धिते ६ । ४ । १४४ ॥** नान्तस्य भस्य टेर्लोपस्तद्धिते ॥ उपराजम् । अध्यात्मम् ॥ **नपुंसकादन्यतरस्याम् ५ । ४ । १०९ ॥** अन्नन्तं यत् क्लीबं तदन्तादव्ययीभावाट्टज्वा स्यात् ॥ उपचर्मम् । उपचर्म ।

---

१ "सहस्य सः संज्ञायाम्" इत्यतोऽनुवर्त्याह-**सहस्येति** ॥ २ अनुरूपमात्मभावः **संपत्तिः** ॥ ३ "संख्या वंश्येन" "प्राक्कडारात्" इत्यतोऽनुवर्त्याह-**संख्येति** ॥ ४ "समासान्ताः" इत्यधिक्रियते । "राजाहःसखिभ्यः-" इत्यतोऽनुवर्त्याह-**टजिति** ॥ ५ "राजाहःसखिभ्यः-" "अव्ययीभावे शरत्-" इत्यनुवर्त्य विशेषणे तदन्तविधिरित्यभिप्रेत्याह-**अन्नन्तादिति** ॥ ६ "अङ्गस्य" "भस्य" इत्यधिकृते । "अल्लोपोऽनः" "टेः" इत्यतोऽनुवर्त्य विशेषणे तदन्तविधिरित्यभिप्रेत्याह-**नान्तस्येति** ॥ ७ "समासान्ताः" "राजाहःसखिभ्यः-" "अव्ययीभावे शरत्-" "अनश्च" इत्येतेभ्योऽनुवर्त्याह-**अन्नन्तं यदिति** ॥

**झयः ५।४।११२॥** झयन्तादव्ययीभावाट्टच् स्यात् ॥ उपसमिधम् । उपसमित् ॥

॥ इत्यव्ययीभावः ॥ २ ॥

अथ तत्पुरुषः ।

**तत्पुरुषः २।१।२२॥** अधिकारोऽयं प्राग्बहुव्रीहेः ॥ **द्विगुश्च २।१।२३॥** द्विगुरपि तत्पुरुषसंज्ञकः स्यात् ॥ **द्वितीया श्रिता-तीतपतितगतात्यस्तप्राप्तापन्नैः २।१।२४॥** द्वितीयान्तं

---

१ "समासान्ताः" 'टच्' "अव्ययीभावे" इति "नपुंसकादन्यतरस्याम्" इत्यतो 'अन्यतरस्याम्' इत्यनुवर्त्याह–झयन्तादिति ॥ २ अव्ययीभाव-प्रयोगाः–"यथाशक्ति धनं दद्यात्, पाठं प्रतिदिनं पठेत् । आजीवनं वदेत्, सत्यम्, अनुरूपं समाचरेत् ॥" अव्ययीभावसमासे प्रायः पदद्वयं भवति, तत्र प्रथमः प्रायः अव्ययं भवति द्वितीयश्च संज्ञाशब्दः, ततः समासे सति पदद्वयमपि अव्ययं भवतीति अन्वर्थेयं संज्ञा अनव्ययम् अव्ययं भवतीति अव्ययीभावः ॥ ३ तत्पुरुषप्रयोगाः–"दयस्व विपदापन्नम्, त्रायस्व शरणागतम् । दयाहीनं पशुं विद्धि, दीनदेयं धनं हि नः ॥ पापभीतो भवेन्नित्यम्, राजाज्ञां परिपालयेत् । शास्त्रदक्षं गुरुं पृच्छेन्न ब्रूयादप्रियं वचः" ॥ 'तत्पुरुष' शब्दस्यार्थद्वयम्–तस्य पुरुषः तत्पुरुषः, सः पुरुषः तत्पुरुषः, आद्यो व्यधिकरणः, द्वितीयः समानाधि-करणः । अयमेव कर्मधारय इत्युच्यते । एवं च 'तत्पुरुष' शब्दार्थेनैव तस्य द्वौ भेदौ सम्पन्नौ भवतः ।, व्यधिकरणतत्पुरुषोऽष्टधा–१ प्रथमातत्पुरुषः, २ तत्पुरुषः ३ तत्पुरुषः, ४ तत्पुरुषः, ५ तत्पुरुषः, ६ तत्पुरुषः, ७ तत्पुरुषः, ८ नञ्तत्पुरुषश्च । समानाधिकरणभेदा वक्ष्यन्ते ॥ ४ "प्राक्कडारात्" "सह सुपा" "तत्पुरुषः"–

श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते स च तत्पुरुषः। कृष्णं श्रितः कृष्णश्रित इत्यादि ॥ **तृतीया तत्कृतार्थेन गुणवचनेन २।१।३०॥** तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेनार्थेन च सह वा प्राग्वत् ॥ शंकुलया खण्डः शंकुलाखण्डः। धान्येनार्थो धान्यार्थः। तत्कृतेति किम्—अक्ष्णा काणः ॥ **कर्तृकरणे कृता बहुलम् २।१।३२॥** कर्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत् ॥ हरिणा त्रातो हरित्रातः। नखैर्भिन्नो नखभिन्नः। कृद्ग्रहणे गतिकारकपूर्वस्याऽपि ग्रहणम्। नखनिर्भिन्नः ॥ **चतुर्थी तदर्थार्थ-**

---

—इत्यतोऽनुवत्य "विभाषा" अधिकृत्य द्वितीयासुपः केवलस्य प्रयोगाभावात्तदन्तविधिः श्रितादीनां स्वतः सुप्त्वाभावादौचित्याच्छ्रितादिशब्दानां श्रितादिप्रकृतिके लक्षणामाश्रित्य व्याचष्टे—**द्वितीयान्तमित्यादि** ॥ १ आदिना दुःखमतीतः दुःखातीतः। अग्निं पतितः—अग्निपतितः। प्रलयं गतः—प्रलयगतः। मेघमत्यस्तः- मेघात्यस्तः। जीवनं प्राप्तः—जीवनप्राप्तः। कष्टमापन्नः—कष्टापन्नः ॥ २ "प्राक्कडारात्" "सह सुपा" "विभाषा" तत्पुरुषः इत्यतोऽनुवर्त्य तृतीयायाः प्रत्ययत्वेन 'प्रत्ययग्रहणे तदन्तग्रहणम्' 'तत्कृत' इत्यस्य लुप्ततृतीयाकस्य गुणवचनविशेषणमाश्रित्य 'तत्कृत' पदान्तर्गततत्पदेन सन्निहिततृतीयान्तपरामर्शादौचित्येन तस्य तदर्थपरत्वमाश्रित्य व्याचष्टे—**तृतीयान्तार्थेति** ॥ ३ तृतीयान्तं= शंकुलयेति, तदर्थः=शंकुला (सरोता) तेन संपादितो गुणः=खण्डः तद्वाची खण्डशब्दः तेन ॥ ४ नहि काणत्वम् अक्ष्णा संपादितम्, अपितु दैवसम्पादितं तदिति भावः ॥ ५ "प्राक्कडारात्" "सह सुपा" "विभाषा" "तत्पुरुषः" "तृतीया—" इत्येतेभ्योऽनुवर्त्य योग्यतावशात् 'तृतीया' पदं कर्तृकरणपदेनान्वित्य व्याचष्टे—**कर्तरीति** ॥ ६ "गतिरनन्तरः" इति सूत्रेऽनन्तरग्रहणमत्र ज्ञापकमिति बोध्यम् ॥

**बलिहितसुखरक्षितैः २ । १ । ३३ ॥** [1]चतुर्थ्यन्तार्थाय यत् तद्वा-[2]चिना अर्थादिभिश्च चतुर्थ्यन्तं वा प्राग्वत् ॥ यूपाय दारु यूपदारु । ( तदर्थेन प्रकृतिविकृतिभाव एवेष्ट[3] ) तेनेह न—रन्धनाय[4] स्थाली । (वा)अर्थेन नित्यसमासो विशेष्यलिङ्गता[5] चेति वक्तव्यम् ॥ द्विजार्थः सूपः। द्विजार्था यवागूः । द्विजार्थं पयः । भूतबलिः । गोहितम् । गोसुखम् । गोरक्षितम् ॥ **पञ्चमी[6] भयेन २।१।३७ ॥** चोराद्भयं चोरभयम् ॥ **स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन २ । १ । ३९ ॥ पञ्च-म्याः स्तोकादिभ्यः ६ । ३ । २ ॥** [8]अलुगुत्तरपदे ॥ स्तोका-न्मुक्तः । अन्तिकादागतः । अभ्याशादागतः । दूरादागतः । कृच्छ्रा-दागतः ॥ **षष्ठी २ । २ । ८ ॥** [9]सुबन्तेन प्राग्वत् ॥ राजपुरुषः ॥

---

१ " सुबामन्त्रिते—" " प्राक्कडारात्" "सह सुपा" "विभाषा" " तत्पुरुषः " इत्यतोऽनुवर्त्य तदर्थशब्दं व्याख्याय सूत्रं व्याचष्टे—**चतुर्थ्यन्तार्थाय यदिति** ॥ २ चतुर्थ्यन्तवाच्याय यूपाय यद्दार्वादि तद्वाचिना चतुर्थ्यन्तं समस्यत इत्यर्थः ॥ ३ " बलिरक्षितग्रहणाज्ज्ञापकात् ॥ अश्वघासादयस्तु षष्ठीतत्पुरुष एवेति भावः ॥ ४ यूपे दारुणो यथा रूपान्तरं भवति न तथा रन्धनेन स्थाल्या इति समासाभाव इति भावः ॥ ५ " परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः " इत्यनेन प्राप्तस्य पुंस्त्वस्याप-वादनं विधीयत इति बोध्यम् ॥ ६ " प्राक्कडारात् " " सह सुपा " "विभाषा" " तत्पुरुषः " इत्यतोऽनुवर्तनीयमिति भावः ॥ ७ " पञ्चमी भयेन " " प्राक्कडारात् " " सह सुपा " " विभाषा " " तत्पुरुषः " इत्यतो-ऽनुवर्तनीयमिति भावः ॥ ८ " अलुगुत्तरपदे " इत्यधिकारः ॥ ९ " प्राक्कडारात् " " सह सुपा " " विभाषा " " तत्पुरुषः " इत्यतोऽनुव-र्त्याह—**सुबन्तेनेति** ॥

**पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे २ । २ । १ ॥** अवयविना सह पूर्वादयः समस्यन्ते एकत्वसंख्याविशिष्टश्चेदवयवी ॥ षष्ठीसमासापवादः । पूर्वं कायस्य पूर्वकायः । अपरकायः । एकाधिकरणे किम्-पूर्वश्छात्राणाम् ॥ **अर्धं नपुंसकम् २।२।२॥** समांशवाच्यर्धशब्दो नित्यं क्लीबे, स प्राग्वत् ॥ अर्धं पिप्पल्याः अर्धपिप्पली ॥ **सप्तमी शौण्डैः २ । १ । ४० ॥** सप्तम्यन्तं शौण्डादिभिः प्राग्वत् ॥ अक्षेषु शौण्डः अक्षशौण्ड इत्यादि । द्वितीयातृतीयेत्यादियोगविभागादन्यत्रापि तृतीयादिविभक्तीनां प्रयोगवशात्समासो ज्ञेयः ॥ **दिक्संख्ये संज्ञायाम् २ । १ । ५०॥** संज्ञायामेवेति नियमार्थं सूत्रम् ॥

---

१ " सुबामन्त्रिते-" " प्राक्कडारात् " " सह सुपा " " विभाषा " " तत्पुरुषः " इत्यतोऽनुवर्त्याह-**अवयविनेति** ॥ एकदेशशब्दश्चावयववाचीति भावः ॥ २ अवयवावयविनोः प्रयोगेऽवयविनः षष्ठ्या आवश्यकत्वेन षष्ठीतत्पुरुषेऽवश्यं प्राप्तेऽयमेकदेशिसमास आरभ्यमाणः षष्ठीतत्पुरुषस्यापवादः । अत एवावयविनः परप्रयोगः सिध्यति । अवयववाचिपूर्वादिशब्दानां " पूर्वापराधरोत्तरम्-" इति प्रथमानिर्दिष्टत्वेनोपसर्जनत्वात्प्राक्प्रयोगस्येष्टत्वात् ॥ ३ छात्रशब्दो बहुत्वसंख्याविशिष्ट इति समासाभाव इति भावः ॥ ४ " नपुंसकम् " इति विशेषणोपादानफलमाह-**समांशेति** ॥ ५ " सुबामन्त्रिते-" इत्यादिभ्योऽनुवर्त्याह-**स प्राग्वदिति** ॥ ६ " प्राक्कडारात् " " सह सुपा " " विभाषा " " तत्पुरुषः " इत्यतोऽनुवर्त्याह-**सप्तम्यन्तमिति** ॥ ७ शौण्डो निपुणः ॥ ८ 'आस्ये प्रयत्न आस्यप्रयत्नः, शब्दे संज्ञा शब्दसंज्ञा ' इत्यादिप्रयोगेषु महाभाष्यकारादिभिः सप्तमीतत्पुरुषस्याश्रितत्वादनुक्तोऽपि "सप्तमी शौण्डैः " इत्यत्र योगविभाग ऊहनीय इत्यभिप्रायवानाह-**द्वितीयेति** ॥ ९ "सह सुपा " इत्यनेन केवलसमासविधानादिति तु तत्त्वम् ॥ १० " विशेषण-

पूर्वेषुकामशमी । सप्तर्षयः । तेनेह न–उत्तरा वृक्षाः । पञ्च ब्राह्मणाः॥ **तद्धितार्थोत्तरपदसमाहारे च २।१।५१॥** तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये प्राग्वत् ॥ पूर्वस्यां शालायां भवः पूर्वाशाला इति समासे जाते (वा) सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः ॥ **दिक्पूर्वपदादसंज्ञायां ञः ४।२।१०७॥** अस्माद्भवाद्यर्थे ञः स्यादसंज्ञायाम् ॥ **तद्धितेष्वचामादेः ७।२।११७॥** ञिति णिति च तद्धितेष्वचामादेरचो वृद्धिः स्यात् ॥ यस्येति च । पौर्वशालः ॥ पञ्च गावो धनं यस्येति त्रिपदे बहुव्रीहौ। (वा) द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम् ॥ **गोरतद्धितलुकि ५।४।९२॥** गोन्तात्तत्पुरुषाट्टच् स्यात् समासान्तो न तु तद्धित-

---

–विशेष्येण–" इति सिद्धे पुनर्विधानफलमाह–**संज्ञायामेवेतीति** ॥ १ इषुकामशमी ग्रामविशेषः । पूर्वेषुकामशमी संज्ञा ॥ २ संज्ञायामेवेति नियमेन ॥ ३ "प्राक्कडारात्" "सुबामन्त्रिते" "सह सुपा" "विभाषा" "तत्पुरुषः" इत्यतोऽनुवर्त्य एकामपि सप्तमीं विषयभेदेन भित्त्वा व्याचष्टे–**तद्धितार्थे विषय** इति ॥ ४ **दिक्संख्य** इति । दिक्संख्याप्रकृतिके सुबन्ते सुबन्तेन समस्यते इत्यर्थः ॥ ५ **भव** इति "तत्र भवः" इति तद्धितप्रकरणे 'भवः' इत्यर्थनिर्देशात् ॥ ६ पुँल्लिङ्गे यादृशं रूपं तत्प्राप्तिः । अर्थात् स्त्रीप्रत्ययनिवृत्तिः। तन्निमित्तस्य स्त्रीत्वस्य निवृत्तेरिति भावः ॥ ७ "मृजेर्वृद्धिः" "अचो ञ्णिति" इत्यतोऽनुवर्त्याह–**ञिति णिति चेति** ॥ ८ "तद्धितार्थस्योदाहरणं दर्शयित्वोत्तरपदस्योदाहरणमाह–**पञ्च गावो धनं यस्येति** ॥ ९ **बहुव्रीहाविति** । 'अवान्तरतत्पुरुषस्य विकल्पे प्राप्ते' इत्यन्ते शेषः । 'समुदायवृत्तावयवानां मा कदाचिद् वृत्तिर्भूत्' इति वार्तिकस्यास्य प्रयोजनं महाभाष्यकारैरुक्तम् ॥ १० "समासान्ताः" "तत्पुरुषस्याङ्गुलेः" "राजाहः–

लुकि ॥ पञ्चगवधनः ॥ **तत्पुरुषः समानाधिकरणः कर्मधारयः १।२।४२ ॥ संख्यापूर्वो द्विगुः २ । १ । ५२ ॥** तद्धितार्थेत्यत्रोक्तस्त्रिविधः संख्यापूर्वो द्विगुसंज्ञः स्यात् ॥ **द्विगुरेकवचनम् २ । ४ । १ ॥** द्विग्वर्थः समाहार एकवत्स्यात् ॥ **स नपुंसकम् २।४।१७ ॥** समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात् । पञ्चानां गवां समाहारः पञ्चगवम् ॥ **विशेषणं विशेष्येण बहुलम् २ । १ । १७ ॥** भेदकं भेद्येन समानाधिकरणेन बहुलं प्राग्वत् ।

---

–सखिभ्यष्टच् " इत्यतोऽनुवर्त्य विशेषणे तदन्तविधिं कृत्वाह–**गोन्तादिति** ॥ १ यत्र तत्पुरुषे पदद्वयं समानाधिकरणं=समानलिङ्गं समानवचनं समानविभक्तिकं भवति स कर्मधारय इति समानाधिकरणतत्पुरुष इति चोच्यते । स च (१) विशेषणपूर्वपदः (२) विशेष्यपूर्वपदः (३) विशेषणोभयपदः (४) उपमानपूर्वपदः (५) उपमानोत्तरपदः (६) संभावनापूर्वपदः (७) अवधारणापूर्वपदश्चेत्येवं सप्तविधः । यथा-(१) नीलम् उत्पलम्=नीलोत्पलम् । कृष्णः सर्पः=कृष्णसर्पः । रक्ता लता=रक्तलता । क्वचिन्न-रामो जामदग्न्यः । (२) वैयाकरणखसूचिः । मीमांसकदुर्दुरूढः । अध्वर्युसर्वान्नः । ब्रह्मचार्युदरम्भरिः । (३) पूर्वं स्नातः पश्चादनुलिप्तः=स्नातानुलिप्तः । भुक्तानुसुप्तः । पीतप्रतिबद्धः । (४) घन इव श्यामः=घनश्यामः । तमालनीलः । कर्पूरगौरः । (५) पुरुषो व्याघ्र इव=पुरुषव्याघ्रः । नृसिंहः । मुखपद्मम् । करकिसलयम् । (६) गुण इति बुद्धिः=गुणबुद्धिः । आलोक इति शब्दः=आलोकशब्दः । (७) विद्या एव धनम्=विद्याधनम् । तपोबलम् । क्षमाशस्त्रम् इत्यादि ॥ २ कर्मधारयप्रयोगाः–" उदितः पूर्णचन्द्रोऽसौ, वाति शीतसमीरणः । पादपद्मं पितुर्वन्दे, यात्ययं नरपुंगवः ॥ " ३ " तद्धितार्थोत्तरपदसमाहारे " इत्यनुवर्त्याह–**तद्धितेत्यादि** ॥ ४ तद्धितार्थोत्तरपदयोः प्रयोजनाभावादाह–**समाहार इति** ॥ ५ " द्विगुरेकवचनम् " " द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् " इत्यतोऽनुव-

नीलमुत्पलं नीलोत्पलम् । बहुलग्रहणात्क्वचिन्नित्यम्—कृष्णसर्पः क्वचिन्न—रामो जामदग्न्यः ॥ **उपमानानि सामान्यवचनैः २।१।५५ ॥** घन इव श्यामो घनश्यामः ।(वा.) शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम् । शाकप्रियः पार्थिवः शाकपार्थिवः ।

---

—त्यौचित्येनाह—**समाहार** इति ॥ १ "विशेष्यस्य हि यल्लिङ्गं विभक्ति-वचने च ये । तानि सर्वाणि योज्यानि विशेषणपदेष्वपि ॥" लिङ्गं यथा—सुन्दरः शिशुः, सुन्दरी कन्या, सुन्दरं गृहम् । उज्ज्वलः शशी, उज्ज्वला दीपशिखा, उज्ज्वलं नक्षत्रम् । बुद्धिमान् पुरुषः, बुद्धिमती स्त्री । निर्मला बुद्धिः, निर्म्मलं जलम् । विभक्तिर्यथा—सुन्दरः शिशुः, सुन्दरं शिशुम्, सुन्दरेण शिशुना, सुन्दराय शिशवे, सुन्दरात् शिशोः, सुन्दरस्य शिशोः, सुन्दरे शिशौ, । निर्मलं जलम्, निर्मलेन जलेन, निर्मलाय जलाय, निर्मलात् जलात्, निर्मलस्य जलस्य, निर्मले जले । वचनं यथा—बलवान् सिंहः, बलवन्तौ सिंहौ, बलवन्तः सिंहाः । वेगवती नदी, वेगवत्यौ नद्यौ, वेगवत्यः नद्यः । निबिडं वनम्, निबिडे वने, निबिडानि वनानि । प्रायो विशेष्यात् प्राग् विशेषणप्रयोगः ॥ २ "क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद् विभाषा क्वचिदन्यदेव । विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥" ३ "प्राक्कडारात्" "विभाषा" "तत्पुरुषः" इत्यतोऽनुवर्तन्ते । उपमानवाचकस्य पूर्वनिपातार्थं सूत्रम् । उपमानबोधकानि सुबन्तानि उपमानोपमेयोभयसाधारणधर्मविशिष्टरूपसामान्यवचनैः सुबन्तैः समस्यन्ते । उपमानोपमेयोभयवृत्तिर्यो धर्मो गुणक्रियारूपः स साधारणः । **उपेति** । येन वस्त्वन्तरं स्ववृत्तिधर्मवत्त्वेन परिच्छिद्यते तद् **उपमानम्** । यथा—मुखम् स्वनिष्ठाह्लादकत्वादिधर्मवत्त्वेन परिच्छिद्यत इति चन्द्र उपमानम् । यद् अन्यनिष्ठधर्मवत्त्वेन परिच्छिद्यते तद् **उपमेयम्** । यथा मुखम् । उपमानोपमेयसाधारणधर्मविशिष्टोपमेयवचनत्वं सामान्यवचनत्वम् । यथा आह्लादकत्वादि प्रकृते घन उपमानम् । श्रीकृष्ण उपमेयः । श्यामत्वस्योभयसाधारणधर्मत्वात्सामान्यवचनत्वम् ॥ ४ पूर्वपदे यद् उत्तरपदम् तस्य लोपो वक्तव्य इत्यर्थः ॥ ५ 'शाकप्रिय' शब्द उत्तरपदभूतस्य—

देवपूजको ब्राह्मणो देवब्राह्मणः ॥ **नञ् २ । २ । ६** ॥ नञ् सुपा सह समस्यते ॥ **न लोपो नञः ६।३।७३**॥नञो नस्य लोप उत्तरपदे । न ब्राह्मणः अब्राह्मणः ॥ **तस्मान्नुडचि ६।३।७४**॥ लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुडागमः स्यात् । अनश्वः । नैकधेत्यादौ तु नशब्देन सह सप्सुपेति समासः ॥ **कुगतिप्रादयः २ । २ । १८** ॥ एते समर्थेन नित्यं समस्यन्ते । कुत्सितः पुरुषः कुपुरुषः॥ **ऊर्यादिच्विडाचश्च १।४।६१**॥ ऊर्यादयश्च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञाः स्युः । ऊरीकृत्य । शुक्लीकृत्य । पटपटाकृत्य ॥ सुपुरुषः । (वा०) प्रादयो गताद्यर्थे प्रथमया । प्रगत आचार्यः प्राचार्यः ।

---

–प्रियपदस्य लोपे 'शाकपार्थिवः' इति सिध्यति ॥ एवं पूजकशब्दलोपेन 'देवब्राह्मणः' इति सिध्यति ॥ १ "प्राक्कडारात्" "सह सुपा" इत्यतोऽनुवर्त्याह–**सुपा सहेति** ॥ २ "अलुगुत्तरपदे" इत्यतोऽनुवर्त्याह–**उत्तरपद** इति ॥ ३ "अलुगुत्तरपदे" इत्यत 'उत्तरपदे' इति वर्तते तद्विशेषणत्वेन तदादिविधिः 'तद्' शब्देन "न लोपो नञः" इति परामृश्यतेऽत आह–**लुप्तनकारादिति** ॥ ४ "समर्थः पदविधिः" "प्राक्कडारात्" "नित्यं क्रीडाजीविकयोः" इत्यतोऽनुवर्त्याह–**समर्थेनेति** ॥ ५ ऊरी उररी तन्थी ताली आताली वेताली धूली धूसी शकला संसकला ध्वंसकला भ्रंसकला गुलगुधा सजूस् फलफली विक्ली आक्ली आलोष्ठी केवाली केवासी सेवासी पर्याली शेवाली वर्षाली अत्यूमशा वश्मसा मस्मसा मसमसा श्रौषट् वौषट् वषट् स्वाहा स्वधा बन्धा प्रादुस् श्रत् आविस् । एते ऊर्यादयः ॥ ६ "प्राग्रीश्वरान्निपाताः" "उपसर्गाः क्रियायोगे" "गतिश्च" इत्यतोऽनुवर्त्य प्रत्ययग्रहणे तदन्तविधिं च कृत्वाह–**च्व्यन्ता इत्यादि** ॥ ७ एषु वार्तिकेषु 'समस्यन्ते' इत्यध्याहार्यम् ॥

(वा०)अत्यादयः क्रान्ताद्यर्थे द्वितीयया। अतिक्रान्तो मालामिति विग्रहे- **एकविभक्ति चापूर्वनिपाते १।२।४४॥** विग्रहे[1] यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं स्यान्न तु तस्य पूर्वनिपातः ॥ **गोस्त्रियोरुपसर्जनस्य १।२।४८॥** उपसर्जनं[2] यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात् । अतिमालः[3] । (वा.) अवादयः क्रुष्टाद्यर्थे तृतीयया । अवक्रुष्टः कोकिलया—अवकोकिलः । (वा.) पर्यादयो ग्लानाद्यर्थे चतुर्थ्या । परिग्लानोऽध्ययनाय पर्यध्ययनः । (वा.) निरादयः क्रान्ताद्यर्थे पञ्चम्या । निष्क्रान्तः कौशाम्ब्याः[4]—निष्कौशाम्बिः ॥ **तत्रोपपदं सप्तमीस्थम् ३।१।९२॥**[5] सप्तम्यन्ते पदे कर्मणीत्यादौ वाच्यत्वेन स्थितं यत्कुम्भादि तद्वाचकं पदमुपपदसंज्ञं स्यात् ॥ **उपपदमतिङ् २।२।१९॥** उपपदं सुबन्तं[6] समर्थेन नित्यं समस्यते । अतिङन्तश्चायं समासः । कुम्भं करोतीति

---

१ "प्रथमानिर्दिष्टं समास उपसर्जनम्" इत्यतोऽनुवर्तमानयोः 'समास उपसर्जनम्' इत्यनयोः पदयोः समासपदं सामर्थ्यात्तादर्थ्यात्ताच्छब्द्येन विग्रहपरमित्याह—**विग्रह** इति ॥ २ "ह्रस्वो नपुंसके प्रातिपदिकस्य" इत्यतोऽनुवर्तते । 'द्वन्द्वविशेषणं प्रत्येकमन्वेति' इत्यभिप्रेत्याह—**उपसर्जनमित्यादि** ॥ ३ अतिक्रान्तो मालाम्, अतिक्रान्तं मालाम्, अतिक्रान्तेन मालाम्, अतिक्रान्ताय मालाम्, इत्यादिविग्रहे मालाशब्दो द्वितीयान्त एव सर्वत्र तिष्ठतीति तस्य नियतविभक्तिकत्वम् ॥ ४ कौशाम्बी नाम नगरीविशेषः ॥ ५ 'तत्र' इति तत्पदेन 'धातोः' इति अधिकारः परामृश्यते । आवृत्त्या 'तत्र' इत्यस्याप्यधिकारत्वेन 'तस्मिंश्च सत्येव' इत्यस्य प्रतिसूत्रमुत्तरत्रोपस्थितिः ॥ ६ "समर्थः पदविधिः" "सुबामन्त्रिते" "नित्यं क्रीडाजीविकयोः" इत्यतोऽनुवर्त्याह—**सुबन्तमिति** ॥

कुम्भकारः[1] । अतिङ् किम्—मा भवान् भूत् । माङि लुङिति सप्तमी-निर्देशान्माङुपपदम् । गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः । व्याघ्री[3] । अश्वक्रीती[4] । कच्छपीत्यादि[5] ॥ **तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ५।४।८६** ॥ संख्याव्ययादेरंगुल्यन्तस्य[6] समासान्तोऽच् स्यात् ॥ द्वे अङ्गुली प्रमाणमस्य-द्व्यङ्गुलम् । निर्गतमंगुलिभ्यो निरंगुलम् ॥ **अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः**

---

१ इह ' कुम्भ अस् कार ' इत्यलौकिकं प्रक्रियावाक्यम् ॥ २ ' सुपा ' इत्यभिसंबन्धेन तिङन्तेन समासाप्राप्तौ ' अतिङ् ' ग्रहणं व्यर्थं सद् बोधयति–' नात्र 'सुपा' इत्यस्य संबन्धो भवति' इति । तथा च 'सुपा' इत्यस्यासंबन्धे तिङन्तेन प्राप्तस्य समासस्य वारणाय सार्थकमतिङ्ग्रहणमिति भावः । 'सुपा' इत्यस्यासंबन्धात् फलितां परिभाषां दर्शयति–**गतिकारकोपपदानामिति** ॥ ३ व्याङ्पूर्वात् ' घ्रा ' गन्धोपादाने इत्यस्माद्धातोः ' आतश्चोपसर्गे ' इति कप्रत्यये 'आतो लोपः'–इत्याकारलोपे आङो 'घ्र' शब्देन सुबुत्पत्तेः प्राग् गतिसमासे विशब्दस्य आघ्रशब्देन गतिसमासे 'व्याघ्र' शब्दाद् " जातेरस्त्रीविषयाद्–" इति ङीषि ' व्याघ्री ' इति सिध्यति । अत्र यदि घ्रशब्दस्य आघ्रशब्दस्य वा सुबन्तत्वमपेक्ष्येत तर्हि " स्वार्थद्रव्यलिङ्गसंख्याकारकप्रयुक्तकार्याणां क्रमिकत्वम्" इति नियमात् संख्याद्यपेक्ष्य ततः प्रागेव लिङ्गयोग इति लिङ्गनिमित्तप्रत्ययेन टापा भाव्यं न तु ङीषा, घ्र–आघ्रशब्दयोर्जातिवाचकत्वाभावात् ततष्टाबन्तेन समासे व्याघ्राशब्दस्य अदन्तत्वाभावाद् ङीष् नैव स्यादिति भावः ॥ ४ 'अश्वेन क्रीतेति 'कर्तृकरणे कृता-' इति समासः । सुबन्तेन समासे तु टापा भाव्यमिति अदन्तत्वाभावात् ' क्रीतात् करण–' इत्ययं ङीष् नैव स्यादिति भावः ॥ ५ कच्छेन पिबतीति कच्छपी। अत्रापि सुबन्ततापेक्षायां टाबेव स्यान्न जातित्वलक्षणो ङीषिति बोध्यम् ॥ ६ " समासान्ताः " ' अच् प्रत्यन्ववपूर्वात्–" इत्यतोऽनुवर्त्य विशेषणे तदन्तविधिं कृत्वाह–**अंगु–**

५।४।८७॥ एभ्यो रात्रेरच् स्याच्चात्संख्याव्ययादेः । अहर्ग्रहणं द्वन्द्वार्थम् ॥ **रात्राह्नाहाः पुंसि २।४।२९** ॥ एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव।अहश्च रात्रिश्चाहोरात्रः । सर्वरात्रः।संख्यातरात्रः।(संख्यापूर्वं रात्रं क्लीबम्) द्विरात्रम् । त्रिरात्रम् ॥ **राजाहःसखिभ्यष्टच् ५।४।९१॥** एतदन्तात्तत्पुरुषाट्टच् स्यात् । परमराजः ॥ **आन्महतः समानाधिकरणजातीययोः ३।३।४६** ॥ महत आकारोऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीये च परे । महाराजः । प्रकारवचने जातीयर् । महाप्रकारो महाजातीयः ॥ **द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ६।३।४७ ॥** आत्स्यात् । द्वौ च दश च द्वादश । अष्टाविंशतिः ॥ **त्रेस्त्रयः ॥ ६।३।४८ ॥** त्रयोदश । त्रयोविंशतिः । त्रयस्त्रिंशत् ॥ **परवल्लिंगं द्वन्द्वतत्पुरुषयोः २ । ३ ।**

---

**-ल्यन्तस्येति** ॥ १ " समासान्ताः " " तत्पुरुषस्यांगुलेः-" " अच् प्रत्यन्वव-पूर्वात्-" इत्यतोऽनुवर्त्याह-**एभ्यो रात्रेरजिति** ॥ चसंग्राह्यमाह-**चात्संख्याव्ययादेरिति** ॥ २ अहःपूर्वपदकरात्र्युत्तरपदकस्य तत्पुरुषस्यासंभवादाह-**द्वन्द्वार्थमिति** ॥ ३ " परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः " इत्यतोऽनुवर्त्य विशेषणे तदन्तविधिं च कृत्वाह-**एतदन्ताविति** ॥ ४ " तत्पुरुषस्यांगुलेः " इत्यतोऽनुवर्त्य विशेषणे तदन्तविधिमाश्रित्याह-**एतदन्तादिति** ॥ ५ " अलुगुत्तरपदे" इत्यतोऽनुवर्त्याह-**उत्तरपद** इति ॥ ६ जातीयरः प्रत्ययत्वेन नोत्तरपदत्वम्, तस्य पदत्वाभावात् ॥ ७ " अलुगुत्तरपदे " " आन्महतः समानाधिकरण-" इत्यतोऽनुवर्त्याह-**आत्स्यादिति** ॥ बहुव्रीहौ तु द्वित्राः अशीतौ परे द्व्यशीति-**रित्यादौ न** ॥ ८ 'द्व्यधिका दश' इत्युत्तरपदलोपो वा ॥ ९ "संख्यायामबहुव्रीह्यशीत्योः" इत्यनुवर्तते । सकारान्तोऽयमादेशः॥ अशीतौ परे तु त्र्यशीतिरित्येव॥

२६ ॥ एतयोः परपदस्येव लिङ्गं स्यात् । कुक्कुटमयूर्याविमे । मयूरी-कुक्कुटाविमौ । अर्धपिप्पली । (वा.) द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधो[1] वाच्यः । पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः ॥

**प्राप्तापन्ने च द्वितीयया २।२।४ ॥** समस्येते[2] । अकारश्चानयो-[3]रन्तादेशः ॥ प्राप्तो जीविकां प्राप्तजीविकः । आपन्नजीविकः । अलं कुमार्यै—अलंकुमारिः । अत एव[4] ज्ञापकात्समासः ॥ निष्कौशाम्बिः ॥

**अर्धर्चाः पुंसि च २।४।३१ ॥** अर्धर्चादयः शब्दाः पुंसि क्लीबे[5] च स्युः । अर्धर्चः । अर्धर्चम् । एवं ध्वजतीर्थशरीरमण्डपयूपदेहाङ्कुशपात्रसूत्रादयः । सामान्ये[6] नपुंसकम् । मृदु पचति । प्रातः कमनीयम् ॥

इति तत्पुरुषः ॥ ३ ॥

## अथ बहुव्रीहिः ॥

**शेषो बहुव्रीहिः[7] २।२।२३ ॥** अधिकारोऽयं प्राग्द्वन्द्वात् ॥

---

१ प्रतिषेधः परवल्लिङ्गस्येति शेषः । तेन विशेष्यस्य प्रधानस्य यल्लिङ्गं तदेव भवतीति भावः॥ २ "प्राक्कडारात्-" इत्यतोऽनुवर्त्याह—**समस्येते** इति ॥ ३ चकारात्पागकारोऽपि प्रश्लिष्यत इत्याह—**अकारश्चेति** ॥ प्रकृतिभावस्तु प्रायिक इति भावः ॥ ४ अलंपूर्वसमासविधेरनुपलम्भादाह—**अत एवेति** ॥ अलंपूर्वग्रहणादेव । 'सुप् सुपा' इत्यनेन समासे तु अलमः पूर्वनिपातनियमानुपपत्तिरिति ज्ञापकाश्रयणमावश्यकमिति भावः॥ ५ "अपथं नपुंसकम्" इत्यतोऽनुवर्त्याह—**क्लीबे चेति** ॥ ६ लिङ्गविशेषस्याविवक्षायां नपुंसकमेव प्रयोक्तव्यम् । 'लिङ्गसर्वनाम नपुंसकम्' इति भाष्ये पाठः । तस्य सर्वेषां लिङ्गानां नाम वाचकं विशेषलिंगावाचकमित्यर्थः॥ ७ यत्र समासगताः शब्दा अन्यविशेषणानि स बहुव्रीहिः । स च (१) द्विपदः-

**अनेकमन्यपदार्थे २ । २ । २४ ॥** अनेकं प्रथमान्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स बहुव्रीहिः ॥ **सप्तमीविशेषणे बहुव्रीहौ २ । २ । ३५ ॥** सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं स्यात् । अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः ॥ **हलदन्ता-**

---

-( २ ) बहुपदः ( ३ ) सहपूर्वपदः ( ४ ) संख्योत्तरपदः ( ५ ) संख्योभयपदः ( ६ ) व्यतिहारलक्षणः ( ७ ) दिगन्तराललक्षणश्चेत्येवं सप्तविधः । **( १ )** प्राप्तम् उदकं यं सः=प्राप्तोदको ग्रामः । जितो मन्मथो येन सः=जितमन्मथः शिवः । दत्तो मोदको यस्मै सः=दत्तमोदकः शिशुः । उद्धृता ओदना यस्याः सा=उद्धृतौदना स्थाली । काषायम् अम्बर यस्य सः=काषायाम्बरो भिक्षुः । वीराः पुरुषा यस्यां सा=वीरपुरुषा नगरी ( २ ) अधिकः-उन्नतः-अंसो यस्य सः=अधिकोन्नतांसः पुष्टः । परमा स्थूला दृष्टिर्यस्य सः=परमस्थूलदृष्टिर्मूर्खः । पराक्रमेण उपार्जिता संपत् येन सः=पराक्रमोपार्जितसम्पत् । ( ३ ) सह पुत्रेण सपुत्रः । सभार्यः । सानुजः । सकर्मकः । सलोमकः । सपरिच्छदः । आशिषि सहशब्दस्य सादेशो न, यथा-सहपुत्राय सहामात्याय राज्ञे स्वस्ति । ( ४ ) दशानां समीपे ये सन्ति ते उपदशाः=नव एकादश वा । विंशतेरासन्ना आसन्नविंशाः=एकोनविंशतिः एकविंशतिर्वा । अदूरत्रिंशाः । अधिकचत्वारिंशाः । ( ५ ) द्वौ वा त्रयो वा द्वित्राः । पंच वा षड् वा पञ्चषाः । द्विरावृत्ता दश द्विदशाः विंशतिः । त्रिदशाः त्रिंशत् । ( ६ ) केशेषु केशेषु गृहीत्वा प्रवृत्तं=केशाकेशि युद्धम् । दण्डैः दण्डैः प्रहृत्य प्रवृत्तम्=दण्डादण्डि=युद्धम् । ( ७ ) दक्षिणस्याः पूर्वस्याः दिशोर्यदन्तरालं सा दिक्=दक्षिणपूर्वा । उत्तरपश्चिमा । दक्षिणपश्चिमा, इत्यादि ॥ १ "शेषो बहुव्रीहिः" इत्यधिकृतं शेषपदं व्याचष्टे-**प्रथमान्तमिति** ॥२ "प्राक्कडारात्" "विभाषा" इत्यतोऽनुवर्त्याह-**वा समस्यते** इति ॥ ३ "उपसर्जनं पूर्वम्" इत्यतोऽनुवर्त्याह-**पूर्वं स्यादिति** ॥ ४ 'कण्ठे' इत्यस्य सप्तम्यन्तत्वेनानेकप्रथमान्तत्वाभावात्समासाप्राप्तावाह-**अत एव ज्ञापकादिति** । अयं भावः-प्रथमान्तानामेव समासे सप्तम्यन्ताऽलाभाद् व्यर्थमेव सप्तमीग्रहणं स्यादिति ॥

**त्सप्तम्याः संज्ञायाम्** ६।३।९॥ हलन्तादकारान्ताच्च सप्तम्या अलुक्[1] कण्ठेकालः । प्राप्तमुदकं यं स प्राप्तोदको ग्रामः । ऊढरथोऽनड्वान् उपहृतपशू रुद्रः । उद्धृतौदना स्थाली । पीताम्बरो हरिः । वीरपुरुषको ग्रामः ॥ (वा.) प्रादिभ्यो धातुजस्य वाच्यो वा[2] चोत्तरपदलोपः प्रपतितपर्णः, प्रपर्णः। (वा.)नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः अविद्यमानपुत्रः, अपुत्रः ॥ **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु** ६ । ३ । ३४ । उक्तपुंस्कादनूङ् ऊङोऽभावोऽस्यामिति बहुव्रीहिः । निपातनात्[3]पञ्चम्य अलुक् षष्ठ्याश्च लुक् । तुल्ये[4] प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात्पर ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यात् समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे न तु पूरण्यां प्रियादौ च परतः । गोस्त्रियोरिति ह्रस्वः । चित्रगुः[5] । रूपवद्भार्यः । अनूङ् किम्—वामोरूभार्यः ॥ पूरण्यां तु—॥ **अप्पूरणीप्रमाण्योः** ५।४।

---

१ " अलुगुत्तरपदे " इत्यधिकारलब्धमाह—**अलुगिति** ॥ २ प्रादिभ्यः परं यद् धातुजं तदन्तप्रकृतिकं प्रथमान्तं प्रथमान्तेनैव अन्यपदार्थे वर्तमानं यथा स्यात् तथा समस्यते, इति सूत्रसिद्धार्थानुवादः । विधेयं वाचनिकमाह—**वा चेति** ॥ **नञः** परं यद् अस्त्यर्थं तदन्तप्रकृतिकं प्रथमान्तं प्रथमान्तेनैव अन्यपदार्थे वर्तमानं यथा स्यात् तथा समस्यते इति सूत्रसिद्धार्थानुवादः । वाचनिकं विधेयमाह—**वा चेति** ॥ एवं च उत्तरपदलोपार्थमेवेदं वार्तिकद्वयमिति भावः ॥ ३ 'भाषितपुंस्कादनूङ्' इत्यत्र पंचमीश्रवणषष्ठ्यश्रवणयोः कारणमाह—**निपातनादिति** ॥ ४ भाषितः पुमान् यस्मिन्नर्थे स भाषितपुंस्कः सोऽस्त्यस्य तद्भाषितपुंस्कम् इति विग्रहफलमाह—**तुल्ये प्रवृत्तिनिमित्त** इति ॥ ५ "चित्रा गौर्यस्य" इति विग्रहे—

११६ ॥ पूरणार्थप्रत्ययान्तं यत्स्त्रीलिङ्गं तदन्तात्प्रमाण्यन्ताच्च बहुव्रीहेरप्स्यात् । कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः[2] । स्त्री प्रमाणी यस्य स स्त्रीप्रमाणः । अप्रियादिषु किम्—कल्याणीप्रिय इत्यादि ॥ **बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ५।४।११३** ॥ स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् स्यात् । दीर्घसक्थः[3] । जलजाक्षी[4] । स्वाङ्गात्किम्—दीर्घसक्थि शकटम् । स्थूलाक्षा वेणुयष्टिः । अक्ष्णोऽदर्शनादिति वक्ष्यमाणोऽच् ॥ **द्वित्रिभ्यां ष मूर्ध्नः ५।४।११५** ॥ आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ । द्विमूर्धः त्रिमूर्धः ॥ **अन्तर्बहिर्भ्यां च लोम्नः ५।४।११७** ॥ आभ्यां लोम्नोऽप्स्याद्बहुव्रीहौ । अन्तर्लोमः । बहिर्लोमः ॥ **पादस्य**

---

—बहुव्रीहिसमासे चित्राशब्दे पुंवद्भावेन टापो निवृत्तिः, गोशब्दस्य "गोस्त्रियोः" इति ह्रस्वेनोकारस्योकारः ॥ एवमेव रूपवद्भार्य इत्यत्र पुंवद्भावेन रूपवतीशब्दघटस्य ङीपो निवृत्तिः भार्याशब्दवर्तिन आकारस्य ह्रस्वोऽकार इति बोध्यम् ॥१"बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्—" इत्यतोऽनुवर्तमानस्य बहुव्रीहेर्विशेषणे तदन्तविधिरित्याह—**तदन्तादिति** ॥ २ अन्यपदार्थरात्रीणां मध्यगता पञ्चमी पूरणी वाच्या चेत्युक्तोदाहरणे पुंवद्भावप्रतिषेधः समासान्तश्च भवत्येव । यत्र तु पूरणी प्रधानभूता न, तत्र 'कल्याणपञ्चमीकःपक्षः'इत्यत्र तिरोहितावयवभेदस्य पक्षस्य वाच्यत्वेन पञ्चम्या अप्रधानत्वात् पुंवद्भावप्रतिषेधः समासान्तश्च न प्रवर्तते ॥ 'पुंवद्भावप्रतिषेधः समासान्तश्च प्रधानपूरण्यामेव' इति सिद्धान्तात् ॥३ दीर्घे सक्थिनी यस्य सः॥४ षो ङीषर्थ इति दर्शयति—**जलेति** ॥ जलजं कमलम् ॥ ५ स्थूलानि अक्षीणि—पर्वांकुराणि यस्याः सा ॥ ६ "बहुव्रीहौ सक्थ्यक्ष्णोः—" इत्यतोऽनुवर्त्याह—**बहुव्रीहाविति** ॥ ७ द्वौ मूर्धानौ यस्य सः, राक्षसविशेषस्य संज्ञेयम् ॥ ८ "बहुव्रीहौ सक्थ्यक्ष्णोः—", "अप् पूरणीप्रमाण्योः" इत्यतोऽनुवर्त्याह—**अबिति** ॥ ९ अन्तर्गतानि लोमान्यस्य सः।—

**लोपोऽहस्त्यादिभ्यः ५।४।१३८ ॥** हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपः स्याद्बहुव्रीहौ । व्याघ्रस्येव पादावस्य व्याघ्रपात् । अहस्त्यादिभ्यः किम्–हस्तिपादः । कुसूलपादः ॥ **संख्यासुपूर्वस्य ५।४।१४०॥** पादस्य लोपः स्यात्समासान्तो बहुव्रीहौ । द्विपात् । सुपात् ॥ **उद्विभ्यां काकुदस्य ५।४।१४८ ॥** लोपः स्यात् । उत्काकुत् । विकाकुत् ॥ **पूर्णाद्विभाषा ५।४।१४९ ॥** पूर्णकाकुत् । पूर्णकाकुदः ॥ **सुहृद्दुर्हृदौ मित्रामित्रयोः ५।४।१५० ॥** सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते । सुहृन्मित्रम् । दुर्हृदमित्रः ॥ **उरःप्रभृतिभ्यः कप् ५।४।१५१ ॥ सोऽपदादौ ८।३।३८ ॥** पाशकल्पककाम्येषु विसर्गस्य सः ॥ **कस्कादिषु च ८।३।४८ ॥** एष्विण उत्तरस्य विसर्गस्य षोऽन्यस्य तु सः । इति सः । व्यूढोरस्कः ॥ **इणः षः ८।३।३९ ॥** इण उत्तरस्य विसर्गस्य षः

---

–प्रावारः । बहिर्गतानि लोमान्यस्य सः, पटः ॥ १ "बहुव्रीहौ सक्थ्यक्ष्णोः–" उपमानाच्च इत्यतोऽनुवर्त्याह–**उपमानादिति** ॥ २ "पादस्य लोपः–" इत्याद्यनुवर्त्याह–**पादस्येति** ॥ ३ द्वौ पादावस्य सः ॥ ४ शोभनौ पादावस्य सः । शसादौ पादः पत् ॥ ५ "ककुदस्यावस्थायां लोपः" इत्यतोऽनुवर्त्याह–**लोप** इति ॥ ६ उद्गतं काकुदमस्य सः । तालु काकुदमुच्यते ॥ ७ "ककुदस्यावस्थायां लोपः" "उद्विभ्यां काकुदस्य" इत्यतोऽनुवर्तते ॥ ८ "बहुव्रीहौ" इत्यनुवर्तते ॥ ९ शोभनं हृदयमस्य ॥ १० दुष्टं हृदयमस्य ॥ ११ 'बहुव्रीहौ' इत्यनुवर्तते ॥ १२ "विसर्जनीयस्य सः" इत्यतोऽनुवर्त्य 'पाशकल्पककाम्येष्विति वाच्यम्' इति वार्तिकोक्तम् अपदादिपदार्थं प्रकाशयन्नाह–**पाशकल्पेति** ॥ १३ "विसर्जनीयस्य सः" "सोऽपदादौ" इत्यतोऽनुवर्त्याह–**विसर्गस्येति** ॥ १४ व्यूढं–

पाशकल्पककाम्येषु परेषु ॥ प्रियसर्पिष्कः [1] ॥ **निष्ठा २।२।३६ ॥** निष्ठान्तं बहुव्रीहौ पूर्वं [2] स्यात् । युक्तयोगः [3] ॥ **शेषाद्विभाषा ५।४। १५४ ॥** अनुक्त [4] समासान्ताद्बहुव्रीहेः कब्वा । महायशस्कः, महायशाः ॥

॥ इति बहुव्रीहिः [5] ॥ ४ ॥

---

**अथ द्वन्द्वः**

**चार्थे द्वन्द्वः २। २। २९ ॥** अनेकं [6] सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः । समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । तत्र 'ईश्वरं गुरुं च भजस्व' इति परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः

---

–विशालमुरो यस्य सः ॥ १ प्रियं सर्पिर्घृतं यस्य सः ॥ २ "उपसर्जनं पूर्वम्" "सप्तमी विशेषणे बहुव्रीहौ" इत्यतोऽनुवर्त्याह–**पूर्वमिति** ॥ ३ युक्तो योगो येन सः । अधीता विद्या येन सः अधीतविद्यः । प्रक्षालितहस्तपादः । कृतकटः । कृतधर्मः । कृतार्थः । संशितव्रतः इत्यादि ॥ ४ बहुव्रीहौ सक्थ्यक्ष्णोः–" "उरःप्रभृतिभ्यः कप्" इत्यतोऽनुवर्त्य शेषशब्दार्थं प्रदर्शयन्नाह–**अनुक्तसमासान्तादिति** ॥ 'शेषो बहुव्रीहिरनेकमन्यपदार्थे' इति सूत्रविहिताद् इत्यप्यर्थशेषो बोध्यः ॥ ५ बहुः व्रीहिः धान्यं यस्येति व्युत्पत्त्या बहुव्रीहेरन्यपदार्थप्राधान्यमवगम्यते । स च समानाधिकरणो व्यधिकरणश्चेति द्विविधः । कण्ठेकालः इत्यादिर्व्यधिकरणः । प्रकारान्तरेण पुनर्द्विविधः–तद्गुणसंविज्ञानोऽतद्गुणसंविज्ञानश्च । तत्र यत्रान्यपदार्थविशेषणानां क्रियया च यः स तद्गुणसंविज्ञानः, तस्य=अन्यपदार्थस्य गुणाः=विशेषणानि तेषां क्रियान्वयितया संविज्ञानं यत्रेति व्युत्पत्तेः । लम्बकर्णमानयेत्यादि । तद्भिन्नोऽतद्गुणसंविज्ञानः दृष्टसागरमानयेत्यादि ॥ ६ "अनेकमन्यपदार्थे" "सुबामन्त्रिते" "प्राक्कडारात्"–

समुच्चयः । 'भिक्षामट गां चानय' इत्यन्यतरस्यानुषङ्गिकत्वेनान्वयोऽन्वाचयः । अनयोरसामर्थ्यात्समासो न । 'धवखदिरौ छिन्धि' इति मिलितानामन्वय इतरेतरयोगः । 'संज्ञापरिभाषम्' इति समूहः समाहारः ॥ **राजदन्तादिषु परम् २।२।३१** ॥ एषु पूर्वप्रयोगार्हं परं स्यात् ॥ दन्तानां राजानो राजदन्ताः । ( धर्मादिष्वनियमः ) । अर्थधर्मौ । धर्मार्थावित्यादि ॥ **द्वन्द्वे घि २।२।३२** ॥ द्वन्द्वे घिसंज्ञं पूर्वं स्यात् । हरिश्च हरश्च हरिहरौ । **अजाद्यदन्तम् २।२।३३** ॥ द्वन्द्वे पूर्वं स्यात् ॥ ईशकृष्णौ ॥ **अल्पाच्तरम् २।२।३४** ॥ शिवकेशवौ ॥ **पिता मात्रा १।२।७०** ॥ मात्रा सहोक्तौ पिता वा शिष्यते ॥ माता च पिता च पितरौ, मातापितरौ वा ॥ **द्वन्द्वश्च**

---

—" विभाषा " इत्यतोऽनुवर्त्याह—**अनेकमिति** ॥ १ समुच्चयान्वाचययोः परस्परम् असामर्थ्यात् सह विवक्षाया अभावेन साहित्यस्याप्रतीतेः सामर्थ्याभावात् समासो नेति भावः ॥ २ सहविवक्षया परस्परं मिलितानामित्यर्थः ॥ इतरेतरयोगविषये साहित्यं विशेषणतया भासते समाहारे तु विशेष्यतयेति भेदवत्त्वेनेतरेतरयोगे साहित्यस्याप्रधानत्वेन समस्तपदसंख्याभानसत्त्वेन द्विवचनबहुवचने भवतः। समाहारे साहित्यस्य प्रधानतया भानात्तद्गतैकत्वस्य विशेष्यत्वेनैकवचनमेव न द्विवचनबहुवचन इति बोध्यम् ॥ ३ " उपसर्जनं पूर्वम् " इत्यतोऽनुवर्त्याह—**पूर्वप्रयोगेति** ॥ ४ " राजदन्तास्तु चत्वारो दन्तानामुपरि स्थिताः " ॥ ५ " उपसर्जनं पूर्वम् " इत्यतोऽनुवर्त्याह—**पूर्वमिति** ॥ ६ " उपसर्जनं पूर्वम् " " द्वन्द्वे घि " इत्यतोऽनुवर्त्याह—**द्वन्द्वे** इति ॥ ७ 'द्वन्द्वे' 'पूर्वम्' इत्यनुवर्तेते ॥ ८ " सरूपाणामेकशेष एकविभक्तौ " इत्यतः 'शेष' इति नपुंसकमनपुंसकेन इत्यतः 'अन्यतरस्याम्' इत्यनुवर्त्याह—**वा शिष्यत** इति ॥

**प्राणितूर्यसेनाङ्गानाम्** २।४।२ ॥ एषां द्वन्द्व एकवत्[1] । पाणिपादम् । मार्दङ्गिकवैणविकम् । रथिकाश्वारोहम् ॥ **द्वन्द्वाच्चुदषहान्तात्समाहारे ५ । ४ । १०६** ॥ चवर्गान्ताद्दषहान्ताच्च द्वन्द्वाट्टच्[2] स्यात्समाहारे । वाक् च त्वक् च वाक्त्वचम् । त्वक्स्रजम् । शमीदृषदम् । वाक्त्विषम् । छत्रोपानहम् । समाहारे किम्—प्रावृट्शरदौ ॥

॥ इति द्वन्द्वः ॥ ५ ॥

---

## अथ समासान्ताः ।

**ऋक्पूरब्धूःपथामानक्षे ५।४।७४** ॥ अ अनक्षे इति च्छेदः । ऋगाद्यन्तस्य समासस्य[3] अप्रत्ययोऽन्तावयवोऽक्षे या धूस्तदन्तस्य तु न ॥ अर्धर्चः । विष्णुपुरम् । विमलापं सरः । राजधुरा । अक्षे तु अक्षधूः । दृढधूरक्षः । सखिपथः । रम्यपथो देशः ॥ **अक्ष्णोऽदर्शनात् ५ । ४ । ७६** ॥ अचक्षुःपर्यायादक्ष्णोऽच्[4] स्यात्समासान्तः ॥ गवामक्षीव गवाक्षः ॥ **उपसर्गादध्वनः ५ । ४ । ८५** ॥ प्रगतोऽध्वानं प्राध्वो रथः ॥ **न पूजनात् ५ । ४ । ६९** ॥

---

१ "द्विगुरेकवचनम्" इत्यतः 'एकवचनम्' इत्यनुवर्त्याह—**एकवदिति** ॥ समाहार **एकवत्त्वस्य** नियमार्थमिदम्—**एकवदेवेति** ॥ २ "राजाहःसखिभ्यष्टच्" इत्यतोऽनुवर्त्याह—**टच् स्यादिति** ॥ ३ "समासान्ताः" इत्यधिक्रियतेऽत आह—**समासस्येति** । अनेनैव निर्देशेन समासान्तविधेरनित्यता ज्ञाप्यते ॥ ४ "समासान्ताः" इत्यधिकारे "अच् प्रत्यन्ववपूर्वात्—" इत्यतोऽनुवर्त्याह—**अच् स्यादिति** ॥ ५ "अच् प्रत्यन्ववपूर्वात्" इत्यतः 'अच् समासान्तः' इत्यनुवर्तते ॥

पूजनार्थात्परेभ्यः समासान्ता न स्युः ॥ सुराजा[2] । अतिराजा ।

॥ इति समासान्ताः ॥

---

अथ तद्धिताः[3] । तत्रादौ साधारणाः ॥

**समर्थानां प्रथमाद्वा ४ । १ । ८२ ॥** इदं पदत्रयमधिक्रियते

---

१ "समासान्ताः" इत्यधिक्रियतेऽत आह-**समासान्ता** इति ॥ २ स्वति-ग्रहणमेवाभिसन्धायोदाहरति-**सुराजेति** ॥ ३ तद्धितास्तावत् [१] सामान्यवृत्तिः [२] भाववाचकः [३] अव्ययसंज्ञकश्चेत्येवं त्रिविधाः । तत्र [ १] १-अपत्यार्थकः । २-रक्तार्थकः । ३-देवतार्थकः । ४-सामूहिकः । ५-अध्ययनार्थकः। ६-शैषिकः । ७-विकारावयवार्थकः । ८-अनेकार्थकः । ९-मतुबर्थकः । १०-स्वार्थिकश्चेत्येवं सामान्यवृत्तिस्तद्धितो दशधा । अपत्यस्यापि १-अपत्यम् । २-गोत्रापत्यम् । ३-युवापत्यं चेति त्रयो भेदाः । शैषिकोऽपि १-जातार्थकः । २-उप्तार्थकः । ३-देयार्थकः । ४-भवार्थकः । ५-व्याख्यानार्थकः । ६-आगतार्थकः । ७-प्रभवार्थकः । ८-प्रोक्तार्थकः । ९-कृतार्थकः । १०-इदमर्थकश्चेत्येवं दशविधः । यथा-१-शिवस्यापत्यं शैवः । गर्गस्य गोत्रापत्यं गार्ग्यः । गार्ग्यस्य युवापत्यं गार्ग्यायणः । २-कषायेण रक्तं वस्त्रं काषायम् । ३-इन्द्रो देवताऽस्येति ऐन्द्रं हविः । ४-काकानां समूहः काकम् । ५-व्याकरणमधीते वेद वा वैयाकरणः । ६-स्रुघ्ने जातः स्रौघ्नः । हेमन्ते उप्ताः हैमन्ताः यवाः । मासे देयं मासिकम् ऋणम् । स्रुघ्ने भवं स्रौघ्नम् । सुपां व्याख्यानः=सौपः । तैङः । स्रुघ्नादागतः स्रौघ्नः । हिमवतः प्रभवति हैमवती गङ्गा । ऋषिणा प्रोक्तम्=आर्षम् । कायेन कृतम्=कायिकम् । रथस्येदं=रथ्यं चक्रम् । ७-ओषधेरवयवो विकारो वा=औषधम् । ८-सुवर्णं पण्यमस्य=सौवर्णिकम् । समाजं रक्षति सामाजिकः । अक्षैर्दीव्यति आक्षिकः । दद्भ्यो हितं दन्त्यम् । धर्मादनपेतं धर्म्यम् । हृदयस्य प्रियः=हृद्यः । आकरे नियुक्तः=आकरिकः । ९-गावो यस्य सन्ति सः=गोमान् देवदत्तः । १०

प्राग्दिश इति यावत् ॥ **अश्वपत्यादिभ्यश्च ४।१।८४॥** एभ्योऽण् स्यात्प्राग्दीव्यतीयेष्वर्थेषु ॥ अश्वपतेरपत्यादि-आश्वपतम् । गाणपतम्॥ **दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ४ । १ । ८५॥** दित्यादिभ्यः पत्युत्तरपदाच्च प्राग्दीव्यतीयेष्वर्थेषु ण्यः स्यात्॥ अणोऽपवादः। दितेरपत्यं दैत्यः। अदितेरादित्यस्य वा ॥ **हलो यमां यमि लोपः ८।४।६४॥** इति यलोपः ॥ आदित्यः । प्राजापत्यः । ( देवाद्यञञौ ) । दैव्यम् । दैवम् ( बहिषष्टिलोपो यञ्च ) । बाह्यः । ( ईकक्च )-**किति च ७ । २ । ११८॥** किति तद्धिते चाचामादेरचो वृद्धिः स्यात् । बाहीकः । ( गोरजादिप्रसङ्गे यत् ) गोरपत्यादि गव्यम् ॥ **उत्सादिभ्योऽञ् ४।१।८६ ॥** औत्सः ॥

इत्यपत्यादिविकारान्तार्थसाधारणाः ॥ १ ॥

---

-१०-अयमनयोरतिशयेन आढ्यः आढ्यतरः । अयमेषामतिशयेन आढ्यः आढ्यतमः । [२] अश्वस्य भावः=अश्वत्वम् । अश्वता । [३] कस्मात्कुतः इत्यादि ॥ १ “ प्राग्दीव्यतोऽण् ” इत्युक्तिं मनसि निधायाह-**अण् स्यादिति** ॥ २ “ प्राग्दीव्यतोऽण् ” इति सामान्यप्राप्तस्याणोऽपवादोऽयम् । अस्याप्यपवादः “अश्वपत्यादिभ्यः-” इति बोध्यम् ॥ ३ “ झयो होऽन्यतरस्याम् ” इत्यतः ‘अन्यतरस्याम्’ इति वर्तते ॥ ४ “ प्राग्दीव्यतः ” इत्यधिक्रियते ॥ ५ “ प्राग्दीव्यतः ” इत्यधिक्रियते ॥ ६ “ प्राग्दीव्यतः ” “बहिषष्टिलोपः-” इत्यनुवर्तते ॥ ७ “ मृजेर्वृद्धिः ” “ अचो ञ्णिति ” “ तद्धितेष्वचामादेः ” इत्यतोऽनुवर्त्याह-**तद्धिते** इति ॥ ८ “प्राग्दीव्यतः” इत्यधिक्रियते ॥ ९ “प्राग्दीव्यतः-” इत्यधिक्रियते ॥

अथापत्याधिकारः ॥

**स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्** ४।१।८७ ॥ धान्यानां भवन इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमान्नञ्स्नञौ स्तः ॥ स्त्रैणः । पौंस्नः ॥ **तस्यापत्यम्** ४।१।९२ ॥ षष्ठ्यन्तात्कृतसन्धेः समर्थात्पदपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः ॥ **ओर्गुणः** ६।४।१४६ ॥ उवर्णान्तस्य भस्य गुणस्तद्धिते ॥ उपगोरपत्यमौपगवः । आश्वपतः । दैत्यः । औत्सः । स्त्रैणः । पौंस्नः ॥ **अपत्यं पौत्र-**

---

१ वत्यर्थेन 'पुंवत्' इति निर्देशाज्ज्ञापकात् ॥ २ "संयोगान्तस्य" इति सलोपः । मकारस्य "मोऽनुस्वारः" इत्यनुस्वारः ॥ ३ "समर्थानां प्रथमाद् वा" इत्यधिकृतस्य 'प्रथमात्' इत्यस्यार्थमाह-**षष्ठ्यन्तादिति** ॥ ४ 'समर्थानाम्' इति सामर्थ्यं चात्र परिनिष्ठितत्वम् । तच्च कृतसंधिकार्यत्वमित्यभिप्रेत्याह-**कृतसन्धेरिति** ॥ तेन 'सौतिथितिः वैक्षमाणिः' इत्यादौ सवर्णदीर्घोत्तरमेव प्रत्ययः सिध्यति । अन्यथा सवर्णदीर्घात्प्राक् प्रत्यये परत्वादाङ्गत्वाच्च वृद्धावावायादेशे 'सावुतिथितिर्वायीक्षमाणिरित्यनिष्टरूपापत्तिः स्यादिति भावः ॥ ५ "समर्थः पदविधिः" इत्यस्योपस्थानमाह-**समर्थादिति** ॥ ६ अस्य विधित्वे प्राचीनसूत्राणामनुवृत्तावाह-**उक्ता** इति ॥ ७ अस्याधिकारत्वेनास्योत्तरत्रान्वयेनाह-**वक्ष्यमाणा** इति ॥ ८ 'वा' इत्यस्य सम्बन्धादाह-**वेति** ॥ ९ "भस्य" "नस्तद्धिते" इत्यतोऽनुवर्त्य विशेषणे तदन्तविधिं च कृत्वाह-**उवर्णान्तस्येति** ॥ १० अपत्यं त्रिविधम्-अपत्यम्, गोत्रापत्यम्, युवापत्यं चेति । ये स्वाव्यवधानेन उत्पद्यन्ते पुत्रादयस्ते 'अपत्य' संज्ञया भाष्यन्ते । ये च अपत्याद् उत्पद्यन्ते पौत्रादयस्ते 'गोत्रापत्य' नाम्ना प्रोच्यन्ते, ये च पित्रादिषु जीवत्सु पौत्रस्य पुत्रादयस्ते 'युवापत्य' संज्ञयाभिधीयन्ते एष्वेव त्रिष्वर्थेषु अपत्यार्थकाः प्रत्ययाः भवन्ति । तत्र गोत्रापत्ये एक एव प्रत्ययो भवति, किमुक्तम् ? पौत्रात् पश्चात्-

**प्रभृति गोत्रम् ४।१।१६२ ॥** अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात् ॥ **एको गोत्रे ४ । १ । ९३ ॥** गोत्रे एक एवापत्यप्रत्ययः स्यात् ॥ उपगोर्गोत्रापत्यमौपगवः ॥ **गर्गादिभ्यो यञ् ४ । १ । १०५ ॥** गोत्रापत्ये । गर्गस्य गोत्रापत्यं गार्ग्यः । वात्स्यः ॥ **यञञोश्च २।४।६४ ॥** गोत्रे यद्यञन्तमञन्तं च तदवयवयोरेतयोर्लुक् स्यात्तत्कृते बहुत्वे न तु स्त्रियाम् । गर्गाः । वत्साः ॥ **जीवति तु वंश्ये युवा ४ । १ । १६३ ॥** वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसंज्ञमेव स्यात् ॥ **गोत्राद्यून्यस्त्रियाम् ४।**

---

–पुनः अपत्यार्थकः प्रत्ययो न भवतीति । यथा–गर्गशब्दात् गोत्रापत्ये यञि सति 'गार्ग्य' इति भवति, पुनरस्मादपत्यार्थकः प्रत्ययो न भवति, किन्तु गार्ग्यस्य पुत्राः पौत्राश्च सर्वेऽपि 'गार्ग्य' इति शब्देनैव भाष्यन्ते इति सरलार्थः ॥ १ पौत्रप्रभृतौ साक्षादपत्यत्वाभावादाह–**विवक्षितमिति** ॥ २ पौत्रप्रभृतौ प्रतिपुरुषं प्रत्ययप्राप्तौ शततमे सन्ताने एकोनशतं प्रत्यया आपद्येरन्नतोऽनिष्टस्यैकोनशतप्रत्ययसमूहस्य वारणायेष्टस्यैकस्यैव करणाय नियमार्थं सूत्रमित्याह–**एक एवापत्यप्रत्यय** इति ॥ ३ " गर्गादिभ्यो यञ् " इत्यत्र भाष्यसंमते 'अयञ्' इति च्छेदेऽकारस्यानुनासिकत्वेनेत्संज्ञायां लोप इति बोध्यम् ॥ ४ "गोत्रे कुञ्जादिभ्यः–" इत्यतः 'गोत्रे' इति वर्ततेऽत आह–**गोत्रापत्य** इति ॥५अत्रापि "अयञञोश्च" इत्येव च्छेदो भाष्यसंमतः । तेन 'तदनुबन्धकग्रहणेनातदनुबन्धकस्य' इति परिभाषया "गर्गादिभ्यो यञ्" इति विहितस्य ह्यनुबन्धकस्यैव ग्रहणम् न तु " देवाद्यञञौ " "द्वीपादनुसमुद्रं यञ् " इत्यादिविहितस्य "ण्यक्षत्रियार्षञितो यूनि लुगणिञोः" "तद्राजस्य बहुषु तेनैवास्त्रियाम्–" " यस्कादिभ्यो गोत्रे " इत्यतोऽनुवर्त्याह–**गोत्रे** इति ॥ यद्यञन्तमिति पाठो भाष्यसंमतः ॥ ६ 'अपत्यं पौत्रप्रभृति ॥ ७ युवापत्ये केवलंगोत्रप्रत्ययान्तादेव शब्दात् प्रत्ययो भवति नान्यस्मात् । यथा–गार्ग्यस्य युवापत्यम्–

१।९४ ॥ यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात्, स्त्रियां तु न युवसंज्ञा ॥ **यञिञोश्च ४।१।१०१** ॥ गोत्रे यौ यञिञौ तदन्तात्फक् स्यात् ॥ **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ७।१।२** ॥ प्रत्ययादेः फस्य[३] आयन्, ढस्य एय्, खस्य ईन्, छस्य ईय्, घस्य इय्, स्युः ॥ गर्गस्य युवापत्यं-गार्ग्यायणः । दाक्षायणः ॥ **अत इञ् ४ । १ । ९५** ॥ अपत्येऽर्थे ॥ दाक्षिः ॥ **बाह्वादिभ्यश्च ४ । १ । ९६** ॥ बाहविः । औडुलोमिः । ( लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः) उडुलोमाः । आकृतिगणोऽयम् ॥ **अनृष्यानन्तर्ये बिदादिभ्योऽञ् ४ । १ । १०४** ॥ एभ्योऽञ् गोत्रे । ये त्वत्रानृषयस्तेऽपत्येऽन्यत्र तु गोत्रे ॥ बिदस्य गोत्रं बैदः। बैदौ । बिदाः।

---

—गार्ग्यायणः । अत्र 'गर्ग' शब्दात् गोत्रापत्ये यञा 'गार्ग्य' इति भूत्वा युवापत्ये फका 'गार्ग्यायणः' इति भवतीति स्पष्टम् ॥ १ प्रत्यपत्यं प्रत्ययकरणे द्व्यूनानिष्टप्रत्ययपरम्परा प्राप्नोतीति तद्वारणाय नियमार्थं सूत्रमित्याह—**गोत्रप्रत्ययान्तादेव प्रत्यय** इति ॥ एवं च युवापत्यविवक्षायामपि गोत्रप्रत्यय एको भवतीत्यनुमीयते ॥ २ "गोत्रे कुञ्जादिभ्यः—" "नडादिभ्यः फक्" इत्यतोऽनुवर्त्याह—**गोत्रे याविति** ॥ "अयञिञौ" इत्येव पाठो भाष्यसंमतः पाठः सूत्रे "अयञिञोश्च" इत्येव भाष्यकृता ध्वननात्॥ ३ यथासंख्यमाश्रित्याह—**फस्येत्यादि** ॥ ४ 'तस्यापत्यम्' इत्यनुवर्त्याह—**अपत्येऽर्थे** ॥ इति ॥ ५ " तस्यापत्यम् " इत्यनुवर्तते ॥ ६ उडूनि=नक्षत्राणीव लोमान्यस्येति विग्रहः । ' नस्तद्धिते ' इति टिलोपः ॥ ७ बाह्वादीञोऽपवाद इति ज्ञेयम् ॥ ८ "गोत्रे कुञ्जादिभ्यः—" इत्यतोऽनुवर्त्याह—**गोत्रे** इति ॥ 'अनृषि' इति लुप्तपञ्चम्यन्तम् । आनन्तर्ये—इत्यत्र स्वार्थे ष्यञ् इत्यभिप्रेत्याह—**ये त्वत्रानृषय** इति ॥ ९ बिदस्य ऋषित्वेन गोत्रेऽञ् । अतः "यञञोश्च" इति बहुत्वे लुक् ॥

पुत्रस्यापत्यं पौत्रः । पौत्रौ । पौत्राः । एवं दौहित्रादयः । **शिवादिभ्योऽण् ४ । १ । ११२ ॥** अपत्ये ॥ शैवः । गाङ्गः ॥ **ऋष्यन्धकवृष्णिकुरुभ्यश्च ४।१।११४ ॥** ऋषिभ्यः-वासिष्ठः । वैश्वामित्रः । अन्धकेभ्यः-श्वाफल्कः । वृष्णिभ्यः-वासुदेवः । कुरुभ्यः-नाकुलः । साहदेवः ॥ **मातुरुत्संख्यासंभद्रपूर्वायाः ४ । १ । ११५ ॥** संख्यादिपूर्वस्य मातृशब्दस्योदादेशः स्यादण् प्रत्ययश्च ॥ द्वैमातुरः । षाण्मातुरः । सांमातुरः । भाद्रमातुरः ॥ **स्त्रीभ्यो ढक् ४ । १ । १२० ॥** स्त्रीप्रत्ययान्तेभ्यो ढक् ॥ वैनतेयः ॥ **कन्यायाः कनीन च ४।१।११६ ॥** चादण् । कानीनो व्यासः कर्णश्च ॥ **राजश्वशुराद्यत् ४।१।१३७ ॥** ( राज्ञो जातावेवेति वाच्यम् )॥ **ये चाभावकर्मणोः ६।४।१६८ ॥** यादौ तद्धिते परेऽन् प्रकृत्या

---

१ पुत्रस्यानृषित्वेन गोत्रेऽञोऽप्राप्त्याऽनन्तरापत्य एवाञो जातत्वेन न लुक् । अत एव तत्र 'गोत्रे' इत्यनुवर्तितमिति बोध्यम् ॥ २ यद्यपि " गोत्रसंज्ञासूत्रपर्यन्तं गोत्राधिकारः" इति "यूनि लुक्" इति सूत्रभाष्यतो लभ्यते । तथापि वृत्तावितो गोत्राधिकारनिवृत्तेरुक्तत्वादपत्यसामान्ये प्रत्ययमाह-**अपत्य** इति ॥"तस्यापत्यम्" इत्यनुवर्तते इति भावः ॥ ३ "तस्यापत्यम्" शिवादिभ्योऽण् इत्यतः 'अण्' इत्यनुवर्तते ॥ ४ "शिवादिभ्योऽण् इत्यतोऽनुवर्त्याह-**अण् प्रत्ययश्चेति** ॥ ५ "तस्यापत्यम्" इत्यधिकारः ॥ ६ " तस्यापत्यम् " इत्यधिकारे " शिवादिभ्योऽण् " इत्यण् चेनानुकृष्यतेऽत आह-**चादणिति** ॥ ७ अनूढाया एवापत्यमित्यर्थः । यदाहुर्महाभाष्यकाराः-"कन्याशब्दोऽयं पुंसाऽभिसम्बन्ध (विवाह ) पूर्वके संप्रयोगे निवर्तते । या चेदानीं प्रागभिसम्बन्धात् पुंसा सह सम्प्रयोगं गच्छति तस्यां कन्याशब्दो वर्तत एव इति ॥ ८ " तस्यापत्यम् " इत्यधिकारः ॥ तत्र विशेषविवक्षां दर्शयति-**राज्ञो जातावेवेति** ॥ ९ "प्रकृत्यैकाच्" 'अन्' "आपत्यस्य

स्यान्न तु भावकर्मणोः ॥ राजन्यः । जातावेवेति किम्-**अन् ६।४।१६७** ॥ अन् प्रकृत्या स्यादणि परे ॥ राजनः । श्वशुर्यः ॥ **क्षत्राद् घः ४ । १ । १३८** ॥ क्षत्रियः ॥ जातावित्येव । क्षात्रिरन्यत्र ॥ **रेवत्यादिभ्यष्ठक् ४।१।१४६** ॥ **ठस्येकः ७।३।५०** ॥ अङ्गात्परस्य ठस्येकादेशः स्यात् ॥ रैवतिकः ॥ **जनपदशब्दात्क्षत्रियादञ् ४।१।१६८**॥ जनपदक्षत्रियवाचकाच्छब्दादञ् स्यादपत्ये । पाञ्चालः । ( क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत् ) ॥ पञ्चालानां राजा पाञ्चालः । ( पूरोरण् वक्तव्यः ) ॥ पौरवः । ( पाण्डोर्ड्यण् ) पाण्ड्यः ॥ **कुरुनादिभ्यो ण्यः ४ । १ । १७२** ॥ कौरव्यः नैषध्यः ॥ **ते तद्राजाः ४ । १ । १७४** ॥ अञादयस्तद्राजसंज्ञाः स्युः ॥ **तद्राजस्य बहुषु तेनैवास्त्रियाम् २ । ४ । १७४** ॥ बहुष्वर्थेषु तद्राजस्य लुक् तदर्थकृते बहुत्वे न तु स्त्रियाम् ॥ इक्ष्वाकवः ।

---

—च तद्धितेऽनाति " इत्यतोऽनुवर्त्य विशेषणे तदादिविधिं च कृत्वाह—**यादाविति** ॥ १ राज्ञोऽपत्यं क्षत्रियश्चेत् 'राजन्य' इति भवति । अन्यदा राजनः ॥ २ " प्रकृत्यैकाच् " " इनण्यनपत्ये " इत्यतोऽनुवर्त्याह—**प्रकृत्येति** ॥ ३ " तस्यापत्यम् " इत्यधिकारः ॥ ४ " तस्यापत्यम् " इत्यधिकारः ॥ ५ " अङ्गस्य " इत्यधिकारः । पञ्चमीविपरिणतो वर्ततेऽत आह—**अङ्गादिति** ॥ ६ जनपदे प्रसिद्धः शब्द एव शब्दो यस्य तस्मात् क्षत्रियादिति समासफलितमर्थमाह—**जनपदक्षत्रियवाचकादिति** ॥ ७ क्षत्रियवाचकः शब्दो देशवाचकश्चेत् ततः " तस्य देशस्य राजा " इत्यर्थे अपत्यवत् प्रत्यया भवन्ति, किमुक्तम् ? अपत्ये ये प्रत्यया उक्तास्ते राजन्यपि भवेयुरित्यर्थः ॥ ८ अपत्ये राजनि चार्थे ॥ एवमुत्तरत्रापि ॥ ९ अपत्ये राजनि च विहिताः प्रत्ययाः तच्छब्देन परामृश्यन्ते तदाह—**अञादय इति** ॥ १० "ण्यक्षत्रियार्ष-" इत्यतोऽनुवर्त्याह—**लुगिति** ॥

पञ्चालाः इत्यादि ॥ **कम्बोजाल्लुक् ४ । १ । १७५** ॥ अस्मात्तद्राजस्य लुक् ॥ कम्बोजः । कम्बोजौ । (कम्बोजादिभ्य इति वक्तव्यम्) चोलः । शकः । केरलः । यवनः ॥

॥ इत्यपत्याधिकारः ॥ २ ॥

## अथ चातुरर्थिकाः ।

**तेन रक्तं रागात् ४।२।१** ॥ अण्[2] स्यात् ॥ रज्यतेऽनेनेति रागः । कषायेण रक्तं वस्त्रं काषायम् ॥ **नक्षत्रेण युक्तः कालः ४।२।३** ॥ अण्[4] स्यात् ॥ ( तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम् ) । पुष्येण[6] युक्तं पौषमहः ॥ **लुबविशेषे ४।२।४** ॥ पूर्वेणाँ विहितस्य लुप् स्यात् षष्टिदण्डात्मकस्य कालस्यावान्तरविशेषश्चेन्न गम्यते ॥ अद्य पुष्यः ॥ **दृष्टं साम ४ । २ । ७** ॥ तेनेत्येव । वसिष्ठेन दृष्टं वासिष्ठं साम ॥ **वाम-**

---

१ "ते तद्राजाः" इत्यतोऽनुवर्त्याह-**तद्राजस्येति** ॥ २ "प्राग्दीव्यतोऽण्" इत्यधिक्रियते ॥ 'रागवाचकात् तृतीयान्तात् रक्तम्' इत्यस्मिन् अर्थे 'अण्' इति सूत्रार्थः ॥ ३ रञ्जकद्रव्यमित्यर्थः । शुक्लस्य वर्णान्तरापादनमिह रञ्जेरर्थः ॥ ४ "प्राग्दीव्यतोऽण्" इत्यधिक्रियते । नक्षत्रवाचकात् तृतीयान्तात् 'युक्तः' इत्यर्थेऽण् स्यात् युक्तः कालश्चेत् ॥ ५ नक्षत्राणि नक्षत्रविहितानि इत्यर्थः ॥ ६ नक्षत्रस्थितेरव्यभिचरितत्वाद् अत्र नक्षत्रपदं मञ्चाः क्रोशन्ति इतिवद् नक्षत्रस्थितचन्द्रपरमेव । तथा चोक्तं वार्तिककृता-"नक्षत्रेण चन्द्रमसो योगात् तद्युक्तात् काले प्रत्ययविधानम्" इति । तदाह-**पुष्येण युक्तमिति** ॥ ७ "नक्षत्रेण युक्तः कालः" 'अण्' इत्यनुवर्त्य षष्ठ्या विपरिणम्य व्याचष्टे-**पूर्वेणेति** ॥ ८ "तेन रक्तम्-" इत्यतोऽनुवर्त्याह-**तेनेत्येवेति** ॥ तृतीयान्ताद् 'दृष्टम्' इत्यर्थेऽण् दृष्टं साम चेत् । इति सूत्रार्थः ॥ ९ तृतीया-

**देवाद्यञञौ ४।२।९॥** वामदेवेन दृष्टं साम वामदेव्यम् ॥ **परिवृतो रथः ४।२।१०॥** अस्मिन्नर्थेऽण् प्रत्ययो भवति ॥ वस्त्रेण परिवृतो वास्त्रो रथः ॥ **तत्रोद्धृतममत्रेभ्यः ४।२।१४॥** शरावे उद्धृतः शाराव ओदनः ॥ **संस्कृतं भक्षाः ४।२।१६॥** सप्तम्यन्तादण् स्यात्संस्कृतेऽर्थे यत्संस्कृतं भक्षाश्चेत्ते स्युः। भ्राष्ट्रेषु संस्कृता भ्राष्ट्राः यवाः ॥ **साऽस्य देवता ४।२।२४॥** इन्द्रो देवताऽस्येति ऐन्द्रं हविः। पाशुपतम्। बार्हस्पत्यम् ॥ **शुक्राद् घन् ४।२।२६॥** शुक्रियम् ॥ **सोमाट्ट्यण् ४।२।३०॥** सौम्यम् ॥ **वाय्वृतु-पित्रुषसो यत् ४।२।३१॥** वायव्यम्। ऋतव्यम् ॥ **रीङ् ऋतः ७।४।२७॥** अकृद्यकारे असार्वधातुके यकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः ॥ यस्येति च। पित्र्यम्। उषस्यम् ॥ **पितृव्यमातुल-मातामहपितामहाः ४।२।३६॥** एते निपात्यन्ते ॥ पितुर्भ्राता

---

—न्ताद् वामदेवशब्दात् 'दृष्टम्' इत्यर्थे ड्यड्ड्यौ प्रत्ययौ भवतः दृष्टं साम चेत् ॥ इति सूत्रार्थः ॥ १ तृतीयान्तात् 'परिवृतः—' इत्यर्थेऽण् परिवृतो रथश्चेत् इति सूत्रार्थः ॥ २ अमत्रवाचकात् सप्तम्यन्ताद् 'उद्धृतम्' इत्यर्थेऽण् स्यादिति सूत्रार्थः ॥ ३ "प्राग्दीव्यतोऽण्" इत्यधिक्रियते "तत्रोद्धृतम्—" इत्यतः 'तत्र' इति वर्तते ॥ ४ "प्राग्दीव्यतोऽण्" इत्यधिक्रियते ॥ प्रथमान्ताद् 'देवताऽस्य' इत्यर्थेऽणादयः ॥ ५ **पाशुपतमिति** ॥ "अश्वपत्यादिभ्यश्च" इत्यण्। बार्हस्पत्यमिति पत्युत्तरपदलक्षणो ण्यः ॥ ६ "साऽस्य देवता" इत्यधिक्रियते। प्रथमान्तात् शुक्रशब्दात् 'देवताऽस्य' इत्यर्थे घन् प्रत्ययः स्यात् ॥ ७ 'प्रथमान्तात्' सोमशब्दात् 'देवताऽस्य' इत्यर्थे ट्यण् प्रत्ययः स्यात् ॥ ८ 'प्रथमान्तेभ्यो वाय्वृतुपित्रुषस्शब्देभ्यः 'देवताऽस्य इत्यर्थे' यत् प्रत्ययः ॥ ९ "अयङ् यि क्ङिति" "अकृत्सार्व—

पितृव्यः । मातुर्भ्राता मातुलः । मातुः पिता मातामहः । पितुः पिता पितामहः ॥ **तस्य समूहः ४।२।३६॥** काकानां समूहः काकम् ॥ **भिक्षादिभ्योऽण् ४ । २ । ३७ ॥** भिक्षाणां समूहो भैक्षम् । गार्भिणीनां समूहो गार्भिणम् । इह "भस्याऽढे तद्धिते" इति पुंवद्भावे कृते- **इनण्यनपत्ये ६।४।१६७॥** अनपत्यार्थेऽणि परे इन्प्रकृत्या स्यात् तेन नस्तद्धित इति टिलोपो न ॥ युवतीनां समूहो **यौवनम्** ॥ **ग्रामजनबन्धुभ्यस्तल् ४।२।४३॥** तलन्तं स्त्रियाम् ॥ ग्रामता । जनता । बन्धुता (गजसहायाभ्यां चेति वक्तव्यम्) गजता । सहायता । (अह्नः खः क्रतौ) । अहीनः॥ **अचित्तहस्तिधेनोष्ठक् ४।२।४७॥ इसुसुक्तान्तात्कः ७।३।५१॥** इस्उस्उक्तान्तात्परस्य ठस्य कः ॥

---

–धातुकयोः" "च्वौ च" इत्यतोऽनुवर्त्याह–**अकृद्यकारे** इति ॥ १ अत्र वार्तिकानि––* पितुर्भ्रातरि व्यत् ॥ * ॥ मातुर्डुलच् ॥ * ॥ मातृपितृभ्यां पितरि डामहच् ॥ * ॥ मातरि षिच्च ॥ * ॥ **मातामही** । **पितामही** । इति ॥ २ षष्ठयन्तात् 'समूहः' इत्यर्थेऽण् स्यादिति सूत्रार्थः ॥ ३ षष्ठयन्तभिक्षादिभ्यः 'समूहः' इत्यर्थेऽण् । इति सूत्रार्थः ॥ ४ "अचित्तहस्ति–" इति प्राप्तस्य ठको बाधनायायमण्विधीयते ॥ ५ "स्त्रीभ्यो ढक्" इति ढभिन्ने तद्धिते परतो भस्य पुंवत्, इति वार्तिकार्थः ॥ पुंस्यपि गर्भसम्बन्धस्य वेदे निरूपितत्वेन भवत्येव गार्भिणीशब्दस्य भाषितपुंस्कत्वम् ॥ ६ "प्रकृत्यैकाच्" इत्यतोऽनुवर्त्याह–**प्रकृत्येति** ॥ ७ पुंवद्भावेन तिप्रत्ययनिवृत्तौ "नस्तद्धिते" इति टिलोपः प्रकृतिभावेन वार्यते ॥ शत्रन्तयुवतीशब्दस्य तु 'यौवतम्' इति भवति ॥ ८ "तस्य समूहः" इत्यधिकारसत्त्वेन षष्ठयन्तग्रामजनबन्धुभ्यः 'समूहः' इत्यर्थे 'तल्' इति सूत्रार्थः ॥ 'तल् समूह इत्यर्थे' इति वार्तिकार्थः ॥९"षष्ठयन्तात् अहन्शब्दात् 'समूहः' इत्यर्थे खः, समूहः क्रतुसाधकश्चेदित्यर्थः॥" १० 'समूहः' इत्यर्थे ॥ ११ "ठस्येकः" इत्यतः 'ठस्य'–

साक्तुकम् । हास्तिकम् । धैनुकम् ॥ **तदधीते तद्वेद** ४।२।५९॥ **न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्** ७।३।३॥ पदान्ताभ्यां यकारवकाराभ्यां परस्य न वृद्धिः किं तु ताभ्यां पूर्वौ क्रमादैजागमौ स्तः ॥ व्याकरणमधीते वेद वा वैयाकरणः ॥ **क्रमादिभ्यो वुन्** ४।२।६१ ॥ क्रमकः ॥ पदकः । शिक्षकः । मीमांसकः ॥ **तदस्मिन्नस्तीति देशे तन्नाम्नि** ४ । २ । ६७ ॥ उदुम्बराः सन्त्यस्मिन्देशे—औदुम्बरो देशः ॥ **तेन निर्वृत्तम्** ४।२।६८॥ कुशाम्बेन निवृत्ता नगरी कौशाम्बी ॥ **तस्य निवासः** ४।२।६९ ॥ शिबीनां निवासो देशः शैबः ॥ **अदूरभवश्च** ४।२।७० ॥ विदिशाया अदूरभवं नगरं वैदिशम् ॥ **जनपदे लुप्** ४।२।८१॥ जनपदे वाच्ये चातुरर्थिकस्य लुप् ॥ **लुपि युक्तवद्व्यक्तिवचने** १।२।५१॥ लुपि सति प्रकृतिवल्लिङ्गवचने स्तः ॥ पञ्चालानां निवासो

---

—इत्यनुवर्ततेऽत आह—**ठस्येति** ॥ १ लिङ्गविशिष्टपरिभाषया हस्तिनीशब्दादपि भवति—हस्तिनीनां समूहो हास्तिकम् 'भस्याढे—' इति पुंवद्भावः ॥ २ द्वितीयान्ताद् 'अधीते' इत्यर्थे 'वेद' इत्यर्थे वा उक्ता 'अणादयः वक्ष्यमाणाश्च प्रत्यया वा स्युः' इति सूत्रार्थः ॥ ३ "मृजेर्वृद्धिः" इत्यतोऽनुवर्त्याह—**न वृद्धिरिति** ॥ ४ 'द्वितीयान्तक्रमादिभ्यः "अधीते, वेद" इत्यर्थे वुन्' इति सूत्रार्थः ॥ ५–६–७–८ 'प्रथमान्ताद्' 'अस्मिन्नस्ति' इत्यर्थे तृतीयान्तात् 'निर्वृत्तम्' इत्यर्थे, षष्ठ्यन्तात् 'निवासः' इत्यर्थे, 'अदूरभवः' इत्यर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः तन्नाम्ना देशप्रसिद्धिश्चेत् इति सूत्रचतुष्टयार्थः ॥ ९ "तदस्मिन्नस्ति—" "तेन निर्वृत्तम्" "तस्य निवासः" "अदूरभवश्च" इति सूत्रचतुष्टयमनुवर्त्याह—**चातुरर्थिकस्येति** ॥ १० युक्तशब्दः प्रकृतिवाची । व्यक्तिशब्दो लिङ्गवाचीत्याह—**प्रकृतीति** ॥ ११ पञ्चालानां निवास इत्यत्र प्रकृतेर्बहुवचनान्त—

जनपदः पञ्चालाः । कुरवः । अङ्गाः । वङ्गाः । कलिङ्गाः ॥ **वरणादिभ्यश्च ४।२।८२॥** अजनपदार्थ आरम्भः । वरणानामदूरभवं नगरं वरणाः ॥ **कुमुदनडवेतसेभ्यो ड्मतुप् ४।२।८७॥ झयः ८।२।१०॥** झयन्तान्मतोर्मस्य वः ॥ कुमुद्वान् । नड्वान् ॥ **मादुपधायाश्च मतोर्वोऽयवादिभ्यः ८।२।९ ॥** मवर्णावर्णान्तान्मवर्णावर्णोपधाच्च यवादिवर्जितात्परस्य मतोर्मस्य वः ॥ वेतस्वान् ॥ **नडशादाड्ड्वलच् ४।२।८८॥** नड्वलः । शाद्वलः ॥ **शिखाया वलच् ४।२।८९॥** शिखावलं ॥

इति चातुरर्थिकाः ॥ ३ ॥

---

## अथ शैषिकाः ।

**शेषे ४।२।९२॥** अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः शेषस्तत्राणादयः

---

–त्वमासीत्, लुपि सत्यपि सैव बहुवचनान्ता प्रकृतिरवस्थितेति भावः ॥ १ देशस्तु जनपदैर्व्याप्तः जनपदव्याप्यनगरादिश्च । जनपदस्तु बहुनगरग्रामव्याप्तमण्डलाधिकरणस्थानम् इति विशेषः ॥ २ "जनपदे लुप्" इत्यतो 'लुप्' इति वर्तते ॥ जनपदे पूर्वेण सिद्धत्वादाह–**अजनपदार्थ** इति ॥ ३ **'अस्मिन्नस्ति' 'तेन निर्वृत्तम्'** 'तस्य निवासः' 'अदूरभवश्च' इति चतुरर्थी अनुवर्तते ॥ ४ अधिकृतपदादित्येतद्विशेषणत्वेन तदन्तविधिः । "मादुपधायाश्च मतोर्वः–" इत्यतोऽनुवर्त्याह–**झयन्तान्मतोर्मस्य व** इति ॥ ५ म् च अं च अनयोः समाहारः मं तस्मात् मात तस्य अधिकृत 'पदात्' इत्येतद्विशेषणत्वेन तदन्तविधिरित्याह–**मवर्णावर्णान्तादिति** ॥ उपधात्वं चोपस्थितत्वान्मवर्णावर्णयोरेवेत्याह–**मवर्णावर्णोपधादिति** ॥ ६–७ चतुरर्थी अनुवर्तते ॥ ८ निर्वृत्ताद्यर्थेऽस्य प्रयोगः । अदेशे तु मत्वर्थीय इति बोध्यम् ॥ ९ अपत्यरक्तचातुर्थिकेभ्योऽन्य इत्यर्थः॥ १० **अणादय** इति ।प्राग्दीव्य–

स्युः ॥ चक्षुषा गृह्यते चाक्षुषं रूपम् । श्रावणः शब्दः । औपनिषदः पुरुषः । दृषदि पिष्टाः--दार्षदाः सक्तवः । चतुर्भिरुह्यं चातुरं शकटम् । चतुर्दश्यां दृश्यते चातुर्दशं रक्षः । 'तस्य विकार' इत्यतः प्राक् शेषाधिकारः । **राष्ट्राऽवारपाराद् घखौ ४।२।९३** ॥ आभ्यां क्रमाद् घखौ स्तः शेषे ॥ राष्ट्रे जातादिः--राष्ट्रियः । अवारपारीणः । (अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम् ) अवारीणः । पारीणः । पारावारीणः । इह प्रकृतिविशेषाद् घादयष्ट्युटयुलन्ताः प्रत्यया उच्यन्ते, तेषां जातादयोऽर्थविशेषाः समर्थविभक्तयश्च वक्ष्यन्ते ॥ **ग्रामाद्यखञौ ४।२।९४॥** ग्राम्यः । ग्रामीणः ॥ **नद्यादिभ्यो ढक् ४।२।९७॥** नादेयम् । माहेयम् । वाराणसेयम् ॥ **दक्षिणापश्चात्पुरसस्त्यक् ४।२।९८॥** दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः ॥ **द्युप्रागपागुदक्प्रतीचो यत् ४।२।१०१॥** दिव्यम् । प्राच्यम् । अपाच्यम् । उदीच्यम् । प्रतीच्यम् ॥ **अव्ययात्त्यप् ४।२।१०४॥** (अमेहक्वतसित्रेभ्य एव ) अमात्यः ॥ इहत्यः । क्वत्यः । ततस्त्यः । तत्रत्यः । ( त्यब्नेर्ध्रुव इति वक्तव्यम्) । नित्यः ॥ **वृद्धिर्यस्याचामादिस्त-**

---

--तीयाः साधारणा उक्ता इत्यर्थः ॥ वक्ष्यमाणाश्च 'शेषे' इत्यधिकारान्वयादिति बोध्यम् ॥ १ विगृहीतादपि=अवारशब्दात् पारशब्दाच्चेत्येवं भिन्नादपीत्यर्थः । विपरीतात्=परस्य पूर्वत्वे अवारस्य परत्वे च पारावारशब्दो भवति तस्मादपीत्यर्थः ॥ २ पृथक् पृथक् ( भिन्न भिन्न ) प्रकृतिभ्य इत्यर्थः ॥ ३ प्रातिपदिकेन सह एकार्थीभावं प्राप्ता विभक्तयः समर्थविभक्तयः ॥ ४ नदी मही वाराणसी श्रावस्ती कौशाम्बी वनकौशाम्बी काशपरी काशफरी खादिरी पूर्वनगरी पाठा माया शाल्वा दार्वा सेतकी । ( वडवाया वृषे ) । इति नद्यादिः ॥

**दृवृद्धम् १।१।७३॥** यस्य समुदायस्याचां मध्ये आदिर्वृद्धिस्तद्वृद्ध-संज्ञं स्यात् ॥ **त्यदादीनि च १।१।७४॥** वृद्धसंज्ञानि स्युः॥ **वृद्धाच्छः ४।२।११४॥** शालीयः । मालीयः । तदीयः । ( वा नामधेयस्य वृद्धसंज्ञा वक्तव्या) । देवदत्तीयः । दैवदत्तः ॥ **गहादिभ्यश्च ४।२।१३८॥** गहीयः॥ **युष्मदस्मदोरन्यतरस्यां खञ् च ४।३।१॥** चाच्छः । पक्षेऽण् । युवयोर्युष्माकं वायं युष्मदीयः । अस्मदीयः ॥ **तस्मिन्नणि च युष्माकास्माकौ ४ । ३ । २ ॥** युस्मदष्मदोरेतावादेशौ स्तः खञ्यणि च। यौष्माकीणः।आस्माकीनः। यौष्माकः। आस्माकः । **तवकममकावेकवचने४।३।३॥** एकार्थवाचिनोर्युष्मदस्मदोस्तवकममकौ स्तः खञि अणि च ॥ तावकीनः । तावकः । मामकीनः । मामकः ॥ छे तु—**प्रत्ययोत्तरपदयोश्च ७।२।९७॥** मपर्यन्तयोरेतयोरेकार्थवाचिनोस्त्वमौ स्तः प्रत्यये उत्तरपदे च परतः ॥ त्वदीयः । मदीयः । त्वत्पुत्रः । मत्पुत्रः । **मध्यान्मः ४।३।८॥** मध्यमः॥**कालाट्ठञ्४।३।११॥** कालवाचिभ्यष्ठञ् स्यात्॥ कालिकम् । मासिकम् । सांवत्सरिकम् । ( अव्ययानां भमात्रे

---

१ "वृद्धिर्यस्याचामादिः—" इत्यतोऽनुवर्त्याह—**वृद्धेति** ॥ २ "गतोत्तरपदाच्छः" इत्यतश्छ इत्यनुवर्तते ॥ ३ गतोत्तरपदाच्छः" इत्यतः 'छः' इति चेनानुकृष्य समुचीयतेऽत आह—**छ** इति ॥ ४ "युष्मदस्मदोरन्यतर—" इत्यतः 'युष्मदस्मदोः' इत्यनुवर्तते । तच्छब्देन खञ् परामृश्यतेऽत आह—**खञीति** ॥ ५ " युष्मदस्मदोरन्यतर—" "तस्मिन्नणि च" इत्यतोऽनुवर्त्याह—**युष्मदस्मदोरिति** ॥ ६ "युष्मदस्मदोरनादेशे " " मपर्यन्तस्य " " त्वमावेकवचने " इत्यनुवर्त्याह—**मपर्यन्तयोरिति** ॥

टिलोपः )। सायम्प्रातिकः। पौनःपुनिकः ॥ **प्रावृष एण्यः ४।३।१७॥** प्रावृषेण्यः ॥ **सायंचिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ४।३।२३॥** सायमित्यादिभ्यश्चतुर्भ्योऽव्ययेभ्यश्च कालवाचिभ्यष्ट्युट्युलौ स्तस्तयोस्तुट् च ॥ सायन्तनम्। चिरन्तनम्। प्राह्णेप्रगेऽनयोरेदन्तत्वं निपात्यते। प्राह्णेतनम्। प्रगेतनम्। दोषातनम् ॥ **तत्र जातः ४।४।२५॥** सप्तमीसमर्थाज्जात इत्यर्थेऽणादयो घादयश्च स्युः ॥ स्रुघ्ने जातः-स्रौघ्नः। उत्से जातः औत्सः। राष्ट्रे जातो राष्ट्रियः। अवारपारे जातः अवारपारीण इत्यादि ॥ **प्रावृषष्ठप् ४।३।२६ ॥** एण्यापवादः। प्रावृषिकः ॥ **प्रायभवः ४।३।३९ ॥** तत्रेत्येव। स्रुघ्ने प्रायेण बाहुल्येन भवति स्रौघ्नः ॥ **संभूते ४।३।४१॥** स्रुघ्ने संभवति स्रौघ्नः ॥ **कोशाड्ढञ् ४।३।४२॥** कौशेयं वस्त्रम् ॥ **तत्र भवः ४।३।५३॥** स्रुघ्ने भवः स्रौघ्नः। औत्सः।

---

१ अव्ययत्वभ्रमं वारयति-**एदन्तत्वमिति**। एवं प्रत्ययसन्नियोगेन सायचिरशब्दयोर्मान्तत्वमपि निपात्यते इत्यपि बोध्यम्। एवं च सायशब्दादयश्चत्वारोऽपि नाव्ययशब्दा इति नाव्ययग्रहणेन गतार्थतेति तत्त्वम् ॥ २ पूर्वाह्णकालोत्पन्नमित्यर्थः ॥ ३ प्रातःकालोत्पन्नमित्यर्थः ॥ ४ रात्रिभवमित्यर्थः ॥ ५ अर्थसामान्य एव घादयः पूर्वमुक्ताः, तेषामधुना जातादयोऽर्थविशेषा उच्यन्ते, 'तत्र' इत्यादि तु समर्थविभक्तित्वेन बोध्यम्। एवंच समर्थेषु सप्तमीसमर्थात् प्राग् ये प्रत्यया उक्तास्ते जाताद्यर्थेषु वेदितव्या इति फलति ॥ ६ "तत्र जातः" इत्यनुवर्तते। तेन प्रायभवादिषु चरितार्थस्य ण्यस्य जातार्थे ठक् बाधक इत्याह-**एण्यापवाद** इति ॥ ७ यस्य भवनस्य नियमो नास्ति किन्तु बहुधा भवति स "प्रायभव" इत्युच्यते ॥ ८ सप्तमीसमर्थात् 'प्रायभवः' इत्यर्थेऽणादयो घादयश्च स्युः इत्यर्थफलितमाह-**तत्रेत्येवेति** ॥ ९ सप्तमीसमर्थाद्-

राष्ट्रियः ॥ **दिगादिभ्यो यत् ४।३।५४॥** दिश्यम् । वर्ग्यम् ॥ **शरीरावयवाच्च ४।३।५५॥** दन्त्यम् । कण्ठ्यम् । ( अध्यात्मादेष्ठञिष्यते ) । अध्यात्मं भवमाध्यात्मिकम् ॥ **अनुशतिकादीनां च ७।३।२०॥** एषामुभयपदवृद्धिर्ञिति णिति किति च । आधिदैविकम् । आधिभौतिकम् । ऐहलौकिकम् । पारलौकिकम् । आकृतिगणोऽयम् ॥ **जिह्वामूलाङ्गुलेश्छः ४।३।६२॥** जिह्वामूलीयम् । अङ्गुलीयम् ॥ **वर्गान्ताच्च ४।३।६३॥** कवर्गीयम् ॥ **तत आगतः ७।३।७४॥** स्रुघ्नादागतः स्रौघ्नः ॥ **ठगायस्थानेभ्यः ४।३।७५॥** शुल्कशालायाः आगतः शौल्कशालिकः ॥ **विद्यायोनिसम्बन्धेभ्यो वुञ्**

---

–'भवः' इत्यर्थेऽणादयो घादयश्च स्युः इत्यर्थः ॥ १ "दिगादिभ्यो यत्" इत्यतो 'यत्' इत्यनुवर्तते ॥ २ एवं तालुनि भवं तालव्यम् । ओष्ठ्यम् । हृद्यम् । नाभ्यम् । चक्षुष्यम् । नासिक्यम् । पायव्यम् । उपस्थ्यम् इत्यादि बोध्यम् ॥ ३ "मृजेर्वृद्धिः" "तद्धितेष्वचामादेः" 'उत्तरपदस्य' "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" इत्यनुवृत्तिफलितमाह–**एषामुभयपदवृद्धिरिति** ॥ ४ "जिह्वामूलाङ्गुलेश्छः" इत्यतः 'छः' इति वर्तते ॥ ५ एवं चवर्गीयम् । टवर्गीयम् । तवर्गीयम् । पवर्गीयम् । कवर्गे भवो वर्णः कवर्गीयः ॥ ६ 'पञ्चमीसमर्थाद्' 'आगतः' इत्यर्थेऽणादयो घादयश्च स्युः इत्यर्थः ॥ ७ एति एनं स्वामीति आयः, स्वामिनमयमेतीति वा आयः=स्वामिग्राह्यो भागः, स यस्मिन्नुत्पद्यते तत् आयस्थानम् । आयस्थानेति स्वरूपग्रहणं माभूदिति बहुवचननिर्देशः ॥ ८ 'चूंगीघर' इति भाषा । 'तत आगतः' इति तु प्रकृतमेव ॥ ९ येषां प्रवृत्तिनिमित्तेन विद्यायाः सम्बन्धस्ते विद्यासम्बन्धाः शब्दाः, येषां च प्रवृत्तिनिमित्तेन सह योन्याः सम्बन्धस्ते शब्दा योनिसम्बन्धाः तत आगत इति वर्तते ॥

४।४।७७॥ औपाध्यायकः पैतामहकः ॥ **हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ४।३।८१॥** समादागतं समरूप्यम्। पक्षे गहादित्वाच्छः। समीयम्। विषमीयम्। देवदत्तरूप्यम्। दैवदत्तम्। **मयट् च ४। ३।८२॥** सममयम्। देवदत्तमयम्॥ **प्रभवति ४।३।८३॥** हिमवतः प्रभवति[1] हैमवती गङ्गा[2]॥ **तद्गच्छति पथिदूतयोः ४। ३।८५॥** स्रुघ्नं गच्छति स्रौघ्नः पन्था दूतो वा ॥ **अभिनिष्क्रामति द्वारम् ४।३।८६॥** स्रुघ्नमभिनिष्क्रामति स्रौघ्नं कान्यकुब्जद्वारम्॥ **अधिकृत्य कृते ग्रन्थे ४।३।८७॥** शारीरकमधिकृत्य कृतो ग्रन्थः शारीरकीयः[6]॥ **सोऽस्य निवासः ४।३।८९॥** स्रुघ्नो निवासोऽस्य स्रौघ्नः॥ **तेन प्रोक्तम् ४।३।१०१॥** पाणिनिना प्रोक्तं पाणिनीयम्॥ **तस्येदम् ४।३।१२०॥** उपगोरिदं औपगवम्॥

॥ इति शैषिकाः ॥ ४ ॥

---

१ पञ्चमीसमर्थात् 'प्रभवति' इत्यर्थेऽणादयो घादयश्च स्युः। इत्यर्थः॥ २ प्रथमं प्रकाशते॥ ३ द्वितीयासमर्थात् 'गच्छति' इत्यर्थेऽणादयो घादयश्च स्युः। यो गच्छति स पन्था दूतो वा चेत् इत्यर्थः॥ ४ द्वितीयासमर्थात् 'अभिनिष्क्रामति' इत्यर्थेऽणादयो घादयश्च स्युः। अभिनिष्क्रमणकर्तृ द्वारं चेत्। इत्यर्थः॥ ५ द्वितीयासमर्थात् 'अधिकृत्य कृतो ग्रन्थः' इत्यर्थेऽणादयो घादयश्च स्युः॥ ६ "वृद्धाच्छः" इति छः॥ ७ प्रथमासमर्थात् 'अस्य निवासः' इत्यर्थेऽणादयो घादयश्च स्युः॥ ८ तृतीयासमर्थात् 'प्रोक्तम्' इत्यर्थेऽणादयो घादयश्च स्युः॥ ९ षष्ठ्यन्तात्समर्थात् 'इदम्' इत्यर्थेऽणादयो घादयश्च स्युः॥

## अथ विकारार्थकाः ।

**तस्य[1] विकारः ४ । ३ । १३४ ॥** (अश्मनो विकारे टिलोपो[2] वक्तव्यः ) । अश्मनो विकारः-आश्मः । भास्मनः । मार्तिकः ॥ **अवयवे[3] च प्राण्योषधिवृक्षेभ्यः ४ । ३ । १३५ ॥** चाद्विकारे॥ मयूरस्यावयवो विकारो वा मायूरः। मौर्वं काण्डं भस्म वा । पैप्पलम् ॥ **मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ४ । ३ । १४३ ॥** प्रकृतिमात्रान्मयड्वा[4] स्यात् विकारावयवयोः ॥ अश्ममयम् । आश्मनम् । अभक्ष्येत्यादि किम्।मौद्गः सूपः । कार्पासमाच्छादनम् ॥ **नित्यं वृद्ध[5]-शरादिभ्यः ४ । ३ । १४४ ॥** आम्रमयम् ॥ **गोश्च[6] पुरीषे ४।३। १४५ ॥** गोः पुरीषं गोमयम् ॥ **गोपयसोर्यत्[7] ४। ३। १६० ॥** गव्यम् । पयस्यम् ॥

॥ इति विकारार्थाः । ( प्रागूदीव्यतीयाः ) ॥ ५ ॥

---

१ षष्ठ्यन्तात्समर्थात् 'विकारः' इत्यर्थे प्राग्दीव्यतीया अणादयः स्युः॥ २ 'अन्' इति प्रकृतिभावेन टिलोपनिवृत्तौ टिलोपः प्रतिप्रसूयते ॥ ३ षष्ठ्यन्तेभ्यः प्राण्योषधिवृक्षेभ्योऽवयवे विकारे चाणादयः स्युः ॥ ४ 'एतत्' शब्देन "तस्य विकारः" "अवयवे च प्राण्योषधि-" इति सूत्रोपात्तौ विकारावयवौ गृह्येते षष्ठीसमर्थात् 'विकारावयवयोरर्थयोर्मयड् वा स्यात्' इति सूत्रार्थफलितमाह-**प्रकृतिमात्रेति** ॥ ५ 'मयड् एतयोः' इत्यनुवर्तते ॥ ६ 'मयट्' इति वर्तते ॥ पुरीषं न विकारः नाप्यवयव इति । सम्बन्धित्वं त्वव्याहतमिति भावः ॥ ७ 'एतयोः' इत्यनुवृत्त्या विकारावयवयोरयं विधीयते मयटं बाधितु-मिति भावः ॥

अथ ठगधिकारः ॥

**प्राग्वहतेष्ठक्** ४ । ४ । १ ॥ तद्वहतीत्यतः प्राक् ठगधिक्रियते ॥ **तेन[1] दीव्यति खनति जयति जितम्** ४ । ४ । २ ॥ अक्षैर्दीव्यति खनति जयति जितो वा-आक्षिकः ॥ **संस्कृतम्[2]** ४ । ४ । ३ ॥ दध्ना संस्कृतं दाधिकम् । मारीचिकम् ॥ **तरति[3]** ४ । ४ ।५ ॥ तेनेत्येव । उडुपेन तरति औडुपिकः ॥ **चरति** ४ । ४ । ८ ॥ तृतीयान्ताद्गच्छति भक्षयतीत्यर्थयोष्ठक् स्यात् ॥ हस्तिना चरति[4] हास्तिकः । दध्ना चरति[5] दाधिकः ॥ **संसृष्टे[6]** ४ । ४ । २२ ॥ दध्ना संसृष्टं दाधिकम् ॥ **उञ्छति[7]** ४ । ४ । ३२ ॥ बदराण्युञ्छति बादरिकः ॥ **रक्षति[8]** ४ । ४ । ३३ ॥ समाजं रक्षति सामाजिकः ॥ **शब्ददर्दुरं[9] करोति** ४ । ३ । ३४ ॥ शब्दं करोति शाब्दिकः । दर्दुरं करोति दार्दुरिकः ॥ **धर्मं[10] चरति** ४ । ४ । ४१ ॥ धार्मिकः । ( अधर्माच्चेति वक्तव्यम् ) ॥ आधार्मिकः ॥ **शिल्पम्[11]**

---

१ तृतीयसमर्थात् 'दीव्यति खनति जयति जितम्' इत्येतेष्वर्थेषु ठक् इति सूत्रार्थः ॥ २ तृतीयासमर्थात् 'संस्कृतम्' इत्यर्थे ठक् ॥ ३ तृतीयासमर्थात् 'तरति' इत्यर्थे ठक् ॥ इत्यर्थमाह—**तेनेत्येवेति** ॥ ४ गच्छतीत्यर्थः ॥ ५ भक्षयतीत्यर्थः ॥ ६ तृतीयासमर्थात् 'संसृष्टम्' इत्यर्थे ठक् ॥ ७ "तत्प्रत्यनुपूर्वम्" इत्यतः 'तत्' इत्यनुवर्तते । तेन द्वितीयासमर्थाद् 'उञ्छति' इत्यर्थे ठक् ॥ ८ 'तत्' इत्यनुवर्तते । तेन द्वितीयासमर्थाद् 'रक्षति' इत्यर्थे ठक् ॥ ९ 'तत्' इत्यनुवर्तते । तेन द्वितीयासमर्थात् शब्ददर्दुरशब्दात् 'करोति' इत्यर्थे ठक् ॥ १० द्वितीयासमर्थाद् धर्मशब्दात् 'चरति' इत्यर्थे ठक् ॥ ११ "तदस्य पण्यम्" इत्यतः 'तदस्य' इति सम्बन्धनेन प्रथमासमर्थात् 'शिल्पमस्य' इत्यर्थे ठक् ॥

४।४।५५॥ मृदंगवादनं शिल्पमस्य मार्दंगिकः ॥ **प्रहरणम्**[1] ४।४।५७ ॥ तदस्येत्येव ॥ असिः प्रहरणमस्य—आसिकः । धानुष्कः[2] ॥ **शीलम्**[3] ४।४।६१ ॥ अपूपभक्षणं शीलमस्य—आपूपिकः ॥ **निकटे वसति**[4] ४।४।७३ ॥ नैकटिको भिक्षुकः ॥

॥ इति ठगधिकारः । ( प्राग्वहतीयाः ) ॥ ६

---

अथ यदधिकारः ।

**प्राग्घिताद्यत्** ४।४।७५ ॥ तस्मै हितमित्यतः प्राग् यदधिक्रियते ॥ **तद्वहति रथयुगप्रासङ्गम्**[5] ४।४।७६ ॥ रथं वहति रथ्यः । युग्यः । प्रासङ्ग्यः ॥ **धुरो यड्ढकौ**[6] ४।४।७७॥ हलि चेति दीर्घे प्राप्ते—**न भकुर्छुराम्** ८।२।७९ ॥ भस्य कुर्छुरोश्चोपधाया[7] इको दीर्घो न स्यात् ॥ धुर्यः । धौरेयः ॥ **नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु**[8] ४।४।९१ ॥ नावा तार्यं नाव्यं

---

१ प्रथमसमर्थात् 'प्रहरणमस्य' इत्यर्थे ठक् ॥ २ "इसुसुक्तान्तात्—" इति ठस्य कादेशे "इणः षः" इति विसर्गस्य षः ॥ ३ प्रथमासमर्थात् 'शीलमस्य' इत्यर्थे ठक् ॥ ४ "तत्र नियुक्तः" इत्यतः 'तत्र' इत्यधिकारे सप्तमीसमर्थात् निकटशब्दात् 'वसति' इत्यर्थे ठक् ॥ ५ द्वितीयासमर्थाद् रथ—युग—प्रासङ्गशब्दात् 'वहति' इत्यर्थे यत् ॥ ६ द्वितीयासमर्थाद् धुरशब्दात् 'वहति' इत्यर्थे यत्—ढक् च प्रत्ययः ॥ ७ "वोरुपधाया दीर्घ इकः" इत्यतोऽनुवर्त्याह—उपधाया इति ॥ ८ 'यत्' प्रत्ययः ॥

जलम् । वयसा तुल्यो वयस्यः । धर्मेण प्राप्यं धर्म्यम् । विषेण वध्यो विष्यः । मूलेन आनाम्यं मूल्यम् । मूलेन समो मूल्यः । सीतया समितं सीत्यं क्षेत्रम् । तुलया संमितं तुल्यम् ॥ **तत्र[1] साधुः ४ । ४ । ९८ ॥** अग्रे साधुः—अग्र्यः । सामसु साधुः सामन्यः । ये चाभावकर्मणोरिति प्रकृतिभावः । कर्मण्यः । शरण्यः ॥ **सभाया[2] यः ४ । ४ । १०५ ॥** सभ्यः ॥

॥ इति यतोऽवधिः । ( प्राग्घितीयाः ) ॥ ७ ॥

---

**अथ छयतोरधिकारः ।**

**प्राक् क्रीताच्छः ५ । १ । १ ॥** तेन क्रीतमित्यतः प्राक् छो-ऽधिक्रियते ॥ **उगवादिभ्यो यत् ५ । १ । २ ॥** प्राक् क्रीतादित्येव । उवर्णान्ताद्गवादिभ्यश्च यत् स्यात् ॥ छस्यापवादः । शङ्कवे हितं शङ्कव्यं दारु । गव्यम् । ( नाभि नभं च ) । नभ्योऽक्षः । नभ्यमञ्जनम् ॥ **तस्मै[3] हितम् ५ । १ । ५ ॥** वत्सेभ्यो हितो वत्सीयो गोधुक् ॥ **शरीरा[4]वयवाद्यत् ५ । १ । ६ ॥** दन्त्यम् । कण्ठ्यम् । नस्यम् ॥ **आत्मन्[5]विश्वजनभोगोत्तरपदात्खः ५ । १ । ९ ॥ आत्मा-**

---

१ सप्तमीसमर्थात् 'साधुः' इत्यर्थे यत् ॥ २ सप्तमीसमर्थात् सभाशब्दात् साधुः इत्यर्थे य प्रत्ययः ॥ ३ चतुर्थीसमर्थात् 'हितम्' इत्यर्थे छः प्रत्ययः उवर्णान्ताद् गवादिभ्यस्तु 'यत्' प्रत्ययः ॥ ४ चतुर्थीसमर्थात् शरीरावयवात् 'हितम्' इत्यर्थे यत् ॥ ५ चतुर्थीसमर्थात् आत्मन् विश्वजन-भोगोत्तरपदात् 'हितम्' इत्यर्थे खः ॥

**ध्वानौ खे ६ । ४ । १६९ ॥** एतौ खे प्रकृत्या[1] स्तः ॥ आत्मने हितम्-आत्मनीनम् । विश्वजनीनम् । मातृभोगीणः ॥

इति छयतोरवधिः । ( प्राक्क्रीतीयाः ) ॥ ८ ॥

---

**अथ ठञधिकारः ।**

**प्राग्वतेष्ठञ् ५ । १ । १८॥** तेन तुल्यमिति वतिं वक्ष्यति, ततः प्राक् ठञधिक्रियते ॥ **तेन[2] क्रीतम् ५ । १ । ३७ ॥** सप्तत्या क्रीतं साप्ततिकम् । प्रास्थिकम् ॥ **तस्येश्वरः[3] ५ । १ । ४२ ॥** सर्वभूमिपृथिवीभ्यामणञौ स्तः ॥ अनुशतिकादीनां च । सर्वभूमेरीश्वरः[4] सार्वभौमः पार्थिवः ॥ **पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् ५ । १ । ६९ ॥** एते रूढिशब्दा निपात्यन्ते ॥ **तदर्हति ५ । १ । ६३ ॥** लब्धुं[5] योग्यो भवतीत्यर्थे द्वितीयान्ताट्ठञादयः स्युः ॥ श्वेतच्छत्रमर्हतीति श्वैतच्छत्रिकः ॥ **दण्डादिभ्यो[6] यत् ५ । १ । ६६ ॥** एभ्यो यत् स्यात् ॥ दण्डमर्हति

---

१ "प्रकृत्यैकाच्" इत्यतोऽनुवर्त्याह-**प्रकृत्येति** ॥ २ तृतीयासमर्थात् 'क्रीतम्' इत्यर्थे ठञ्प्रत्ययः ॥ ३ षष्ठीसमर्थाद् 'ईश्वरः' इत्यर्थे ठञ् इति सूत्रार्थः ॥ ४ अस्मिन् सूत्रे "सर्वभूमिपृथिवीभ्यामणञौ" इत्यनुवृत्तौ व्याख्यायोदाहरति-**सर्वभूमेरीश्वर** इति ॥ ५ द्वितीयासमर्थात् 'अर्हति' इत्यर्थे प्रत्यया इत्यर्थफलितमाह-**लब्धुमिति** ॥ ६ द्वितीयासमर्थेभ्यो दण्डादिभ्यः 'अर्हति' इत्यर्थे यत् प्रत्ययः ॥

दण्ड्यः । अर्घ्यः । वध्यः ॥ **तेन निर्वृत्तम् ५ । १ । ७९ ॥** अह्ना निर्वृत्तम्—आह्निकम् ॥

॥ इति ठञोऽवधिः ( प्राग्वतीयाः ) ॥ ९ ॥

---

अथ त्वतलधिकारः ।

**तेन तुल्यं क्रिया चेद्वतिः ५ । १ । ११५ ॥** ब्राह्मणेन तुल्यं ब्राह्मणवत् अधीते । क्रिया चेदिति किम्—गुणतुल्ये मा भूत् । पुत्रेण तुल्यः स्थूलः ॥ **तत्र तस्येव ५ । १ । ११६ ॥** मथुरायामिव मथुरावत् स्रुघ्ने प्राकारः ॥ चैत्रस्येव चैत्रवन्मैत्रस्य गावः ॥ **तस्य भावस्त्वतलौ ५ । १ । ११९ ॥** प्रकृतिजन्यबोधे प्रकारो भावः । गोर्भावो गोत्वम् । गोता । त्वान्तं क्लीबम् । **आ च त्वात् ५ । १ । १२० ॥** ब्रह्मणस्त्व इत्यतः प्राक् त्वतलावधिक्रियेते । अपवादैः सह समावेशार्थमिदम् । चकारो नञ्स्नञ्भ्यामपि समावेशार्थः । स्त्रियाः भावः—स्त्रैणम् । स्त्रीत्वम् । स्त्रीता । पौंस्नम् । पुंस्त्वम् । पुंस्ता ॥

---

१ तृतीयासमर्थात् 'निर्वृत्तम्' इत्यर्थे ठञ् ॥ २ "अह्नष्टखोरेव" इति नियमेन "नस्तद्धिते" इति टिलोपव्यावृत्तौ "अल्लोपोऽनः" इत्यकारलोपः ॥ ३ तृतीयासमर्थात् 'तुल्यम्' इत्यर्थे वतिः प्रत्ययः । यत् तुल्यं सा क्रिया चेत् इति सूत्रार्थः ॥ ४ सप्तमीसमर्थात् षष्ठीसमर्थाद् वा 'इव' इत्यर्थे वतिः प्रत्ययः ॥ ५ षष्ठी-समर्थाद् 'भावः' इत्यर्थे त्वतलौ प्रत्ययौ स्तः ॥ ६ अत्र धात्वर्थे व्यापाररूपो भावो न गृह्यते । किं तु विलक्षण एवेत्याह—**प्रकृतीति** ॥ यस्मात् त्वतलौ क्रियेते सा प्रकृतिः यथा गोशब्दः । तज्जन्यबोधे 'गोत्वविशिष्टः' इत्यस्मिन् प्रकारो विशेषणं गोत्वरूपो धर्मः स एव भाव इत्यर्थः ॥

**पृथ्वादिभ्य इमनिज्वा** ५ । १ । १२२ ॥ वावचनमणादिसमावेशार्थम् ॥ [२] **र ऋतो हलादेर्लघोः** ६।४।१६१॥ हलादेर्लघोर्ऋकारस्य रः स्यादिष्ठेमेयस्सु परतः ॥ पृथुमृदुभृशकृशदृढपरिवृढानामेव रत्वम् ॥ **टेः** ६।४। १५५ ॥ भस्य[३] टेर्लोप इष्ठेमेयस्सु । पृथोर्भावः प्रथिमा । पार्थवम् । म्रदिमा । मार्दवम् ॥ [४]**वर्णदृढादिभ्यः ष्यञ्च** ५। १। १२३॥ चादिमनिच् । शौक्ल्यम् ॥ शुक्लिमा । दार्ढ्यम् । द्रढिमा **गुण**[५]**वचनब्राह्मणादिभ्यः कर्मणि च** ५। १ । १२४॥ चाद्भावे॥ जडस्य भावः कर्म वा जाड्यम् । मूढस्य भावः कर्म वा मौढ्यम् । ब्राह्मण्यम् ॥ आकृतिगणोऽयम् । **सख्युर्यः**[६] ५।१।१२६॥ सख्युर्भावः कर्म वा सख्यम् ॥ [७]**कपिज्ञात्योर्ढक्** ५। १ । १२७ ॥ कापेयम् । ज्ञातेयम् । **पत्यन्त**[८]**पुरोहितादिभ्यो यक्** ५ । १ । १२८ ॥ सैनापत्यम् । पौरोहित्यम् ॥

॥ इति त्वतलधिकारः ॥ १०

---

१ षष्ठीसमर्थेभ्यः पृथ्वादिभ्यः 'भावः' इत्यर्थे इमनिच् ॥ २ " तुरिष्ठेमेयःसु" इत्यतोऽनुवर्त्याह–इष्ठेमेयःस्विति ॥ ३ "भस्य" 'ढ लोपोऽकद्र्वाः' । "तुरिष्ठेमेयःसु" इत्यतोऽनुवर्त्याह–**भस्य टेरिति** ॥ ४ षष्ठीसमर्थेभ्यो वर्णवाचिभ्यो दृढादिभ्यश्च ' भावः ' इत्यर्थे ष्यञ् । चकारात् इमनिच् ॥ ५ षष्ठीसमर्थेभ्यो गुणवाचिभ्यो ब्राह्मणादिभ्यश्च ' भावः ' ' कर्म ' इत्यर्थे ष्यञ् ॥ ६ षष्ठीसमर्थात् सखिशब्दात् भावकर्मणोरर्थयोर्यः प्रत्ययः ॥ ७ षष्ठीसमर्थकपिज्ञातिशब्दाभ्यां भावकर्मणोरर्थयोर्ढक् प्रत्ययः ॥ ८ षष्ठीसमर्थेभ्यः–

अथ भवनाद्यर्थकाः ।

**धान्यानां भवने क्षेत्रे खञ् ५ । २ । १ ॥** भवत्यस्मिन्निति भवनम् । मुद्गानां भवनं क्षेत्रं मौद्गीनम् ॥ **व्रीहिशाल्योर्ढक् ५।२। २ ॥** व्रैहेयम् । शालेयम् ॥ **हैयङ्गवीनं संज्ञायाम् ५ । २ । २३ ॥** ह्योगोदोहशब्दस्य हियंगुरादेशः विकारार्थ खञ्च निपात्यते । दुह्यत इति दोहः क्षीरम् । ह्योगोदोहस्य विकारः–हैयङ्गवीनं नवनीतम् ॥ **तदस्य सञ्जातं तारकादिभ्य इतच् ५ । २ । ३६ ॥** तारकाः सञ्जाता अस्य तारकितं नभः । पण्डितः । आकृतिगणोऽयम् । **प्रमाणे द्वयसज्दघ्नञ्मात्रचः ५ । २ । ३७ ॥** तदस्येत्यनुवर्तते । ऊरू प्रमाणमस्य–ऊरुद्वयसम् । ऊरुदघ्नम् । ऊरुमात्रम् । **यत्तदेतेभ्यः परिमाणे वतुप् ५ । २ । ३९ ॥** यत्परिमाणमस्य यावान् । तावान् । एतावान् ॥ **संख्याया अवयवे तयप् ५ । २ । ४२ ॥** पञ्च अवयवा अस्य–पञ्चतयम् ॥ **द्वित्रिभ्यां तयस्यायज्वा ५ । २ । ४३ ॥** द्वयम् । द्वितयम् । त्रयम् । त्रितयम् ॥

---

–प्रत्यन्तशब्देभ्यः पुरोहितादिशब्देभ्यश्च भावकर्मणोरर्थयोर्यक् प्रत्ययः ॥
१ षष्ठीसमर्थधान्यवाचिशब्दात् ' भवनं क्षेत्रम् ' इत्यर्थे खञ् प्रत्ययः ॥
२ षष्ठीसमर्थव्रीहिशालिशब्दाभ्यां ' भवनं क्षेत्रम् ' इत्यर्थे ढक् ॥ ३ प्रथमासमर्थतारकादिशब्देभ्यः ' अस्य सञ्जातम् ' इत्यर्थे इतच् ॥ ४ प्रथमासमर्थात् 'प्रमाणम् अस्य' इत्यर्थे एते प्रत्ययाः ॥ ५ प्रथमासमर्थेभ्यः यद्–तद्–एतद्–शब्देभ्यः 'परिमाणमस्य' इत्यर्थे वतुप् ॥ ६ प्रथमासमर्थसंख्याशब्दात् ' अवयवा अस्य ' इत्यर्थे तयप् ॥

**उभादुदात्तो नित्यम्** ५ । २ । ४४ ॥ उभशब्दात्तयपोऽयच्[1] स्यात् स चाद्युदात्तः ॥ **तस्य पूरणे डट्**[2] ५।२।४८॥ एकादशानां पूरणः-एकादशः ॥ **नान्तादसंख्यादेर्मट्** ५ । २ । ४९ ॥ डटो मडागमः[3] । पञ्चानां पूरणः—पञ्चमः । नान्तात्किम्- **ति विंशतेर्डिति** ६ । ६ । १४२ ॥ विंशतेर्भस्य[4] तिशब्दस्य लोपो डिति परे ॥ विंशः । असंख्यादेः किम्—एकादशः ॥ **षट्कतिकतिपयचतुरां थुक्** ५ । २ । ५१ ॥ एषां थुगागमः स्याड्डटि ॥ षण्णां पूरणः षष्ठः । कतिथः । कतिपयशब्दस्यासंख्यात्वेऽप्यत एव ज्ञापकाड्डट् । कति-पयथः । चतुर्थः ॥ **द्वेस्तीयः** ५ । २ । ५४॥ डटोऽपवादः[5] । द्वयोः पूरणो द्वितीयः ॥ **त्रेः संप्रसारणं च** ५ । २ । ५५ ॥ तृतीयः **श्रोत्रियंश्छन्दोऽधीते**[6] ५।२।८४॥ श्रोत्रियः ॥ वेत्यनुवृत्तेश्छा-न्दसः ॥ **पूर्वादिनिः** ५।२।८६ ॥ पूर्वं[7] कृतमनेन[8] पूर्वी ॥ **सपू-**

---

१ " द्वित्रिभ्यां तयस्यायज्वा " इत्यतः ' तयस्यायच् ' इत्यनुवर्त्याह-**तयप इति** ॥ भाष्यकारस्तूभशब्दात्स्वतन्त्रमेवायचमिच्छति न तयप आदेशम् ॥ २ षष्ठीसमर्थात् संख्याशब्दात् ' **पूरणः** ' इत्यर्थे डट् ॥ ३ षष्ठीसमर्थात् असंख्यादेर्नान्तसंख्याशब्दात् विहितस्य डटो मडागमः ॥ ४ ' ति ' इति लुप्तषष्ठीकम् । " भस्य " "अल्लोपोऽनः" इत्यतोऽनुवर्त्याह-**विंशतेर्भस्येति** ॥ ५ " तस्य पूरणे डट् " इत्यस्योत्सर्गत्वमाश्रित्याह-**डटोऽपवाद** इति ॥ ६ ' वेदं पठति ' इत्यर्थे श्रोत्रियम् इति निपात्यते । छन्दःशब्दाद् घन् प्रत्ययः, प्रकृतेः श्रोत्रादेशश्चात्र निपातनाद् भवति ॥ ७ ' तावतिथं ग्रहणमिति लुग्वा ' इत्यतः ॥ ८ " श्राद्धमनेन भुक्तम् ' इत्यतोऽनुवृत्तस्य 'अनेन' इत्यस्य कर्तृतृतीया-

**र्वाच्च ५ । २ । ८७ ॥** कृतपूर्वी ॥ **इष्टादिभ्यश्च ५ । २ । ८८ ॥** इष्टमनेन—इष्टी । अधीती ॥

॥ इति भवनाद्यर्थकाः ॥ ११ ॥

**अथ मत्वर्थीयाः ।**

**तदस्यास्त्यस्मिन्निति मतुप् ५।२।९४ ॥** गावोऽस्यास्मिन्वा सन्ति गोमान् ॥ **तसौ मत्वर्थे १।४।१९ ॥** तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये परे । गरुत्मान् ॥ वसोः संप्रसारणम् । विदुष्मान् । ( गुणवचनेभ्यो मतुपो लुगिष्टः ) । शुक्लो गुणोऽस्यास्तीति शुक्लः पटः । कृष्णः ॥ **प्राणिस्थादातो लजन्यतरस्याम्**

---

—न्तत्वेन तद्योग्यां क्रियामध्याहृत्य विग्रहं दर्शयति—**पूर्वं कृतमनेनेति** ॥१ "पूर्वादिनिः" इत्यनुवर्त्य 'विद्यमानपूर्वपदात् पूर्वशब्दात् 'इनिः' प्रत्ययः 'अनेन' इत्यस्मिन्नर्थे इत्यर्थः पूर्वपदं च योग्यतया 'अनेन' इत्येतत्कर्तृसाधितक्रियावाच्येव ग्राह्यमित्युदाहरति—**कृतपूर्वी** इति ॥ भुक्तपूर्वी, दृष्टपूर्वी इत्यादि ॥ २ प्रथमासमर्थेभ्यः इष्टादिभ्यः 'अनेन' इत्यर्थे इनिः प्रत्ययः ॥ ३ प्रथमासमर्थाद् 'अस्य अस्ति' 'अस्मिन् अस्ति' इत्यर्थयोर्मतुप् ॥ ४ "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । सम्बन्धेऽस्ति विवक्षायां भवन्ति मतुबादयः ॥" भूम्नि=बाहुल्ये—धनवान् । निन्दायाम्—वाचालः । प्रशंसायाम्—गुणवान् । नित्ययोगे—लोमशः । अत्युक्तौ-अनुदरी । सम्बन्धे—दण्डी । सत्तायाम्—अस्तिमान् । अस्तिविवक्षायां ये मतुब्रादयो विधीयन्ते ते भूमादिषु विषयेषु भवन्तीति वार्तिकार्थः ॥ ५ "यचि भम्" इत्यतोऽनुवर्त्याह—**भसंज्ञाविति** ॥ ६ यवादिगणे पाठात् 'मयः' इति वत्वं न प्रवर्तते ॥ ७ प्रथमासमर्थादाकारान्तप्राण्यङ्गवाचिनो मतुबर्थे लच् प्रत्ययः ॥ ८ अन्यतरस्यांग्रहणं मतुपः समुच्चयार्थम् ॥

१।२।९६॥ चूडालः । चूडावान् । प्राणिस्थात्किम्—शिखावान् दीपः । प्राण्यङ्गादेव । मेधावान् ॥ **लोमादिपामादिपिच्छादिभ्यः शनेलचः**[2] ५।२।१००॥ लोमादिभ्यः शः ॥ लोमशः । लोमवान् । रोमशः । रोमवान् ॥ पामादिभ्यो नः । पामनः । ( अङ्गात्कल्याणे )। अङ्गना । (लक्ष्म्या अच्च) । लक्ष्मणः । पिच्छादिभ्य इलच् । पिच्छिलः । पिच्छवान् ॥ **दन्त**[3] **उन्नत उरच्** ५।२।१०६ ॥ उन्नता दन्ताः सन्त्यस्य दन्तुरः ॥ **केशाद्वोऽन्यतरस्याम्**[4] ५।२।१०९॥ केशवः केशी । केशिकः । केशवान् । ( अन्येभ्योऽपि दृश्यते ) । मणिवः (अर्णसो लोपश्च) । अर्णवः॥ **अत इनिठनौ**[6] ५।२।११५॥ दण्डी दण्डिकः ॥ **व्रीह्यादिभ्यश्च**[7] ५ । २ । ११६ ॥ व्रीही । व्रीहिकः ॥ **अस्मायामेधास्रजो विनिः** ५।२।१२१ ॥ यशस्वी ।यशस्वान्। मायावी। मेधावी। स्रग्वी ॥ **वाचो ग्मिनिः**५।२।१२४॥वाग्ग्मी॥ **अर्शआदिभ्योऽच्** ५।२।१२७ ॥ अर्शोऽस्य विद्यते—अर्शसः ।

---

१ 'अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम् ।' इति स्वाङ्गलक्षणात् । मेधाया अमूर्तत्वान्न स्वाङ्गत्वमिति भावः ॥ २ मतुप्समुच्चायकम् 'अन्यतरस्याम्' ग्रहणमनुवर्तते ॥ ३ प्रथमासमर्थाद् दन्तशब्दाद् मतुबर्थे उरच् । दन्ता उन्नताश्चेत् ॥ ४ मतुप्समुच्चायकस्यान्यतरस्यांग्रहणस्य प्रकृतत्वेऽपि पुनरन्यतरस्यां ग्रहणं वक्ष्यमाणयोरिनिठनोः समुच्चयार्थम् ॥ ५ भाष्ये न दृश्यते । ६ अदन्तप्रातिपदिकसमर्थात् मतुवर्थे इनिठनौ स्तः ॥ ७ इनिठनौ मतुबर्थे ॥ ८ मतुबर्थे ॥ एवमग्रेऽपि ॥ ९ ' अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ' इत्युक्तमेव ॥ १० " अतद्धिते " इत्युक्तत्वाद् गकारस्य नेत्संज्ञेति गकारद्वयवानेव प्रयोगः ॥

आकृतिगणोऽयम् ॥ **अहंशुभमोर्युस् ५।२।१४०** ॥ अहंयुः--अहंकारवान् । शुभंयुस्तु शुभान्वितः ॥

॥ इति मत्वर्थीयाः ॥ १२ ॥

---

अथ प्राग्दिशीयाः ।

**प्राग्दिशो विभक्तिः ५।३।१॥** दिक्छब्देभ्य इत्यतः प्रागवक्ष्यमाणाः प्रत्यया विभक्तिसंज्ञाः स्युः ॥ **किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ५।३।२॥** किमः सर्वनाम्नो बहुशब्दाच्चेति प्राग्दिशोऽधिक्रियन्ते। **पञ्चम्यास्तसिल् ५।३।७॥** पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल् वा स्यात् ॥ **कु तिहोः ७।२।१०४ ॥** किमः कुः स्यात्तादौ हादौ च विभक्तौ परतः॥ कुतः ॥ **इदम इश् ५।३।३॥** प्राग्दिशीये[३] परे। इतः॥ **अन् ५।३।५॥** एतदः[४] प्राग्दिशीये ॥ अनेकाल्त्वात्सर्वादेशः । अतः[५] । अमुतः । यतः । बहुतः । द्व्यादेस्तु द्वाभ्याम् ॥ **पर्यभिभ्यां च ५।३।९॥** आभ्यां तसिल्[६] स्यात् ॥ परितः । सर्वत इत्यर्थः । अभितः ।

---

१ अहम्–शुभम् इति विभक्तिप्रतिरूपकं अव्ययं ॥ २ "किमः कः" "अष्टन आ विभक्तौ" इत्यतोऽनुवर्त्य विशेषणे तदादिविधिरित्याह–**किम** इत्यादि ॥ ३ 'प्राग्दिशः' इत्यनुवर्ततेऽत आह–**प्राग्दिशीये** इति ॥ ४ "एतदोऽन्" इत्येकमेव सूत्रम् "एततो रथोः" इति सूत्रतोऽनुवर्त्य एतदोऽपि विधानाय 'एतदः' इति योगविभागः कृतः । ततोऽत्राप्यनुवर्त्याह–**एतद** इति ॥ ५ "न लोपः प्रातिपदिकान्तस्य" इति नकारलोप इति भावः ॥ ६ "पञ्चम्यास्तसिल्" इत्यतोऽनुवर्त्याह–**तसिल्** इति ॥

ऽमयत इत्यर्थः ॥ **सप्तम्यास्त्रल् ५।३।१०॥** कुत्र । यत्र । तत्र । बहुत्र ॥ **इदमो हः ५।३।११॥** त्रलोऽपवादः[1] । इह ॥ **किमोऽत् ५।३।१२॥** वाग्रहणमपकृष्यते[2] । सप्तम्यन्तात्किमोऽद्वा स्यात् पक्षे त्रल्॥ **क्वाति ७।२।१०५॥** किमः[3] कादेशः स्यादति ॥ क । कुत्र ॥**इतराभ्योऽपि दृश्यन्ते ५।३।१४ ॥** पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्ते ॥ दृशिग्रहणाद्भवदादियोग एव । स भवान् । ततो भवान् । तत्र भवान् । तम्भवन्तम् । ततोभवन्तम् । तत्रभवन्तम् । एवं दीर्घायुः । देवानाम्प्रियः । आयुष्मान् ॥ **सर्वैकान्यकिंयत्तदः काले दा ५। ३ । १५ ॥** सप्तम्यन्तेभ्यः[4] कालार्थेभ्यः स्वार्थे दा स्यात् ॥ **सर्वस्य सोऽन्यतरस्यां दि ५।३।६॥** दादौ प्राग्दिशीये सर्वस्य सो वा स्यात् ॥ सर्वस्मिन् काले सदा । सर्वदा । अन्यदा । कदा । यदा । तदा । काले किम्–सर्वत्र देशे ॥ **इदमो र्हिल् ५।३।१६ ॥** सप्तम्यन्तात्[5] । काले इत्येव ॥ **एतेतौ रथोः ५।३।४॥** इदम्शब्दस्य[6] एत इत् इत्यादेशौ स्तो रेफादौ थकारादौ च प्राग्दिशीये परे । अस्मिन् काले–एतर्हि । काले–इह देशे ॥ **अनद्य-**

---

१ 'सप्तम्याः' इत्यनुवर्तते । तेन त्रल उत्सर्गत्वं सूचयन्नाह–**त्रलोऽपवाद** इति ॥ २ "वा ह च च्छन्दसि" इत्यत इति शेषः ॥ 'सप्तम्याः' इत्यनुवर्त्याह–**सप्तम्यन्तात् किम** इति ॥ ३ "किमः कः" इत्यतोऽनुवर्त्याह–**किम** इति ॥ ४ 'सप्तम्यास्त्रल्" इत्यतोऽनुवर्त्याह–**सप्तम्यन्तेभ्य** इति ॥ ५ " सप्तम्यास्त्रल् " "सर्वैकान्यकिंयत्तदः–" इत्यतोऽनुवर्त्याह–**सप्तम्यन्तात् काले** इति ॥ ६ "इदम इश्" इत्यतोऽनुवर्त्याह–**इदम्शब्दस्येति**

तने र्हिलन्यतरस्याम् ५।३।२१॥ कर्हि । कदा । यर्हि । यदा। तर्हि तदा ॥ **एतदः ५।३।५** ॥ एतेत् इत् एतौ स्तो रेफादौ थादौ च प्राग्दिशीये । एतस्मिन्काले-एतर्हि ॥ **प्रकारवचने थाल् ५ । ३ । २३** ॥ प्रकारवृत्तिभ्यः किमादिभ्यस्थाल् स्यात् स्वार्थे ।तेन प्रकारेण तथा । यथा ॥ **इदमस्थमुः ५।३।२४**॥ थालोऽपवादः । ( एतदोऽपि वाच्यः ) । अनेन एतेन वा प्रकारेण-इत्थम् ॥ **किमश्च ५।३।२५** ॥ केन प्रकारेण कथम् ॥

॥ इति प्राग्दिशीयाः ॥ १२ ॥

---

**अथ प्रागिवीयाः ।**

**अतिशायने तमबिष्ठनौ ५।३। ५५** ॥ अतिशयविशिष्टार्थवृत्तेः सुबन्तात् स्वार्थ एतौ स्तः । अयमेषामतिशयेनाढ्यः—आढ्यतमः। लघुतमः । लघिष्ठः ॥ **तिङश्च ५।३।५६** ॥ तिङन्तादतिशये द्योत्ये

---

१ 'सप्तम्यां' 'काले' इत्यनुवर्तते ॥ २ "एतेतौ रथोः" "प्राग्दिश" इत्यतोऽनुवर्त्याह-**एत इत्** इत्यादि ॥ ३ किंसर्वनामबहुभ्योऽद्व्यादिभ्यः इत्यतोऽनुवर्त्याह-**किमादिभ्य** इति ॥४"प्रकारवचने" इत्यनुवर्तते । तेन थाल्उत्सर्ग इत्याह-**थालोऽपवाद** इति ॥५"प्रकारवचने" 'थमुः' इत्यनुवर्तते । तेन थाल्उत्सर्गः ॥ ६ यद्यपि "ङ्याप्प्रातिपदिकात्" इत्यधिकारात्प्रातिपदिकादेव प्राप्नोति तथापि "घकालतनेषु कालनाम्नः" इत्यलुग्विधानसामर्थ्यात् प्रातिपदिकपदं स्वप्रकृतिसुबन्तोत्तरमेवेत्यभिप्रेत्याह-**सुबन्तादिति** ॥ ७ " देः " इति टिलोपः ॥

तमप्[1] स्यात् ॥ **तरप्तमपौ घः १।१।२२॥** एतौ घसंज्ञौ स्तः॥ **किमे-त्तिङव्ययघादाम्वद्रव्यप्रकर्षे ५ । ४ । ११ ॥** किम एदन्ता-त्तिङोऽव्ययाच्च यो घस्तदन्तादामुः स्यान्न तु द्रव्यप्रकर्षे ॥ किन्तमाम्[3]। प्राह्णेतमाम् । पचतितमाम् । उच्चैस्तमाम् । द्रव्यप्रकर्षे तु उच्चैस्त-मस्तरुः ॥ **द्विवचनविभज्योपपदे तरबीयसुनौ ५ । ३ । ५७ ॥** द्वयोरेकस्यातिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः॥ पूर्वयोरपवादः[4] । अयमनयोरतिशयेन लघुः—लघुतरः। लघीयान् । उदीच्याः[5] प्राच्येभ्यः पटुतराः पटीयांसः ॥ **प्रशस्यस्य श्रः ५।३। ६०॥** अस्य श्रादेशः स्यादजाद्योः[6] परतः ॥ **प्रकृत्यैकाच् ६ । ४। १६३॥** इष्ठादिष्वेकाच्[7] प्रकृत्या स्यात् ॥ श्रेष्ठः । श्रेयान् ॥ **ज्य च ५ । ३ । ६१ ॥** प्रशस्यस्य[8] ज्यादेशः स्यादिष्ठेयसोः ॥ ज्येष्ठः ॥

---

१ तमबिष्ठनोरनुवृत्तावपि 'अजादी गुणवचनादेव' इति नियमात्तिङन्तादिष्ठनो-ऽप्राप्तौ तमबेव भवतीत्याह—**तमबिति** ॥ २ अत्र प्रकरणे ' तादी यः ' ' पितौ यः ' इति वा वक्तव्ये प्रकरणान्तरे गुरुभूतसूत्रकरणेनात्यन्तस्वार्थिकोऽपि तरप् ज्ञाप्यते । तेन "अल्पाच्तरम्" इत्यादिसिद्धिः ॥ ३ 'निरनुबन्धकग्रहणे न सानु-बन्धकस्य' इति सानुबन्धकोकारविशिष्टस्यामो न निरनुबन्धकस्यामो ग्रहणे "ह्रस्व-नद्यापः—" इत्यादौ ग्रहणमिति न नुडाद्यापत्तिः ॥ ४ तमबिष्ठनोः सामान्यविहि-तत्वादुत्सर्गत्वमभिप्रेत्याह—**पूर्वयोरपवाद** इति ॥ ५ उत्तरदेशीयाः पूर्वदेशीये-भ्योऽतिचतुरा इत्यर्थः ॥ ६ " अजादी गुणवचनादेव " इत्यतो विभक्ति-विपरिणतमनुवर्त्याह—**अजाद्योरिति** ॥ ७ तुरिष्ठेमेयःसु " इत्यतोऽनुवर्त्याह—**इष्ठादिष्विति** ॥ ८ " प्रशस्यस्य श्रः " "अजादी गुण—" इत्यतोऽनुवर्त्याह—**प्रशस्यस्येति** ॥

**ज्यादादीयसः** ६।४।१६० ॥ आदेः परस्य । ज्यायान् ॥ **बहोर्लोपो भू च बहोः** ६।४।१५८॥ बहोः परयोरिमेयसोर्लोपः स्याद्बहोश्च भूरादेशः ॥ भूमा । भूयान् ॥ **इष्ठस्य यिट् च** ६।४।१५९॥ बहोः परस्य इष्ठस्य लोपः स्याद्यिडागमश्च ॥ भूयिष्ठः ॥ **विन्मतोर्लुक्** ५।३।६५॥ विनो मतुपश्च लुक् स्यादिष्ठेयसोः ॥ अतिशयेन स्रग्वी स्रजिष्ठः । स्रजीयान् । अतिशयेन त्वग्वान्-त्वचिष्ठः । त्वचीयान् ॥ **ईषदसमाप्तौ कल्पब्देश्यदेशीयरः** ५।३।६७॥ ईषदूनो विद्वान् विद्वत्कल्पः । विद्वद्देश्यः । विद्वद्देशीयः । पचतिकल्पम् ॥ **विभाषा सुपो बहुच् पुरस्तात्तु** ५।३।६८॥ ईषदसमाप्तिविशिष्टेऽर्थे सुबन्ताद्बहुज्वा स्यात्स च प्रागेव न तु परतः॥ ईषदूनः पटुर्बहुपटुः । पटुकल्पः। सुपः किम्—जयतिकल्पम् ॥ **प्रागिवात्कः** ५।३।७०॥ इवे प्रतिकृतावित्यतः प्राक्काधिकारः ॥ **अव्ययसर्वनाम्नामकच् प्राक् टेः** ५।

---

१ 'ज्यात् पञ्चमी, आत् प्रथमा, ईयसः षष्ठी ॥ २ "तुरिष्ठेमेयःसु" इत्यऽनुवृत्तावपि " इष्ठस्य यिट् च " इति विशेषविधानात्परिशेषादस्येमेयःपरत्वमेवेत्यभिप्रेत्याह—**इमेयसोरिति** ॥ ३ " बहोर्लोपो भू च बहोः " इत्यनुवर्त्याह—**बहोरिति** । इकारस्योच्चारणसामर्थ्यान्नानुनासिकत्वम् ॥ ४ " अजादी गुणवचनाद् " इत्यतो विभक्तिविपरिणतमनुवर्त्याह—**इष्ठेयसोरिति** ॥ ५ 'सुबन्तात्' 'तिङन्ताच्च' इति शेषः ॥ ६ यस्य विद्वद्भवने किंचिन्न्यूनताऽस्ति सः ॥ ७ यः पाकसाधने किंचिन्न्यूनतां करोति स एवमुच्यते ॥८"ईषदसमाप्तौ " इत्यनुवर्त्याह—**ईषदसमाप्तीति** । 'सुप' इत्युपादानं "तिङश्च" इत्यस्यासम्बन्धाय ॥

३। ७१ ॥ कापवादः । तिङश्चेत्यनुवर्तते[1] । ( ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्, अन्यत्र सुबन्तस्य) ॥ **अज्ञाते ५।३।७३॥** कस्यायमश्वोऽश्वकः । उच्चकैः । नीचकैः । सर्वकैः । युष्मकाभिः । युवकयोः । त्वयका ॥ **कुत्सिते ५।३।७४॥** कुत्सितोऽश्वोऽश्वकः ॥ **किंयत्तदो[2] निर्धारणे द्वयोरेकस्य डतरच् ५ । ३ । ९२ ॥** अनयोः कतरो वैष्णवः । यतरः । ततरः ॥ **वा बहूनां जातिपरिप्रश्ने डतमच् ५ । ३ । ९३ ॥** जातिपरिप्रश्न इति प्रत्याख्यातमाकरे । बहूनां मध्ये एकस्य[3] निर्धारणे डतमज्वा स्यात् ॥ कतमो भवतां कठः । यतमः । ततमः । वाग्रहणमकजर्थम्[4] । यकः सकः ॥

॥ इति प्रागिवीयाः ॥ १४ ॥

---

अथ स्वार्थिकाः ।

**इवे प्रतिकृतौ[5] ५ । ३ । ९६ ॥** कन्स्यात् ॥ अश्व इव प्रतिकृतिरश्वकः[6] । ( सर्वप्रातिपदिकेभ्यः स्वार्थे कन् ) । अश्वकः ॥ **तत्प्र-**

---

१ "ओकारसकार-" इति संकोचश्च युष्मदस्मन्मात्रविषयः, तथैव भाष्य उदाहृतत्वात् ॥ २ द्वयोरेकस्य निर्धारणे कार्ये कियत्तद्भ्यो डतरच् ॥ ३ 'किंयत्तदो निर्धारणे एकस्य' इत्यनुवर्त्याह-**एकस्येति** ॥ ४ अत्रत्यम् । "समर्थानां प्रथमाद्-" इत्यत्रत्यं वाग्रहणेनोभयत्र कः यः सः इति भवत्येव ॥ ५ प्रतिकृतिः= प्रतिनिधिः । अत्र सूत्रे मूर्तेर्वर्णनं भगवता कृतमिति बोध्यम् ॥ ६ काष्ठादिनिर्मिता घोटकप्रतिमा 'अश्वक' इत्युच्यते ॥ ७ तत्=प्रथमान्तात् । भावपक्षे प्रकृतस्य वचनमिति षष्ठीतत्पुरुषः । अधिकरणपक्षे प्रकृतमुच्यते यस्मिन्निति विग्रहः ॥

**प्रकृतवचने मयट् ५।४।२१॥** प्राचुर्येण[1] प्रस्तुतं प्रकृतम्। त[illegible] प्रतिपादनम्। भावे अधिकरणे वा ल्युट्। आद्ये प्रकृतमन्नमन्नमयम्। अपूपमयम्[2]। द्वितीये[3] तु अन्नमयो यज्ञः। अपूपमयं पर्व॥ **प्रज्ञादिभ्यश्च ५।४।३८॥** अण्[4] स्यात्॥ प्रज्ञ एव प्राज्ञः। प्राज्ञी स्त्री। दैवतः। बान्धवः॥ **बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ५।४।४२॥** बहूनि ददाति बहुशः। अल्पशः[5]। ( आद्यादिभ्यस्तसेरुपसंख्यानम् )। आदौ—आदितः[6]। मध्यतः। अन्ततः। पार्श्वतः। आकृतिगणोऽयम्। स्वरेण—स्वरतः। वर्णतः॥ **कृभ्वस्तियोगे संपद्यकर्तरि च्विः ५।४।५०॥** ( अभूततद्भाव इति वक्तव्यम् )। विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्तमानाद्विकारशब्दात् स्वार्थे च्विर्वा स्यात्करोत्यादिभिर्योगे॥ **अस्य च्वौ ७।४।३२॥** अवर्णस्य ईत्[7] स्यात् च्वौ॥ वेर्लोपे च्व्यन्तत्वादव्ययत्वम्। अकृष्णः कृष्णः संपद्यते तं करोति कृष्णीकरोति।

---

१ प्राचुर्येण=बाहुल्येन—सम्पूर्णतयेति यावत्। प्रस्तुतम्=प्रारब्धम्—आरम्भविषयीकृतमिति यावत्। ततश्च भावे—प्रचुरार्थबोधकात् प्रथमान्तात् प्राचुर्ये द्योत्ये मयट्। अधिकरणे च प्रचुरार्थबोधकात् प्रथमान्तात् प्रचुराधिकरणे द्योत्ये मयट् इति बोध्यम्। आद्ये=भावे। द्वितीये=अधिकरणे। प्रकृतम्=प्रचुरम् बहु। प्राचुर्येण अन्नं यस्मिन् सोऽन्नमयो यज्ञः॥ २ भावे ल्युटि 'अपूपमयम्' इत्यत्र 'नपुंसकत्वम्' 'क्वचित् स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति पुंस्त्वातिक्रमणेन भवति॥ ३ अधिकरणे ल्युटि अन्नं प्रस्तुतमुच्यतेऽस्मिन्नित्यर्थः॥ ४ "तद्युक्तात्कर्मणोऽण्" इत्यतोऽनुवर्त्याह—**अण् स्यादिति**॥ ५ 'बह्वल्पार्थान्मङ्गलामङ्गलवचनम्' इति वार्तिकोक्तेः 'आभ्युदयिकेषु बहुशो ददाति' 'श्राद्धेषु अल्पशो ददाति' इत्येवमेव रूपाणि भवन्ति न तु विपरीतक्रमेणेति बोध्यम्॥ ६ अयं तसिः सार्वविभक्तिकः॥ ७ "ई घ्राध्मोः" इत्यतोऽनुवर्त्याह—**ईत्स्यादिति**॥

अग्नीभवति । गङ्गीस्यात् । ( अव्ययस्य च्वावीत्वं नेति वाच्यम् ) । दोषाभूतमहः । दिवाभूता रात्रिः ॥ **विभाषा साति कार्त्स्न्ये ५।४।५२॥** च्विविषये सातिर्वा स्यात्साकल्ये॥ **सात्पदाद्योः ८।३।१११॥** सस्य षत्वं न स्यात् ॥ कृत्स्नं शस्त्रमग्निः संपद्यतेऽग्निसाद्भवति । दधि सिञ्चति ॥ **च्वौ च ७।४।२६॥** च्वौ परे पूर्वस्य दीर्घः स्यात् ॥ अग्नीभवति ॥ **अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच् ५।४।५७॥** द्व्यजवाऽवरं न्यूनं, न तु ततो न्यूनम् । अनेकाजिति यावत् । तादृशमर्धं यस्य तस्माड्डाच् स्यात् कृभ्वस्तिभिर्योगे । ( डाचि विवक्षिते द्वे बहुलम् ) इति डाचि विवक्षिते द्वित्वम् । ( नित्यमाम्रेडिते डाचीति वक्तव्यम् ) । डाच्परं यदाम्रेडितं तस्मिन्परे पूर्वपरयोर्वर्णयोः पररूपं स्यात् ॥ इति तकारपकारयोः पकारः । पटपटा करोति । अव्यक्तानुकरणात्किम्—ईषत्करोति । द्व्यजवरार्धात्किम्-श्रत्करोति । अवरेति किम्—खरटखरटा करोति । अनितौ किम्—पटिति करोति ॥ इति स्वार्थिकाः ॥ १५ ॥

॥ इति तद्धिताः ॥

---

१ "कृभ्वस्तियोगे संपद्यकर्तरि" "अभूततद्भावे" इति वर्तते तत्फलितमाह—च्विविषय इति ॥ २ "अपदान्तस्य मूर्धन्यः" "सहेः साडः सः" "इण्कोः" "आदेशप्रत्यययोः" "न रपरसृपिसृजि—" इत्यतोऽनुवर्त्याह—सस्येति ॥ ३ "अकृत्सार्वधातुक—" इत्यतोऽनुवर्त्याह—दीर्घ इति ॥ ४ अवरशब्दव्याख्या—न्यूनमिति । ततः=द्वाभ्यां अज्भ्याम् । यस्य अर्धे द्वाभ्याम् अज्भ्याम् न्यूना अचो न स्युः किन्तु द्वावेव न्यूनो भवतः ॥

अथ स्त्रीप्रत्ययाः ।

**स्त्रियाम् ४।१।३** ॥ अधिकारोऽयम् । समर्थानामिति यावत् ॥ **अजाद्यतष्टाप् ४ । १ । ४** ॥ अजादीनामकारान्तस्य च वाच्यं यत् स्त्रीत्वं[1] तत्र द्योत्ये टाप्स्यात् ॥ अजा । एडका । अश्वा । चटका । मूषिका[2] ॥ बाला । वत्सा । होढा । मन्दा । विलाता । इत्यादि ॥ गङ्गा । सर्वा ॥ **उगितश्च ४ । १।६** ॥ उगिदन्तात्[3]प्रातिपदिकात्स्त्रियां ङीप्स्यात् ॥ भवती[4] । भवन्ती[5] । पचन्ती ॥ दीव्यन्ती ॥ **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ४।१।१५** ॥ अनुपसर्जनं[6] यट्टिदादि तदन्तं यददन्तं प्रातिपदिकं ततः स्त्रियां ङीप्स्यात् । कुरुचरी । नदट् नदी । देवट् देवी । सौपर्णेयी[7] । ऐन्द्री ।

---

१ "स्त्रियाम्" इत्यधिकृतम् "अजाद्यतः" इति षष्ठ्यन्तस्य विशेष्यम् । तेन स्त्रीत्वं गृह्यमाणसंबन्ध्येव गृह्यते न प्रतीयमानतदन्तसंबन्धि । तेन पञ्चाजी इत्यादौ स्त्रीत्वस्य गृह्यमाणसम्बन्धित्वाभावेन न टाप् ॥ २ मूषिकान्तानां जातेरस्त्रीविषयादिति बाधनार्थमजादौ पाठः । विलातान्तानां 'वयसि प्रथमे' इति ॥ ३ "ऋन्नेभ्यो ङीप्" "ङ्याप्प्रातिपदिकात्" "स्त्रियाम्" इत्यतोऽनुवर्त्य 'उगिद्वर्णग्रहणवर्जम्' इति 'समासप्रत्ययविधौ प्रतिषेधः' इत्यस्य बाधकमस्ति तेन तदन्तविधिं कृत्वा व्याचष्टे-**उगिदन्तादिति** ॥ ४ सर्वनामभवतुशब्दस्योगिदन्तत्वान्ङीप् ॥ ५ शत्रन्तभूधातोर्ङीपि "शप्श्यनोर्नित्यम्" इति नुम् ॥ ६ "स्त्रियाम्" "अनुपसर्जनात्" ङीप् इति चानुवर्त्य "अनुपसर्जनात्" इत्यधिकारेण स्त्रीप्रत्यये तदन्तविधिः "स्त्रियाम्" इत्यस्य तदन्तविशेष्यत्वम् "अनुपसर्जनात्" इत्यस्य गृह्यमाणविशेषणत्वं च ज्ञाप्यते इत्यभिप्रेत्याह-**अनुपसर्जनं यदित्यादि** ॥ ७ "स्त्रीभ्यो ढक्" "साऽस्य देवता" उत्सादिभ्योऽञ् "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" "संख्याया अवयवे तयप्" "तेन दीव्यति खनति जयति जितम्" "लवणाट्ठञ्" "त्यदादिषु दृशोऽनालोचने कञ्च" "इण्नशजिसर्तिभ्यः क्वरप्" इति सूत्रैस्तत्तत्प्रत्यया बोद्धव्याः ॥

औत्सी । ऊरुद्वयसी। ऊरुदघ्नी । ऊरुमात्री । पञ्चतयी । आक्षिकी। लावणिकी । यादृशी । इत्वरी । ( नञ्स्नञीकक्ख्युंस्तरुणतलुनाना-मुपसंख्यानम् ) । स्त्रैणी । पौंस्नी । शाक्तीकी । याष्टीकी । आढ्यङ्करणी । तरुणी । तलुनी ॥ **यञश्च ४।१।१६** ॥ यञन्तात् स्त्रियां ङीप्स्यात् ॥ अकारलोपे कृते—**हलस्तद्धितस्य ६।४।१५०॥** हलः परस्य तद्धितयकारस्योपधाभूतस्य लोप ईति परे ॥ गार्गी ॥ **प्राचां ष्फ तद्धितः ४।१।१७॥** यञन्तात् ष्फो वा स्यात्स च तद्धितः ॥ **षिद्गौरादिभ्यश्च ४।१।४१॥** षिद्भ्यो गौरादिभ्यश्च स्त्रियां ङीष् स्यात् ॥ गार्ग्यायणी । नर्तकी ॥ गौरी । अनडुही । अनड्वाही । आकृतिगणोऽयम् ॥ **वयसि प्रथमे ४। १ । २० ॥** प्रथमवयोवाचिनोऽदन्तात् स्त्रियां ङीप्स्यात् ॥ कुमारी ॥ **द्विगोः ४ । १ । २१ ॥**

---

१"स्त्रीपुंसाभ्यां नञ्स्नञौ–" "शक्तियष्ट्योरीकक्" "आढ्यसुभगस्थूल–"इति सूत्रैः प्रत्यया बोध्याः ॥ २ 'अयञश्च' इति च्छेदो भाष्यसंमतः । तेन "गर्गादिभ्योऽयञ् " इति सूत्रविहितोऽयञेव गृह्यते, न तु 'द्वीपादनुसमुद्रं यञ्' "देवाद्यञञौ" इति विहितो यञ् । तेन दैव्या द्वैप्या इत्यत्र ङीब् न किं तु टाबेव ॥ तथा चाकारस्येत्संज्ञालोपयोः शिष्टं प्रयोगेषूपलभ्यमानभागमेवाह–**यञन्तादिति** ॥ ३गर्गशब्दान्त्यस्याकारस्य "यस्येति च" इत्यनेन लोपे कृते"गार्ग् य ई" इति स्थिते इति शेषः॥४"भस्य" "ढे लोपोऽकद्र्वाः" "यस्येति च" "सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः" इत्यतोऽनुवर्त्याह–**यकारेति** ॥५"यञश्च" इत्यतोऽनुवर्त्याह–**यञन्तादिति** ॥ ६ " अन्यतो ङीष् " "स्त्रियाम् " इत्यतोऽनुवर्त्याह–**स्त्रियां ङीषिति** ॥ ७ ष्फेणोक्तेऽपि स्त्रीत्वे षित्त्वसामर्थ्यान्ङीषित्याह–**गार्ग्यायणीति** ॥ ८"आमनडुहः स्त्रियां वा" इति वार्तिकात् ॥९"ऋन्नेभ्यो ङीप्" "अनुपसर्जनात्"–

अदन्ताद् द्विगोर्ङीप्स्यात् ॥ त्रिलोकी ॥ अजादित्वात्रिफला । त्र्यनीका सेना ॥ **वर्णादनुदात्तात्तोपधात्तो नः ४।१।३९ ॥** वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनात्प्रातिपदिकाद्वा ङीप् तकारस्य नकारादेशश्च । एता, एनी । रोहिता ॥ रोहिणी ॥ **वोतो गुणवचनात् ४।१।४४॥** उदन्तात् गुणवाचिनो वा ङीप्स्यात् ॥ मृद्वी, मृदुः ॥ **बह्वादिभ्यश्च १।४।४५ ॥** एभ्यो वा ङीष् स्यात् । बह्वी, बहुः । ( कृदिकारादक्तिनः ) । रात्री, रात्रिः । ( सर्वतोऽक्तिन्नर्थादित्येके ) । शकटी । शकटिः ॥ **पुंयोगादाख्यायाम् ४ । १ ।४८ ॥** या पुमाख्या पुंयोगात् स्त्रियां वर्तते ततो ङीष् ॥ गोपस्य स्त्री गोपी । ( पालकान्तान्न ) ॥ **प्रत्ययस्थात्का-**

---

-"अजाद्यतः"-इत्यतोऽनुवर्त्याह-**अदन्तादिति** ॥ " वयस्यचरमे" इति पाठेन 'वधूटी चिरण्टी' ॥ १ " अजाद्यतष्टाप् " " स्त्रियाम् " " ऋन्नेभ्यो ङीप् " इत्यतोनुवर्त्याह-**अदन्तादिति** ॥ २ "स्त्रियाम्" "ऋन्नेभ्यो ङीप्" "अनुपसर्जनात् " इत्यतोऽनुवर्तमानेषु ' अनुपसर्जनात् ' इति गृह्यमाणविशेषणं निर्णीतम् । तथापि ' त्र्येण्या शलल्या ' इति गृह्यप्रयोगानुरोधेन प्रकृतसूत्रे तदन्तविशेषणमेवेत्यभिप्रेत्याह-**तदन्तादनुपसर्जनादिति** ॥ ३ "अनुपसर्जनात् " "स्त्रियाम्" "अन्यतो ङीष् " इत्यतोऽनुवर्त्य विशेषणे तदन्तविधिं च कृत्वाह-**उदन्तादिति** ॥ ४ अन्यतो ङीष् " "वोतो गुण-" इत्यतोऽनुवर्त्याह-**वा ङीषिति** ॥ ५ "अजाद्यतः-" "स्त्रियाम्" "अन्यतो ङीष्" इत्यतोऽनुवर्त्याह-**स्त्रियामिति** योगश्चात्र न दाम्पत्यलक्षण एव गृह्यते किं तु जन्यजनकभावलक्षणः भगिनीभ्रातृलक्षणश्च गृह्यते । तेन कैकयी देवकी श्याली इत्यादयश्च सिध्यन्ति ॥

**त्पूर्वस्यात इदाप्यसुपः ७।३।४४॥** प्रत्ययस्थात्कात्पूर्वस्याकारस्येकारः स्यादापि स आप्सुपः परो न चेत्॥ गोपालिका। अश्वपालिका॥ सर्विका। कारिका। अतः किम्—नौका। प्रत्ययस्थात्किम्शक्नोतीति शका। असुपः किम्—बहुपरिव्राजका[1] नगरी (सूर्याद्देवतायां चाब्वाच्यः)। सूर्यस्य स्त्री देवता सूर्या। देवतायां किम्(सूर्यागस्त्ययोश्छे च ङ्यां च) यलोपः। सूरी—कुन्ती। मानुषीयम्॥

**इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ४।१।४९॥** एषामानुगागमः स्यात् ङीष्[2] च॥ इन्द्रस्य स्त्री—इन्द्राणी। वरुणानी। भवानी। शर्वाणी। रुद्राणी। मृडानी। (हिमारण्ययोर्महत्त्वे)। महद्धिमं हिमानी। महदरण्यमरण्यानी। (यवाद्दोषे)। दुष्टो यवो यवानी। (यवनाल्लिप्याम्)। यवनानां लिपिर्यवनानी। (मातुलोपाध्याययोरानुग्वा)। मातुलानी, मातुली। उपाध्यायानी, उपाध्यायी। (आचार्यादणत्वं

---

१ 'बहवः परिव्राजकाः यस्यां सा बहुपरिव्राजका इत्यत्र बहुव्रीहौ परिव्राजकशब्दोत्तरवर्तिनो जसः "सुपो धातु—" इति लुकि बहुपरिव्राजकप्रातिपदिकाद् जातो यष्टाप् स "प्रत्ययलोपे प्रत्ययलक्षणम्" इति प्रत्ययलक्षणेन सुपः पर एवेति न भवत्येवात्रेकार इति भावः॥ २ "स्त्रियाम्" "अजाद्यतः" इत्यतोऽनुवर्तते। आनुगागमे नान्तत्वान् ङीपि 'अन्तर्वत्नी' इत्यादाविव सिद्धे 'ङीष् च' इति लेखो विचिन्त्यप्रयोजनः॥

च )। आचार्यस्य स्त्री-आचार्यानी । ( अर्यक्षत्रियाभ्यां वा स्वार्थे )। अर्याणी, अर्या । क्षत्रियाणी, क्षत्रिया ॥ **क्रीतात्करणपूर्वात् ४।१।५०** ॥ क्रीतान्तादृदन्तात् करणादेः स्त्रियां ङीष् स्यात् ॥ वस्त्रक्रीती । केचिन्न । धनक्रीता ॥ **स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ४।१।५४** ॥ असंयोगोपधमुपसर्जनं यत् स्वाङ्गं तदन्तादृदन्तात् ङीष् वा स्यात् ॥ केशानतिक्रान्ता--अतिकेशी, अतिकेशा । चन्द्रमुखी, चन्द्रमुखा । असंयोगोपधात्किम् । सुगुल्फा--उपसर्जनात्किम्--शिखा ॥ **न क्रोडादिबह्वचः ४ । १।५६** ॥ क्रोडादेर्बह्वचश्च स्वांगान्न ङीष् ॥ कल्याणक्रोडा । आकृतिगणोऽयम् ॥ सुजघना ॥ **नखमुखात्संज्ञायाम् ४।१।५८** ॥ न ङीष् ॥ **पूर्वपदात्संज्ञायामगः ८ । ४ । ३** ॥ पूर्वपदस्थान्निमित्तात्परस्य नस्य णः स्यात्

---

१ "स्त्रियाम्" "अजाद्यतः--" "अन्यतो ङीष्" इत्यतोऽनुवर्त्याह--**क्रीतान्तादिति** ॥ २ 'गतिकारकोपपदानां कृद्भिः समासवचनं प्राक्सुबुत्पत्तेः' इत्यस्याप्रवृत्तौ सुबन्तेन समासे सुपः प्राक् टाप उत्पत्त्याऽदन्तत्वाभावादेव न ङीष् इत्याह--**क्वचिन्नेति** ॥ ३ "स्त्रियाम्" अजाद्यतः" "अन्यतो ङीष्" "अस्वाङ्गपूर्वपदाद्वा" इत्यतोऽनुवर्त्याह--**अदन्तादिति** ॥ ४ 'अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम्। अतत्स्थं तत्र दृष्टं च तेन चेत्तत्तथा युतम् ॥' इति स्वाङ्गलक्षणं केशमुखादिषु समानमेव ॥ ५ "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" इत्यनुवर्त्याह--**स्वाङ्गादिति** ॥ ६ "न क्रोडादिबह्वचः" इत्यतोऽनुवर्त्याह--**न ङीषिति** ॥ ७ 'रषाभ्यां नो णः--' इत्यनुवर्त्याह--**निमित्तादिति** ॥

संज्ञायां न तु गकारव्यवधाने ॥ शूर्पणखा । गौरमुखा । संज्ञायां किम्—ताम्रमुखी कन्या ॥ **जातेरस्त्रीविषयादयोपधात् ४ । १ । ६३॥** जातिवाचि यन्न च स्त्रियां नियतमयोपधं ततः स्त्रियां ङीष् स्यात् ॥ तटी । वृषली । कठी । बह्वृची ॥ जातेः किम्—मुण्डा । अस्त्रीविषयात्किम्-बलाका । अयोपधात्किम् क्षत्रिया । ( योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः ) । हयी । गवयी । मुकयी । हलस्तद्धितस्येति यलोपः । मनुषी ( मत्स्यस्य ङ्याम् ) यलोपः । मत्सी ॥ **इतो मनुष्यजातेः ४ । १ । ६५ ॥** ङीष् ॥ दाक्षी ॥ **ऊङुतः ४।१।६६ ॥** उदन्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूङ् स्यात् । कुरूः । अयोपधात्किम्—अध्वर्युः ब्राह्मणी ॥ **पङ्गोश्च ४।१।६८ ॥** पङ्गूः ॥ ( श्वशुरस्योकाराकारलोपश्च ) । श्वश्रूः ॥ **ऊरूत्तरपदादौपम्ये ४।१।६९ ॥** उपमानवाचिपूर्वपदमूरूत्तरपदं

---

१ "स्त्रियाम्" "अजाद्यत-" "अन्यतो ङीष्" इत्यतोऽनुवर्त्याह-**स्त्रियामित्यादि** ॥ २"आकृतिग्रहणा जातिः" 'लिङ्गानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या' 'गोत्रं च चरणैः सह ॥' इति चत्वारि जातिलक्षणानि क्रमश उदाहरति-**तटीत्यादि** ॥ ३"मनोर्जातावञ्यतौ षुक् च"इति **मनुशब्दात्** 'यत्षुकोः कृतयोर्मनुष्यशब्दे हलः षुकः परस्तद्धितयकारो वर्तत' इति यलोपे मनुषीति सिध्यति ॥ ४ "स्त्रियाम्" "अन्यतो ङीष्" इत्यतोऽनुवर्त्याह-**ङीषिति** ॥ ५"स्त्रियाम्" "जातेरस्त्रीविषयादयोपधात्" "इतो मनुष्यजातेः" इत्यतोऽनुवर्त्याह-**अयोपधादिति** ॥ ६ पंगुशब्दस्य गुणवाचित्वेन जातिवाचित्वाभावात्पूर्वेणाप्राप्त उङ् विधीयते ॥ ७"उवर्णादूङ् विधीयते" इति "ङ्याप्प्रातिपदिकात्" इति सूत्रभाष्योक्तेः-

-यत्प्रातिपदिकं तस्मादूङ् स्यात् ॥ करभोरूः ॥ **संहितशफलक्षणवामादेश्च ४।१।७०॥** अनौपम्यार्थं सूत्रम् ।संहितोरूः । शफोरूः लक्षणोरूः । वामोरूः ॥ **शार्ङ्गरवाद्यञो ङीन् ४ । १ । ७३।** शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन् स्यात् ॥ शार्ङ्गरवी । बैदी । ब्राह्मणी । ( नृनरयोर्वृद्धिश्च ) । नारी ॥ **यूनस्तिः ४ । १ । ७७ ॥** युवन्शब्दात् स्त्रियां तिः प्रत्ययः स्यात् ॥ युवतिः ॥

इति स्त्रीप्रत्ययाः ।

---

-श्वश्रूशब्दे तनूशब्दाद्विवदव्युत्पन्नत्वमेव ॥ १ "ङ्याप्प्रातिपदिकात्" "ऊङुतः" इत्यतोऽनुवर्त्याह-**प्रातिपदिकामिति** ॥ २ "ऊङुतः" "ऊरूत्तरपदात्" "प्रातिपदिकात्" इत्यतोऽनुवर्तते ॥ 'वामादिशब्दे' आदिशब्दः प्रकारवाची । तेन 'पीवरोरु पिबतीह बर्हिणः' इत्यादयोऽपि साधव एवेति बोध्यम् ॥ ३ "स्त्रियाम्" "अजाद्यतः-" "जातेः-" इत्यनुवर्त्याह-**अकार** इत्यादि ॥ ४ युवन्शब्दात् तिप्रत्यये "स्वादिष्वसर्वनाम--" इति पदसंज्ञायां "न लोपः प्रातिपदिका-" इति नकारलोपे युवतिरिति सिद्धम् ॥

श्रीः-

क्षेमराजप्रार्थितेन शिवदत्तेन धीमता ।
रचिता टिप्पणीयं श्रीदधिमथ्यै समर्पिता ॥

अमिलालसुतो धीमान् रत्नीदेव्यास्तु गर्भजः ।
शिवनारायणः शास्त्री शिवशक्त्योरुपासकः ॥

शिवदत्तप्रसादेन बालानां सुखहेतवे ।
कृतवान् टिप्पणीं पूर्णां तया तुष्यतु शङ्करः ॥

शास्त्रान्तरे प्रविष्टानां बालानां चोपकारिका ॥
कृता वरदराजेन लघुसिद्धान्तकौमुदी ॥ १ ॥

इति श्रीवरदराजकृता लघुसिद्धान्तकौमुदी समाप्ता ॥



पुस्तक मिलनेका ठिकाना—

खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" स्टीम्-प्रेस,
बम्बई.

गङ्गाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेङ्कटेश्वर" स्टीम्-प्रेस,
कल्याण-बम्बई.

# क्रय्यपुस्तकानि ( व्याकरण-ग्रन्थाः )



| नाम | की. रु. आ. |
|---|---|
| सारस्वत-सम्पूर्ण चन्द्रकीर्तिटीकासहित ग्लेज. .... | ४-० |
| सारस्वत-सम्पूर्ण चन्द्रकीर्तिटीकासहित रफ .... | ३-८ |
| सारस्वत-चन्द्रकीर्तिटीकासहित ( पूर्वार्द्ध ) ग्लेज.... | १-८ |
| सारस्वत-चन्द्रकीर्तिटीकासहित (पूर्वार्द्ध) रफ .... | १-४ |
| सारस्वत-चन्द्रकीर्तिटीकासहित (उत्तरार्द्ध ) ग्लेज .... | २-८ |
| सारस्वत-चन्द्रकीर्तिटीकासहित ( उत्तरार्द्ध ) रफ .... | २-४ |
| सारस्वत-सुबोधिनी भाषाटीकासहित ( पूर्वार्द्ध ) इससे विद्यार्थी सुगम रीतिसे समझ सकते हैं. .... | २-४ |
| सारस्वतसूत्रवृत्ति-अर्थात् सारस्वतके सूत्रोंकी सरल सुविस्तृत और शंका समाधान युक्त सर्वोत्तम संस्कृत व्याख्या पं० हरिद्वारी मिश्रविरचित। विद्यार्थी तथा पण्डितवर्ग सबके बड़े कामकी है. .... .... | २-० |
| सारस्वत-श्रीमदनुभूतिस्वरूपाचार्यप्रणीत और पण्डितवय-माधवकृत विवरणोपेत. .... | २-८ |

| नाम. | की. रु. आ. |
|---|---|
| **सिद्धान्तकौमुदी**—महामहोपाध्याय भट्टोजिदीक्षितविरचित, महामहोपाध्याय पं० शिवदत्तशर्मकृत टिप्पणीसहित । पाणिनीयशिक्षा, परिभाषा, अष्टाध्यायी, गणपाठ, धातुपाठ, लिंगानुशासन, सूत्रपाठ, अकाराद्यनुक्रमणिका, धातुसूची और लघुत्रिमुनिकल्पतरु अर्थात मुनित्रयजीवनवृत्तान्तसमेत. .... .... .... | ४—० |
| **सिद्धान्तकौमुदी**—तत्त्वबोधिनीटीकासहित सम्पूर्ण। इसके लौकिकभागमें—**तत्त्वबोधिनी** टीका, वैदिकभागमें—**सुबोधिनी** टीका, लिंगानुशासनमें—**चन्द्रकला टीका** और महामहोपाध्याय पं० शिवदत्तविरचित नूतन परिवर्द्धित टिप्पणियां संयुक्त की गयी हैं तथा गणपाठ, धातुपाठ, लिंगानुशासन, पाणिनीयशिक्षा, परिभाषापाठ, सूत्रसूची, वार्तिक, गणसूत्र, परिभाषासमुच्चितसूची, उणादिसूत्रसूची, धातुसूची, फिट्सूत्रसूची व लिंगानुशासनसूची तथा लघुत्रिमुनिकल्पतरु अर्थात् पाणिन्यादिमुनित्रयकी चरितावली भी संयुक्त है. .... | ६—० |
| **सिद्धान्तकौमुदी**—केवल **तत्त्वबोधिनी** टीका, महामहोपाध्याय पं० शिवदत्तशर्मकृत टिप्पणीसहित पूर्वार्द्ध-मात्र. ... ... | २—० |